जैमिनीयेऽपि तन्त्रे 'अप्राप्ता चानुपपत्तिः' इति सूत्रे त्रयः पाठभेदाः, "विरोधे त्वनपेक्षं" इत्यत्र सूत्रे द्वौ पाठभेदौ च दृष्टाः । इमे च पाठभेदाः प्रामाणिकत्वेन व्याख्यातृभिः व्याख्याताश्च । अतो नायं दोष इति ॥

(७) अपिच – इदमत्रावधेयम्

कौस्तुभकारा इमे दीक्षिताः तत्र श्रीमध्वभाष्यादौ उदितानां पदानां केषाञ्चित् असाधुत्वमाविष्कुर्वन्ति; अथ तत्र तत्साधुतासम्पादनाय प्रवृत्तस्य टीकाग्रन्थस्य आशयं अनूद्य दूषयन्ति च ।

परन्तु बहुषु स्थलेषु टीकाकारैर्येषां पदानां साधुत्वं समर्थितम्; तेषां पदानां टीकाकारैः आशङ्कितप्रकारमसाधुत्वं परं प्रकाशयन्ति; न तु टीकाकारोक्तपरिहारक्रमं अनुवदन्ति । नापि निराकुर्वन्ति । अत इत्थं संशय उदेति—

यत्—इमे दीक्षिताः आन्तं भाष्यटीकाग्रन्थाननवलोक्यैव सर्वान् अखण्डयामेति अनृतं वदन्ति; आहोस्वित् एषां पदानां साधुत्वसम्पादनप्रकारं टीकाचार्योक्तं साधुं मन्यमाना अपि सर्वो भागः खण्डित इति परान् प्रतारयन्ति -- इति ॥

(८) उपसंहारः

सुजनानां सविधे पुनरिदं विज्ञापनम् ।

ईदृशं ग्रन्थं प्रणीतवतां श्रीमुष्णं श्री सेतुमाधवाचार्याणां विषये कृतज्ञताप्रकाशनापरपर्यायं एतद्ग्रन्थमुद्रणौपयिकद्रव्यवितरणं यथाशक्ति आरचयेयुः । अशक्ताश्चेत् एतद्ग्रन्थोपसंहारोक्तप्रमेयं - इतरमतहेयताज्ञानपुरःसरं श्रीमध्वाचार्यमतोपादेयतानिश्चयं गुरुमुखात सम्पाद्य कृतार्था भवेयुरिति ॥

श्रीकृष्णार्पणमस्तु ॥

इति सज्जनानुचरः,
न्यायमीमांसाद्वय - विद्वच्छिरोमणिः
**चतुर्वेदी रामचन्द्राचार्यः**
मीमांसाप्रधानाध्यापकः

महीशूरपुरमहाराज
संस्कृतमहापाठशाला
मैसूर
10—8—57.

श्रीः

श्रीगुरुभ्यो नमः

श्रीमते श्रीनिवासाय नमः

# भूमिका

सनीरनीरदप्रख्यं सच्चिदानन्दविग्रहम् ।
रमारमणमीशेशं विठ्ठलं समुपास्महे ॥

आपाद मौलिपर्यन्तं गुरूणामाकृतिं स्मरेत् ।
तेन विघ्नाः प्रणश्यन्ति सिद्ध्यन्ति च मनोरथाः ॥

अथ खल्वस्मिन् भारते वर्षे को नाम न जानाति विपश्चित् – यत् सर्वेष्वपि प्रत्यक्षादिषु प्रमाणेषु वेद एव प्रमाणमूर्धन्य इति ॥ यतः स प्रत्यक्षादिभिः प्रमाणैरप्यनवबोधकस्यापि वस्तुनः प्रतिपादको भवति ॥ उक्तं हि—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति ।

वाक्यपदीयेऽपि—

न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणामपि यज्ज्ञानं तदप्यागमहेतुकम् ॥

पिप्पलादश्रुतावपि—

"नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति, तस्मादाहुर्वेदाः" इति ॥

तं च वेदनिचयम् —

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

इत्युक्तया दिशा, तदा तदा भगवान्नारायणो मत्स्याद्यनेकानवतारानास्थाय कृतसाधु-धर्मपरित्राणोऽपि पुनः कालवशात्, सदुपदेशकपरम्पराऽभावात् यथार्थज्ञानहीनेषु स्वधर्ममनुष्ठातुमसमर्थेषु, अतएव धर्ममार्गात्प्रच्यावितेषु साधुजनेषु; ब्रह्मादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावतीर्य आस्तिकलोकाननुग्रहीतुं ऋगादिभेदेन विभज्य, तदर्थनिर्णायकान् साक्षाद्ब्रह्मप्रतिपादकांश्चोपनिषद्भागान् विविच्य, स्वतःप्रमाण-भूतस्याप्यपौरुषेयस्य नित्यस्य तस्य व्याख्याव्याजेन — "महत्त्वाद्भारवत्त्वाच्च महाभारत उच्यते", "भारतः पञ्चमो वेदः" इति सर्वैरपि वेदतुल्यतयाऽभिमन्यमानं भारताख्यमितिहासरत्नं, भगवत्पारम्यप्रतिपादकानि पुराणानि, सर्ववेदार्थरहस्य प्रतिपादकत्वेन तदर्थनिर्णयाय ब्रह्मसूत्राणि च विरच्य, सर्वेभ्य उपदिश्य, साधुजनान् उद्धारेति विदितचरमेव समेषामपि विदुषाम् ॥

तेषां च ब्रह्मसूत्राणां — "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वचनमनुसन्दधानाः "व्याख्यानतो विशेषप्रतिपत्तिः न हि सन्देहादलक्षण" मिति न्यायेन, करालकलिकालकलुषितानां भागवतानां सज्जनानां महते उपकाराय, भक्तजन-संरक्षणबद्धदीक्षस्य भगवतो नारायणस्य नियमनं शिरसा वहन्तः—

भूभारक्षपणे विष्णोः प्रधानाङ्गं हि मारुतिः ।
मागधादिवधादेव दुर्योधनवधादपि ॥

इत्युक्तदिशा बलकार्यं प्रदर्शयतो रामकृष्णावतारयोरिव. श्रीवेदव्यासावतारे ज्ञानकार्यं प्रदर्शयितुकामस्य, तदनुकूलं तृतीयमवतारं कर्तुमभिलषितस्य, भगवदत्यन्तान्तरङ्ग-परिजनस्य परमकारुणिकस्य भगवतो वायोः प्रधानांशत्वेनावतीर्य, श्रीमदानन्द-तीर्थनाम्ना प्रसिद्धिमापन्ना भगवत्पादा भाष्यमकुर्वन् ॥

तत्र हि भाष्ये विचित्रतरनानाशक्तिकनिखिलचराचरप्रपञ्चनिर्माणकारणस्य चातुर्याद्यद्भुतावाङ्मनसगोचरविचित्रतरशक्तिमतः अनन्ताम्नायस्मृतीतिहासपुराणप्रतिपाद्य-अनन्तामलकल्याणगुणरत्नरत्नाकरस्य निखिलचेतनाचेतनविलक्षणस्य भगवतो वासुदेवस्य सर्वदेवोत्तमत्वादिकं व्यवस्थाप्य, स्वावतारप्रयोजनं निर्वर्त्य, तं बहुधा तोषयामासुराचार्याः श्रीमदानन्दतीर्थभगवत्पादाः॥ किमतोऽन्यद्भगवतः प्रियतमं नाम? उक्तं हि गीताचार्येण—

"उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ ७ १८.

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥" ७ १९.

'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' ॥ इति । ९-२९.

भक्तजनानुजिघृक्षुणा करुणावरुणालयेन भगवता प्रेरिते वायौ आनन्दतीर्थनाम्ना भुवमवतीर्णे, इतरे च केचन देवाः, वैष्णवाग्रेसरत्वेन भूमावमवतीर्णाः तन्मतानुवर्तिनः— "इदं वा तत्त्वं, अदो वे"ति सन्दिहानानां, केनचिन्निमित्तेन संसारकान्तारेऽस्मिन् परिभ्रमतां, समीचीनं पन्थानमलभमानानां साधुजनानां सन्मार्गपरिज्ञानाय सर्वेषामाम्नायानामर्थनिश्चयः, 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिभिः — "भगवान्नारायणो मुख्यवृत्त्या प्रतिपाद्यः, स एव सर्वोत्तमः, तस्य प्रसाद एव सर्वाभीष्टप्रदः, प्रसादहेतुस्तदर्चनादिः परमो धर्मः" इति तत्र तत्र बहुधा प्रतिपाद्य श्रीमदाचार्यग्रन्थव्याख्याव्याजेन, सुगृहीतनामधेयाः तपःप्रभावसमुत्पन्ननिखिलाम्नायरहस्यार्थज्ञानाः श्रीमज्जयतीर्थादयः सद्युक्तिनिस्सज्जनान् बोधयामासुः ॥ उक्तं हि —

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदितकिसलयः पुष्पितोऽयं जयीन्द्रात्
अद्य श्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ॥ इति ।

सत्येवं; एतन्मतस्थापकान्, भगवतो नारायणस्य पारम्यप्रतिपादकांश्च ग्रन्थान् प्रद्विषन्तः केचन, तान् यथाकामं निन्दन्तः, तद्ग्रन्थस्थेषु साधुष्वपि शब्देषु अपशब्दत्वेन कथञ्चिन्महता यत्नेन परिकल्पयन्तो दोषैकदृशो दोषमुद्भावयन्ति स्म । त एते नैव लभन्ते परां गतिमित्यत्र गीताचार्या एव प्रमाणम् ॥ तैरुक्तं हि —

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥

क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम् ॥ इति ।

सत्यां चैवं वस्तुस्थितौ; श्री भट्टोजिदीक्षितः श्रीमदानन्दतीर्थीये भाष्ये सुशब्दानप्यपशब्दत्वेन दूषयन्, विष्णोः पारम्यप्रतिपादकान् सिद्धान्तान् खण्डयन्,

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

इत्युक्तदिशा - भगवत्प्रसादासादितविनिर्मलविज्ञानकल्पकान् महतस्तान् उच्चावचैर्भाषणैस्तिरस्कुर्वन्, "गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः" इति न्यायस्य प्रथमोदाहरणमावहतीति महदिदं विषादस्थानमिति निर्मत्सरा विवेकिनो जानन्त्येव सर्वे ॥

यद्यप्यप्पय्यदीक्षितादिभिः प्रदर्शितानां दूषणाभासानां श्रीमद्विजयीन्द्रतीर्थप्रभृतिभिः सम्यक् खण्डनमारचितमेवेति कृतं मृतसर्पमारणेन; तथापि तदिदमनाकलय्य अप्पय्यदीक्षितोक्तानेवांशान् परिगृह्य स्वमतिवैभवं किंचित्प्रकटयितुं "तत्त्वकौस्तुभ" नामानं ग्रन्थं पुनः प्रवर्तयामासाऽयं भट्टोजिदीक्षितः ॥

ग्रन्थे च तस्मिन् तत्त्वकौस्तुभे "मध्ववराक" इत्यादयश्शब्दा निरङ्कुशं प्रयुक्ताः । नैतच्चित्रं भवितुमर्हति तद्विषये । यतोऽयं भट्टोजिः यदनुग्रहात् यत्पादसेवाप्रसादासादितशब्दशास्त्रस्तं महानुभावं शेषकृष्णाख्यं स्वीयमाचार्यमेव द्वेष्टि बहुशः । तदेतदुद्टङ्कि हि जगन्नाथपण्डितेन मनोरमाकुचमर्दनाख्ये ग्रन्थे—

"पण्डितेन्द्रो जगन्नाथस्स्यति गर्वं गुरुद्रुहाम्" इत्यारभ्य – (२) "गुरुद्वेषदूषितमतीनां यद्यपि पुरुषायुषेणापि न शक्यन्ते गणयितुं प्रमादाः । तथापि दिङ्मात्रेण कानपि कुशाग्रधिषणेषु निरूपयामः" ।

(३) "अतः कोऽयमनयोर्यत्परग्रन्थेष्वाशयकल्पनं, गुरुग्रन्थे विरोधोद्भावनमिति"

(४) "अहो! अयं महानस्य द्रोहोद्रेको, यदुदासीनानां प्राचां ग्रन्था आशयविशेषवर्णनेन समर्थ्यन्ते; न च समर्थ्यन्ते गुरूणामिति"

(५) "इत्थं चोत्सूत्रगतकौस्तुभग्रन्थस्सर्वोऽप्यसङ्गत इति ध्येयम्। अधिकं कौस्तुभखण्डनादवसेयम्" इति।

अन्यत्र च— (काव्यप्रकाशव्याख्याने)

"दृप्यद्द्राविडदुष्टदुर्ग्रहवशान्म्लिष्टं गुरुद्रोहिणा
यन्म्लेच्छेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना।" इति।

इतरत्रापि — (शब्दकौस्तुभखण्डने शाणोत्तेजने)

"अप्पय्यदुर्ग्रहविचेतितचेतनानां
आर्यद्रुहामयमहं शमयेऽवलेपान्" इत्यादिना॥

अयं भट्टोजिदीक्षितः, आदौ परमभागवतो वैष्णव आसीत्; यत एव —

"समर्प्य लक्ष्मीरमणे भक्त्या श्रीशब्दकौस्तुभम्।
भट्टोजिभट्टो जनुषः साफल्यं लब्धुमीहते॥ इति।

श्रीशस्त्वाऽवतु मापीह दत्ताच्चे मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥"

इत्यादिभिर्भगवदनुग्रहं प्रेप्सुः नारायणमस्तावीत्। गच्छता कालेन अप्पय्यदीक्षित-सहवाससवासनावासितान्तःकरणो वैष्णवद्वेषं सम्पादयामासेति केचिदाशेरते॥

अपि च — वैयाकरणमूर्धन्येनानेन भट्टोजिना बहवः प्राचां महतां प्रयोगाः वैयाकरणसम्मत्याद्युपपादनेन महान्तं परिश्रममास्थाय साधुतया समर्थिताः॥ तद्यथा—

(१) "सर्वोऽप्येकदेशोऽह्ना समस्यते—सङ्ख्याविसायेति ज्ञापकात्। मध्याह्नः, सायाह्नः॥ केचित्तु सर्वोऽप्येकदेशः कालेन समस्यते, न त्वह्नैव। ज्ञापकस्य सामान्यापेक्षत्वात्। तेन, मध्यरात्रः, 'उपारताः पश्चिमरात्रगोचराः' इत्यादि सिद्धम्॥"

(२) 'समानस्येति योगो विभज्यते, तेन—सपक्षः, साधर्म्यम्, सजातीय-मित्यादि सिद्धमिति काशिका। अथवा सहशब्दः सदृशवचनोऽप्यस्ति। सदृशस्सख्या=ससखीतिवत्'

(३) "शौरिरिति तु बाह्वादिवत् इञ्" (बाह्वादेराकृतिगणत्वादिति भावः)

(४) ' कुस्म इति धातुः = कुत्सितस्मयने वर्तते । अथवा कुस्म इति प्रातिपादिकं, ततो धात्वर्थे णिच् '

(५) कथं ' विस्मापयन् विस्मितमात्मवृत्तौ ' इति ? विस्माययन्नित्येव पाठ इति सांप्रदायिकाः । यद्वा - विस्मापयन्निति ण्यन्ताण्णौ शता इति व्याख्येयम् ' ।

(६) " अथ कथं ' उदयति विततोर्ध्वरश्मिरज्जा ' विति माघः ? ' इटकिट-कटी ' इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । चक्षिङो ङित्करणाज्ज्ञापकात् "

(७) " कौरव्याः पशवः, तस्यामेव रघोः पाण्ड्याः " इत्यादौ कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । ' रघूणामन्वयं वक्ष्ये ' ' विरुद्ध्यमाना यदुभिः कथञ्चित् ' इति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया । ' माद्रीसुतौ ' इत्यत्र तु ह्रस्व एव पाठ इति हरदत्तः, भर्गादित्वं वा कल्प्यम् ॥ केकयी - इत्यत्र तु जन्यजनकभावे लक्षणे पुंयोगे ङीष् ॥ "

इत्यादिभिः प्राचां प्रयोगाणां साधुत्वसम्पादने बद्धादरोऽयं विद्वन्मणिः, श्रीमट्टीकाचार्यादिभिः सप्रमाणोपपत्ति सुसाधितसाधुत्वेषु श्रीमदानन्दतीर्थीयेषु केषु-चिच्छब्देषु परं न केवलमौदासीन्यं प्रकटीचकार; किन्तु साग्रहमसाधुतामप्या-पादयामासेति, विदुषामरुन्तुदोऽयं विषयः ॥ अहो ! कीदृशोऽयं दुराग्रहविजृम्भस्य परीवाहप्रभावः । अत एवोक्तमभियुक्तैरिति प्रतिभाति—" अभिनिवेशवशीकृतचेतसां बहुविदामपि सम्भवति भ्रमः " इति ॥

अस्य तत्त्वं निर्मत्सरास्सहृदया विद्वत्तल्लजा एव विभावयन्त्विति तेषां वशे वितरामः ॥

तत्तादृशस्य तत्त्वकौस्तुभस्य खण्डने प्रवृत्ता अस्मदाचार्यपादाः अतिक्रान्ता-शीतिकेऽपि वार्धके, अमुद्रितस्य तत्त्वकौस्तुभभागस्यावलोकनाय मासेनैकेन मैसूरु-नगरमध्यूष्य, तत्रोक्तं दूषणजातं समालोच्य, प्रत्यधिकरणं समाखण्ड्य च मुद्रणा-याऽदुः । मुद्रणोपयुक्ता मातृकास्सर्वा अपि आचार्यैरेव स्वयं विलिखिताः । चरमेऽपि वयसि पठनलेखनयोर्नापेक्षितमितरेषां साहाय्यमासीदिति महदिदमाश्चर्यम् ॥

एवं वैष्णवलोकस्य नितान्तमुपकुर्वतां "आर्याचार्य" कुलोत्तंसानां "व्याकरणाचार्ये" ति प्रसिद्धिमापन्नानां, महामहोपाध्याय — वैयाकरणकेसरीत्यादि बिरुदभूषित श्रीसुब्बरायाचार्यात्मजानां महतामेषां विषये सर्वोऽपि लोकः कृतज्ञो भवेदिति मन्यामहे

महान्त एते आचार्याः — "दीपादुत्पन्नप्रदीप" न्यायेन श्रीमत्तातपादचरणनलिनसेवासमुपलब्धशब्दब्रह्मविचारवैदुष्यवन्तः, प्रायः षट्त्रिंशान् संवत्सरान् श्रीपद्पुरी विराजमान श्रीवेङ्कटेश्वरसंस्कृतमहाकलाशालायां व्याकरणप्रधानाध्यापकपदमारूढाः, ततो विश्रान्तिमापन्नाः, श्रीशुकपुर्यां तदानींतनद्वैतवेदान्तपाठशालायामध्यापकपदं अलङ्कुर्वाणाः, केवलं लक्ष्यन्तविद्याविचारेण कालं यापयन्तः, "श्रीव्यासपाणिनिभावनिर्णया" ख्यस्य, अभूतपूर्वविमर्शनात्मकस्य, परस्सहस्रेभ्यो वर्षेभ्यो निमीलितं वैयाकरणलोकस्य चक्षुरुन्मीलयतो, विपश्चिदपश्चिमलोकहृदयङ्गमस्य अतिविशिष्टस्य ग्रन्थस्य प्रकाशनेन 'पैतृकं धनमिव' लब्धानन्यसुलभमहामहोपाध्यायबिरुदभूषिताः, प्रसङ्गादुपलब्धस्य "तत्त्वकौस्तुभस्य" खण्डने प्रवृत्ताः, ग्रन्थमेनं संपूर्णं विलिख्य, न केवलं ग्रन्थमिमं भगवच्चरणारविन्दयोः समर्पयामासुः ; अपितु निरन्तरश्रीमद्धयग्रीवमहामन्त्रानुसन्धाननिर्मलीकृतशेमुषीकाः, चरमनाडिकास्वपि विशेषप्रज्ञावन्तः, भगवत्कल्याणगुणगणानुसन्धानैकव्यग्राः, स्वात्मानमपि श्रीश्रीनिवासस्य भगवतश्चरणारविन्दयोस्समर्पयामासुरित्याश्चर्यकरोऽयं विषयः ॥

अत्र तु, निजविपुलमहिमातिशयप्रतिपादकातिरमणीयग्रन्थसमर्पणसन्तुष्टेन परमकारुणिकेन भगवता, निरन्तरनिरवधिकभक्तिभावसमुन्मेषसमर्पितसद्ग्रन्थ इव एतेषामात्माऽपि स्वीकृत इति प्रतिभाति समेषामस्माकम् ॥

एतत्सङ्घटनमात्राकलनेनैव 'एते आचार्या योगसिद्धाः, भगवत्सेवानिर्वहणायैव केवलं भूमाववतीर्णाः, स्वावतारप्रयोजनं परिसमाप्य परमं पदमापुरि'ति तत्त्वमिदं सर्वेषामप्यतिस्फुटं प्रतीयत एव ॥

## कृतज्ञताऽऽविष्करणम्

---

तत्तादृशस्यास्य ग्रन्थस्य समवलोकनेन सन्तुष्टान्तरङ्गैः, श्रीमद्वैष्णवद्वैतसिद्धान्तप्रतिष्ठापनाचार्यत्वादिगुणगणालङ्कृतैः श्रीमत्कूडलीमठाधीशैः सर्वतन्त्रस्वतन्त्रैः

श्री १०८ श्रीरघुवीरतीर्थश्रीपादैरनुगृहीतेन मङ्गलाशंसनेन प्रबन्धोऽयं निर्विघ्नं प्रकाशमगादिति महद्भाग्यमस्माकम् । अतस्तेभ्यः परश्शतं प्राञ्जलिबन्धं प्रणामततिं समर्पयामि ॥

महदिदं च भागधेयमस्माकं, यत्—एतद्ग्रन्थस्य रचनाप्रवृत्तिविषये श्रीमतामाचार्यपादानां समुत्साहमुद्भाव्य, तथा आङ्ग्लभाषायां भूमिकादिकमारचय्य नैकविधान् कर्तव्यानंशाँस्तदा तदा समुपदिश्य, ये च मह्यं महत्साहाय्यमाचरितवन्तः; तेषां महदुपकृतवतां, निरन्तरत्वय्यन्तविद्याविचारनिष्णातानां, प्रथितयशसां, एम्. ए. पिहेच्. डि. इत्याद्युपाधिभाजां, 'महामहोपाध्याय – भारतसिंहे' त्याद्यनेकविधबिरुदभूषित – स्वापे रामचन्द्राचार्यतिमजानां, मद्रपुरराजकीयमहाकलाशालातो विश्रान्तानां, श्री. म. वे. **नागराज शर्मणां** कृते धन्यवादसमर्पणपुरस्सरं कृतज्ञतां निवेदयामि ॥

एवं तत्त्वकौस्तुभस्य मूलग्रन्थस्य सम्पादनेन, ग्रन्थस्यास्य प्रस्तावनाविलेखनेन च महदुपकृतवद्भ्योऽस्मत्सुहृद्भ्यः मैसूरु महाराज संस्कृतमहाकलाशालायां मीमांसाप्रधानाध्यापकेभ्यः 'न्याय - पूर्वोत्तरमीमांसा - विद्वच्छिरोमणिभ्यः' श्री० म० वे० **चतुर्वेदि रामचन्द्राचार्येभ्यो** नितरां धन्यवादान् समर्पयामि ॥

तथैव अत्यावश्यकसामग्रीभूतानां मुद्रणौपयिकानां पत्राणां (Printing papers) वितरणेनोपकृतवतां, बेङ्गलूरुवास्तव्यानां, 'मैसूरास्थानविद्वद्वराणां तर्कवाचस्पति,' श्री म. वे. **श्रीरङ्ग भीमाचार्याणा**मत्यन्तमाधमर्ण्यं वहन्, भूयसीं नतिततिमर्पयामि ॥

ये च महानुभावाः आर्याचार्यवंशतिलकाः विद्यार्थिकल्पद्रुमाः आचार्यपादाः श्रीमन्तः, चिदम्बरक्षेत्रे (M.S.) पाठशालायां विद्यामभ्यस्यन्तं मां, (श्रीमतां महामहोपाध्याय - **श्रीदण्डपाणिदीक्षितमहोदयानां** मुखतः) निशम्य जामातृत्वेन परिगृह्य निखिलमपि शास्त्रार्थमुपदिशन्तः, शिक्षयन्तश्च सदाचारसम्पत्तिं, सर्वदेशसर्वकालसर्वावस्थास्वपि मामकीनयोगक्षेमसम्पादनैकनिरताः, सर्वतश्च सर्वदा साहाय्यमाचरन्तः—न केवलमाचार्याः, नापि केवलं श्वशुरपादाः, नापि चाप्ततमाः, किन्तु सर्वविधबन्धुभूताः, स्वप्राणप्रयाणसमयपर्यन्तमपि मदीयमङ्गलपरम्पराभिवृद्धिसंपादनैकतान-

स्वसर्वविधव्यापाराः, स्वकीयं सर्वस्वं, मम सर्वस्वसर्वस्वभूतां परमामाशिषं च समनुगृह्य, चरमनाडिकास्वपि सन्ततसन्तन्यमानभगवन्महामन्त्रानुसन्धानसमुदञ्चित-स्पन्दमानाधरपुटाः, मम हस्तयोरेव स्वकीयं चरममङ्गलदिव्यदेहमपि विसृज्य परमं पदमवापुः; तत्तादृशेभ्यः परमपावनेभ्यः परमकारुणिकेभ्यः परमकल्याणगुणवृत्त-चारित्रेभ्यः अस्मच्छ्वशुरपादेभ्यः आचार्यदैवतेभ्यः सर्वदाऽहमधमर्णः, न जाने किं वा समर्प्य अनृणी भविष्यामि — ऋते मदीयं सर्वस्वभूतं अञ्जलिभरमिमम्; इति साञ्जलिबन्धं सहस्रकृत्वः प्रणामान् समर्पयामि ॥

एवमन्ते — वस्तुतस्त्वादौ - अपदार्थमिमं जनं पदार्थीकृत्य, सदाचार्यसमाश्रयणसमाकलनादिसम्पदमनुगृह्य, स्वसामीप्यमानाय्य, बाल्यात्प्रभृति स्वीयसेवा-साम्राज्यानुभवसुखमनुगृह्य, न केवलं विद्यार्थिदशायां, किन्त्विदानीमपि तदीयद्रविण-वितरणेन सर्वं कुटुम्बभारमुदूह्य, यस्सर्वदा सर्वतश्च परमया कृपया परिपालयन् विराजते; सोऽयं देवदेवः औदार्यदयादिगुणगणमहोदधिः सौन्दर्यसारः श्रितजन-मन्दारः सदानन्दपरिपूर्णदेहः, श्रीसखः श्रीनिवासः, सदा मन्मनःपङ्कजे सुस्थिरं वसत्विति, तस्य चरणारविन्दयोर्निरन्तरं साञ्जलिबन्धं प्रणतिततिमर्पयामि ॥

एवमेतद्ग्रन्थमुद्रणविषये महान्तं परिश्रममास्थाय ग्रन्थमिदं सादरं मुद्रितवतां श्री तिरुमल - तिरुपति देवस्थन मुद्रणालयकार्यकराणां, कार्यनिर्वाहकाणां, तथा बहु-विधैः प्रकारैर्महदुपकृतवतामस्मत्प्रियसुहृदां च विषये सर्वदा नितरां कृतज्ञोऽस्मि ॥

ग्रन्थस्यास्य मुद्रणविषये 'गच्छतः स्खलनन्यायेन मानुषसुलभाः ज्ञाताऽज्ञाता अनेके दोषा निपतिता भवेयुः; गुणैकपक्षपातिनो निर्मत्सरास्सहृदयवरेण्याः, हंसक्षीरन्यायेन संकलय्य, तान् सर्वान् मर्षयन्तः, परमया कृपया द्वितीयसंस्करणे समीकरणाय मह्यमावेदयन्त्विति सप्रश्रयं साञ्जलिबन्धं चताननिशं प्रार्थये परम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

श्रीवेङ्कटेश्वरप्राच्यमहाकलाशाला,
श्रीपद्मपुरी (तिरुपति).
12—12—57.

इति
बुधजनविधेयः
रा. रामूर्तिशर्मा.

महोपाध्याय - शिरोमणि - विद्यासागर - विद्याभूषणाद्यनेकबिरुदभाजः
के० एल्० व्यासराजशास्त्रिणोऽभिप्रायः

"वाचोयुक्त्या विशीर्णे कुलिशनिशितया कौस्तुभे तत्त्वपूर्वे
भट्टोजेरट्टहासः प्रशममुपगतो मध्वसिद्धान्तमार्गे ।
ग्रन्थेऽस्मिन् सङ्गृहीतैः परमतभिदुरैः खण्डनैः खण्डकल्पैः
पूर्णप्रज्ञस्य हर्षं जनयति परमं माधवस्सेतुपूर्वः ॥"

---

श्रीगुरुभ्यो नमः

श्रीसुब्बरायगुरुवर्यसुतो विपश्चित् श्रीसेतुमाधवगुरुः कुलिशं व्यतानीत् ।
भट्टोजिदीक्षितकुदृष्टिकुतर्कभेदि सत्तर्कमण्डितमनोहरमार्यभोग्यम् ॥

इति

श्रीवेङ्कटेश्व संस्कृतमहाकलाशाला
श्रीपद्मपुरी, १०-१०-१९५७.

ति. कु. वें. न. सुदर्शनाचार्यः
न्यायदर्शनादिविभागाध्यक्षः

---

श्रीशो विजयते

दृष्टस्तत्त्वकौस्तुभकुलिशाख्यो ग्रन्थः, श्रीमद्भिः वैयाकरणकेसरिभिः महामहोपाध्यायैः श्रीसेतुमाधवाचार्यैः प्रणीतः। ग्रन्थावलोकनेन न केवलमाचार्याणां शेमुषीप्रकर्षः व्याकरण एव समुज्जृम्भमाणः प्रदृश्यते, अपि तु सच्छास्त्रेषु सुधादिजटिलग्रन्थेष्वपि ॥

ग्रन्थप्रवृत्तिहेतुनिरूपणावसरे एतद्ग्रन्थकारैरेव यदुक्तम्- दीक्षितस्य सौत्रामणियागनिरतत्वेन पूर्वतनैः स्पष्टीकृतमेव तत्त्वकौस्तुभस्य स्वत्र्याहत्यादिदोषाकरत्वम्; तथापि अनालोडितसुधादिप्राचीनग्रन्थानां आधुनिकविदुषां दीक्षितं श्लाघमानानां भ्रमनिरासाय समुद्यमोऽयमिति; तदिदमवितथमेव। सोऽयं ग्रन्थः न केवलं माध्वानामेव उपकारकः, अपि तु विद्यापक्षपातिनां सर्वेषामपि भूयादित्याशासे; तथा प्रार्थये च करुणावरुणालयं श्रीनिवासम्, इति शम् ॥

राजकीयोन्नतपाठशाला
हैदराबाद
Hyderabad Dn.
27—11—57.

पण्डित दादाचार्य काले
भूतपूर्व संस्कृत पण्डितः

श्रीः

"पण्डितराजे" त्यादि – नैकविधबिरुदभूषितैः, मदरास्राजकीय (भूतपूर्वे) आस्थानकविभिः, महामहोपाध्यायैः के. एस्. कृष्णमूर्तिशास्त्रिभिः

श्रीमतां सेतुमाधवाचार्याणां सहस्रचन्द्रदर्शनमहोत्सवे समर्पिता

# हर्षाविष्कारपत्रिका

श्रीमत्पाणिनितन्त्रदुग्धजलधेरेको महान् कौस्तुभः
द्वैताम्नायशिरःसुदुर्गमहारण्यैकपञ्चाननः ।
साहित्यामृतदीधितिः सुजनतावीरुत्सुपर्वद्रुमः
श्रीमुष्णं बुधसेतुमाधवमहाचार्यो विजेजीयते ॥ १

यः पातञ्जलभाष्यमागतवतः स्वध्यापयामासिवाँ-
श्छात्रान्नैकसमाः प्रबन्धनिवहैः नागेशभट्टैः कृतैः ।
सुब्बाचार्य इति प्रथामुपगतश्चास्मद्गुरूणां गुरुः
तस्यायं तनुजश्चकास्ति पितरं स्वस्यानुकुर्वन् सदा ॥ २

वाक्यार्थप्रविचारशौर्यजलधेर्गोष्ठ्यां परं शाब्दिकाः
कामं नाबिभयुः समेऽपि तु महानैयायिकाद्या अपि ।
किञ्चायं सुधियां मनोहरतरान् ग्रन्थान् बहून्निर्ममे
शास्त्राध्यापनफक्किकाऽस्य विदिता विद्वन्मनोरञ्जिनी ॥ ३

मध्वाचार्यपदाम्बुजन्ममधुपः सच्छ्रोत्रियाग्रेसरः
श्रीमान्निर्मलवंशमौक्तिकमणिर्भक्तावतंसः शुचिः ।
सर्वेषां सुहृदातिथेयनृपतिः कामं रसज्ञोऽनयत्
पञ्चाशीतिसमा अनाकुलमनाः साध्व्याऽऽत्मपत्न्याऽर्चितः ॥ ४

पञ्चाशीतिशरत्पूर्तिमहोऽमीषां भविष्यति ।
महामहोपाध्यायानां श्रीपतिक्षेत्रसीमनि ॥ ५

इति श्रुतिसुधासारसरसां गिरमादरात् ।
निशम्याभूवमानन्दवाराशिविनिमज्जितः ॥ ६

आचार्याः कनकाभिषेकमनघाः प्राप्स्यन्ति तस्मिन्नह-
न्यार्हन्त्या परयान्विताः समुचितं विद्वज्जनैकप्रियम् ।
रत्नौघैरभिषेक्तुमप्युदयते वाञ्छा बतास्मादृशां
आकिञ्चन्यपराहता वयमिमे पद्यैस्तथा कुर्महे ॥ ७

ॐ तत्सत्

मद्रपुरराजधानी
6—3—55.

इति परमाशिषां भाजनम्
के. एस्. कृष्णमूर्ति शास्त्री.

श्री सेतुमाधवार्याद्धिगतशब्दागमाब्धिगूढार्थः ।
विद्वत्सदस्यमुष्मिन्नरसिंहार्यो ब्रवीति तत्सुगुणान् ॥

लोके व्याकरणे प्रकृष्टविबुधास्सन्त्येव हा कोटिशः
सेत्वाचार्यसमो न कश्चिदिति मे बुद्धिर्दृढं निश्चिता ।
भाष्यं पाणिनिसूत्रगं ह्यनुवदन् श्रीवासुदेवार्जुनं
व्यासस्यापि च पाणिनेरभिमतः श्रीकृष्ण इत्याह यः ॥

तिरुवानूरु
१२—१२—५७

इति,
कोच्चा नरसिंहदासः

श्रीः

श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

श्री भूवराहाय नमः ॥

# ॥ तत्त्वकौस्तुभकुलिशम् ॥

( प्रथमाघातः )

श्रीब्रह्मरुद्रदेवेन्द्रस्तुतपादसरोरुहम् ।
श्रीरङ्गनायकीजानिं रङ्गनाथं सदा भजे ॥ १ ॥

नित्यपुष्करिणीतीरमध्यासीनं भुवा युतम् ।
वराहं शत्रुहन्तारं नमामि श्रेयसेऽस्तु सः ॥ २ ॥

वन्दारुजनमन्दारं वृषशैलनिवासिनम् ।
देवं पद्मावतीजानिं श्रीनिवासं श्रयेऽनिशम् ॥ ३ ॥

श्रीमदानन्दतीर्थार्यचरणाम्बुरुहद्वयम् ।
नमामि जयतीर्थादीन् गुरून्मध्वमतानुगान् ॥ ४ ॥

आर्याचार्यपदद्वन्द्वे मन्मूर्धा भ्रमरायते ।
तस्य वाणी सुधाधारा दद्यान्मह्यमभीप्सितम् ॥ ५ ॥

विज्ञातशब्दतन्त्रं गौतमकाणादतन्त्रनिष्णातम् ।
मीमांसाद्वयनिपुणं वन्दे श्रीसुब्बरायगुरुवर्यम् ॥ ६ ॥

साहित्ये श्रुत्यन्ते शाब्दे न्याये च सच्छिक्षाम् ।
संप्राप्तो यत्कृपया महामहोपाध्यायादिबिरुदं च ॥ ७ ॥

श्रीमान् महामहोपाध्यायाद्यनेकबिरुदसंशोभी ।
स तु तातः पूज्यतमो गुरुरपि हृदि संनिधिं कुर्यात् ॥ ८ ॥

श्रीमति माध्वे भाष्ये ये दोषाः प्रदर्शिता वराकेण ।
तेषामाभासत्वं वक्ष्ये(च्मि) श्री सेतुमाधवाचार्यः ॥ ९ ॥

इदमखिललोकवासिनामास्तिकशिखामणीनां विदितचरम्, यदिह संसार-कान्तारमध्ये परिभ्राम्यतामन्विष्याऽन्विष्यापि सुपन्थानमलभमानानां खिन्नमानसानां प्राणिनां खेदमसहमानो दयापयोनिधिरुपदेशपरंपरया सत्पथं दिदर्शयिषुर्भगवानादिकर्ता श्रीमान्नारायण आदौ ब्रह्माणं सृष्ट्वा तस्मै ब्रह्मविद्यामुपाऽदिशदिति। 'यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदाँश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. ६-१८) इतिश्रुत्या जानीमः। एतच्छ्रुत्यर्थमेव श्रुतिरेषा स्पष्टमाह–'ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह। अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाऽङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह, भारद्वाजोऽङ्गिरसे परावराम्॥ २॥ शौनकोह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ, कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति॥ ३॥ इति। तस्मै सहोवाच–द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैवापरा च॥ ४॥ तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा, यया तदक्षरमधिगम्यते॥ ५॥ यत्तदद्रेश्यमग्राह्यमागोत्रमवर्णमचक्षुःश्रोत्रं, तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥ ६॥ इत्यादिः"

आद्यवाक्यस्याऽयमर्थः—यः आदिकर्ता नारायणः, ब्रह्माणं=चतुर्मुखम्, पूर्वं=प्रथमतः, विदधाति=सृजति, यो नारायणः, तस्मै=चतुर्मुखाय, वेदान्=चतुरो वेदान्, प्रहिणोति=ददौ, तमादिकर्तारं नारायणं, आत्मबुद्धिप्रकाशं, ब्रह्मादिद्वारा परमात्मविषयज्ञानोत्पादकम्, मुमुक्षुरहम्, शरणं प्रपद्ये, निपातद्वयं प्रसिद्धिद्योतकम्।

द्वितीयवाक्यस्य तु—ब्रह्मा=नारयणादुत्पन्नः चतुर्मुखः, देवानां प्रथमः, देवश्रेष्ठः, बभूव=आसीत्, सः, विश्वस्य=प्रपञ्चस्य, कर्ता=स्रष्टा, गोप्ता=यथायोग्यं रक्षकश्च बभूव, शिष्टं स्पष्टम्।

एषैव विद्याऽधुनातनैरध्याप्यतेऽधीयते च। एषैव विद्या 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यती' (भार. आ.) ति भगवद्व्यासवचनाऽनुसारेणैव श्रुतिसूत्राणि व्याख्यायन्ते महद्भिराचार्यैः। इति

हासादयश्च — द्विविधा श्रुत्यनुसारिणः तदननुसारिणश्चेति । तत्र ये नारायणस्य जगत्कर्तृत्वादिकं प्रतिपादयन्ति ते श्रुत्यनुसारिणः, नारायणपदघटितभारतवचनमुदाहृत्य 'एताः श्रुत्यनुसारिण्यः स्मृतय' इति स्मृत्यधिकरणीयशांकरभाष्याद्युक्तेः ।

तत्रेन्द्रभरद्वाजसंवादरूपकाठकवाक्यजातेन वेदानन्त्यावगमात् पुरुषायुषेण तद्विचारस्य दुष्करत्वोक्तिपूर्वं भरद्वाजस्य सावित्रविद्योपदेशलिङ्गात्, पुरुषाणां परिमितायुष्ट्वं विज्ञाय भगवान् बादरायणः शाखोपशाखाभेदेन वेदं विभजमानः समस्तवेदार्थसारबोधकं ब्रह्ममीमांसाशास्त्राभिधं सूत्रात्मकं ग्रन्थं प्रणीय, ब्रह्मजीवयोर्ज्ञेयज्ञातृभावोपास्योपासकभावप्राप्यप्रापकभावादिना सर्वज्ञत्वाल्पज्ञत्वादिरूपेण विरुद्धधर्मनिकुरंबेण च परस्परं भेदं प्रत्यपीपददिति सूत्राक्षरस्वारस्यं जानन्त्येव स्वयं, नात्र परेषामनुयोग आवश्यक इति ।

अमुमेवार्थं, श्रीमदानन्दतीर्थभगवत्पादा भगवता बादरायणेनादिष्टास्सूत्राशयं (यथाचार्याभिप्रायं) इतिहासपुराणाद्युपबृंहितश्रुत्युपन्यासपूर्वं प्रतिपादयन्ति स्म, इदं तु—

नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥ १ ॥

नारायणं निखिलपूर्णगुणैकदेहं
निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ॥

इति भाष्यानुभाष्यमङ्गलश्लोकाभ्यां स्पष्टीकृतमाचार्यैः ।

अस्याऽक्षरार्थस्स्पष्टः, आशयस्तु—भगवान् नारायणोऽखिलाम्नायवेद्यो भक्तलोकैः प्राप्यः जगदुदयादिकारणभूतः, समस्तप्रपञ्चविलक्षण इति ।

श्रीरामानुजाचार्यास्तु—स्वसिद्धान्तं ' भाष्यादिमश्लोकेनैवाऽसूचयन् '—

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।

श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥ १ ॥

अयमभिप्रायः—समस्तजगज्जन्मादिकर्ता नारायणो वृषशैलनिवासो सर्वोपनिषदेकप्रतिपाद्यो मम मानसे सदा संनिधत्ताम्, सर्वदा स्मरामि श्रीनिवासमिति जीवेशयोर्भेद एवेति सूचितमनेन ।

श्रीशंकराचार्या अपि – सांख्यमतनिरासार्थं प्रवृत्ते स्मृत्यधिकरणे (२-१-१) अष्टादशपुराणेषु श्रीमन्नारायणस्य, देवतान्तराणांच महिमातिशयप्रतिपादकेषु बहुषु वचनेषु सत्सु नारायणस्य जगत्कर्तृत्वादिप्रतिपादनपर (नारायणपदघटित)

" अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः ।
स सर्गकालेच करोति सर्वं प्रयाणकाले च तदत्ति भूयः ॥

इति प्रमाणोदाहरणेन नारायणाख्यचेतनस्यैव जगत्कारणत्वं मन्यन्ते ॥

एतद् वचनमुदन्यस्य जगत्कारणं वस्तु नारायणाख्यमिति अभिप्रयन्तः, 'यतो वा इमानि, सदेवे' त्यादीनि सर्वाणि कारणवाक्यानि नारायणपराण्येवेत्यसूसुचन् । वचनार्थस्तु विस्तरेण न किमपि प्रयोजनं, संक्षेपतो वक्ष्यमाणं शास्त्रार्थं शृणुध्वम्, नारायणः, पुराणः=आदिपुरुषः, स=नारायणः, इदं सर्वं करोति सर्गकाले । प्रयाणकाले=प्रलयकाले, तत्सर्वं=सृष्टं समस्तं, अत्ति= नाशयति । भूयः, पुनरपि, सर्गकाले सृजति, प्रलयकालेऽत्तीति योजनया प्रतिकल्पं हरेर्व्यापार ईदृश इति ।

अत्रस्यादनवन्नादनमिति सूचनाय 'संहृत्य सर्वं निजदेहसंस्थं कृत्वाऽप्सु शेते जगदन्तरात्मा' (११५) इतिउत्तरश्लोकः प्रवृत्तः । शिष्टं स्पष्टम् । जगदन्तरात्मा=सर्वान्तर्यामीत्यर्थः । एतद्वचनार्थं मनसि निधायान्तर्यामिब्राह्मणे शांकरे भाष्ये - 'एषत आत्माऽन्तर्याम्यमृत' इतिवाक्यव्याख्याने आत्मा नारायणोऽन्तर्यामी युक्तम् ।

इदन्तु बोध्यम्—अत्राधिकरणे नारायणपदघटितवचनोदाहरणात्, गीताभाष्याऽवतरणग्रन्थे, 'आदिकर्ता नारायणो देवक्यां वसुदेवादंशेन कृष्णः किल

संबभूव, वासुदेवाख्यं परं तत्त्वमिति व्यञ्जयद्गीताशास्त्र' मिति, 'एष त आत्माऽन्तर्यामी'त्यत्राऽन्तर्यामी नारायण इति च शांकरवचनात् ग्रन्थत्रये कारणवस्तुनिरूपणावसरे देवतान्तरवाचकपदाऽप्रयोगात्, भामत्यादिव्याख्याग्रन्थेषु च शिवादेः कारणत्वानुक्तेः, तस्य कारणत्वपरवचनानामनुदाहरणात् 'नहि निन्दान्यायेन' विष्णुकारणत्वपरवाक्यानि, न शिवादीनां कारणत्वनिषेधकानि किंतु नारायणकारणत्वस्तावकानीति भामत्यादावनुक्तेश्च, नारायणएव जगतः कर्ता शास्त्रप्रतिपाद्यश्चेति शंकराद्यभिप्राय इति मन्यन्ते विमर्शकाः ।

ननु — नारायणाऽभेदाद्रुद्रादीनां कारणत्वादिधर्मास्तेषूपपद्यन्त इति चेत्, न—'ईश्वराभेदेपि ईश्वरधर्माणामीश्वरादन्यत्राऽसंभव' इति 'अन्तस्तद्धर्मोपदेशात्' (१-१-२०) इत्यादिषु शांकरभाष्योक्तेः, एवंच—ईश्वरः ब्रह्म आत्मा नारयण इत्येते पर्याया इति परकीयभाष्यतोपि ज्ञायत इति ।

विज्ञानभिक्षुर्जीवेशभेदवादी वासुदेवस्य परदेवतात्वं जगत्कर्तृत्वमुपास्यत्वं चेत्याह ।

वल्लभाचर्यास्तावत्—श्रीकृष्णः परदेवता उपास्यो जगतः कर्ता ब्रह्मसूत्रादिसमस्तशास्त्रविषय इत्याहुः ।

सुदर्शनाचार्यास्तु—भगवान्नारायणो जगतःकर्ता परतत्वं, भिन्नो जीवगणात् इत्याद्याहुः ॥

जैमिनीयास्तु—याजिनामिज्यानां च भेदः, कर्मजन्यापूर्वमेव फलप्रदं केषांचिदादित्यादिसायुज्यं, केषांचित् स्वर्गप्राप्तिश्च फलं, इज्याया देवताया न विग्रहादिपञ्चकं, चतुर्थ्यन्तशब्द एव देवता इति वदन्ति । अद्वैतं च दूषयन्ति ।

नैयायिका वैशेषिकाश्च—जीवेश्वरयोर्भेदं वदन्तोऽनुमानात्कर्तुः सिद्धिः, श्रुतिरनुग्राहिकेति ब्रुवते ।

चैतन्यमतवादिनस्तु— कृष्णः परं ब्रह्म, स कर्ता फलद उपास्य इति वदन्ति ।

वैखानसाः पांचरात्रिकाश्च—नारायणः परं तत्त्वं जीवेशयोर्भेद इत्यभिप्रयन्ति ।

अन्येच सन्ति बहवो जीवेशभेदमङ्गीकुर्वाणा नारायणस्य परतत्वत्वं सिद्धान्तयन्तः

रत्नप्रभाख्यशांकरभाष्यव्याख्यायां समन्वयसूत्रभाष्यविवरणोपसंहारे—

रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः ।
कार्यतात्पर्यबाधेन साधितो बुद्धिशुद्धये ॥

इति श्रीरामस्य समस्तशास्त्रसमन्वयविषयताऽभिहिता ।

अद्वैतसिद्धिकृतस्तु—सिद्धिग्रन्थान्ते गीताव्याख्याने च, कृष्णस्यैव परतत्त्वतां मन्यन्ते । तथाहि—

वंशीविभूषितकरान्नवनीरदात्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने ॥

इति, शांकरगीताभाष्यव्याख्यायां सदानन्दस्वामिकृतायां भावप्रकाशाऽभिधायां पुरुषोत्तमाध्याया (१५)ऽन्ते—

समस्तवेदेषु तथैव भारते तथाऽऽदिकाव्ये स्मृतिषूत्तमोत्तमम् ।
पुराणजालेपि हि वास्तवं पदं मुकुन्द एवेति मतिस्त्वियं सताम् ॥ इति ॥

पाणिन्याचार्यास्तु 'वासुदेवार्जुनाभ्यांवु' (पा-४-३)न्निति सूत्रे वासुदेव-पदस्य पूर्वनिपातं कुर्वाणा वासुदेवस्य परतत्त्वतामात्मभेदंचाऽभिमन्यंते इति स्पष्टं भाष्यकैयटविदाम् । निरूपितमिदमस्माभिर्व्यासपाणिनिभावनिर्णये ।

एतेन प्रबन्धनिचयेन श्रीब्रह्मसूत्रगीतादिमहाशास्त्रं व्याकुर्वाणा बहवः श्रीमन्नारायणस्य परत्वं समस्तशास्त्रवेद्यत्वं कारणत्वं च मन्यन्त इति सिद्धम् ॥

सत्यामेवं वस्तुस्थितौ भट्टोजिरयं यथाविधि आचार्यमनुपासीनः, अनधीयानः स्वमतीयप्रबन्धान्, अनवलोकयन्परमतीयप्रबन्धान्, अनवगच्छन् श्रीमध्वमतीय-प्रबन्धभावं, अनालोचयन् स्वप्रबन्धतात्पर्यपर्यवसानं, श्रावंश्रावं कुहकवचनम्, आत्मा-नमध्यात्मशास्त्रज्ञंमन्यः विलिखन् प्रायेण परोद्घाटितदोषाभासान्, क्वचित्तु स्वप्रति-भाविलसिततथाविधदोषगणं च प्रादर्शयदत्र तत्त्वकौस्तुभे ।

ननु तर्हि अप्पय्यदीक्षितकृतिखण्डनपरैः प्राचार्यप्रणीतैर्गदाकंटकोद्धारादि-भिरेव प्रबन्धरत्नैः कौस्तुभोऽयं दूषितो भवतीति नाद्यतनानां नव्यानां विदुषामे-

तत्खंडनायासानवकाश इति न मन्तव्यम् । प्रत्नप्रबन्धेषु संक्षिप्तस्य विवरणेन भट्टोजीय नव्याक्षेपनिरसनेन च, अर्वाचीनानामप्यवकाशलाभात् ।

किंच—केचित्तु ग्रन्थस्याऽस्य श्रवणदर्शनमात्रेण, इतरे पुनः 'शांकरादपि भाष्याब्धेस्तत्वकौस्तुभमुद्धर' इति प्रतिज्ञावाक्यदर्शनमात्रेण ग्रन्थं तत्कर्तारं च श्लाघन्ते महानयमिति। प्रतिज्ञा तावन्मनोहरति परेषाम्, परंतु व्याघाताऽपसिद्धान्तादिदोषाकरोऽयं परमतदूषणमुखेन शाङ्करमतीयप्रबन्धानेव दूषयतीति स्पष्टीकरणाय भमायमुद्यमः ।

## ॥ इति ग्रन्थप्रवृत्तिहेतुनिरूपणम् ॥

तत्रादौ पञ्चरात्रस्याऽप्रामाण्यं, गौतमशापाऽभिभूतवेदानधिकार्यसज्जनाऽऽधिकारिकत्वादिकं चोक्तम् । तदिदं स्वाचार्यशङ्करभाष्याद्यनवलोकनतदर्थानवबोधनिबन्धनम्, नारायणतदनुबन्धिप्रद्वेषिमहापाषण्डजगत्प्रलोभनपरदुर्जनदुरुक्तिश्रवणदुर्दर्शनदर्शनजनितज्ञानाभावकलुषिताऽन्तःकरणस्य विष्णूत्कर्षमसहमानस्य भाषणम् ।

पाञ्चरात्रे हि—श्रीमन्नारायणस्य श्रियःपत्युः समस्तचराऽचरप्रपञ्चसृष्ट्यादिकर्तृत्वाद्यसाधारणधर्मवतो ब्रह्मरुद्रादिसमस्तदेवगणवन्दितचरणारविन्दस्य मुमुक्षूपास्यस्य वन्दारुजनमन्दारस्य भक्तलोकरक्षाबद्धदीक्षस्य महिमातिशयो निरूपितः । शंकराचार्याश्चेदं सर्वमभ्युपयन्तीति 'उत्पत्त्यसंभवा' (२-२-४२)दित्यधिकरणीयतदीयभाष्यतोऽवगम्यते । तथाहि—

ननु—श्रुतिसमाश्रयणेनापि एवंरूप एवेश्वरः प्राङ्निर्धारितः प्रकृतिश्चाऽधिष्ठाताचेति, श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः,तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति, उच्यते—यद्यप्येवंजातीयकोंऽशः समानत्वात् न विसंवादगोचरो भवति,अस्ति त्वंशान्तरं विसंवादस्थानमिति, अतस्तत्प्रत्याख्यानायारम्भः । तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवः,...........तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति । तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् । प्रसिद्धः परमात्मा सर्वात्मा स आत्मनाऽऽत्मानमनेकधा व्यूह्याऽवस्थित इति, तन्न निराक्रियते, 'स एकधा भवति द्विधा भवति' (छा. ७-२६-१) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभवनस्याधिगतत्वात्, यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्य-

चित्ततयाऽभिप्रेयते, तदपि न प्रतिषिध्यते, श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते 'वासुदेवात्संकर्षण उत्पद्यते संकर्षणात्प्रद्युम्नः प्रद्युम्नादनिरुद्ध' इति, प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिं नात्माश्रुतेर्नित्यत्वाच्च ताभ्य (२-३-१७) इति, 'विप्रतिषेधाच्च' (४५) विप्रतिषेधश्च— गुणगुणित्वादिकल्पनालक्षण, ज्ञानैश्वर्यादिगुणा 'आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविरुद्धश्च भवति, चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शांडिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्मादसंगतैषा कल्पनेति सिद्धमिति ॥

तत्रहि— श्रुतिविसंवादगोचरमंशं जीवोत्पत्त्यादिकं दर्शयित्वा तत्प्रत्याख्यानाय सूत्रारंभः, नारायणस्य यदुक्तं परमेश्वरत्वादिकं, तन्न निराक्रियते, यदपि तस्य भगवतोऽभिगमनेज्यादिः तदपि न प्रतिषिध्यते, तस्मादसंगतैषा कल्पने'ति वासुदेवात्संकर्षण उत्पद्यते संकर्षणात्प्रद्युम्न इति संकर्षणाद्युत्पत्तिकल्पनस्यैवासंगतत्वोक्तेः भामत्यां चांशे प्रामाण्यमाह-उच्यत " इत्युक्तेश्च विशिष्टपांचरात्राऽप्रामाण्यकथनमयुक्तमपसिद्धान्तः ।

ननु—चतुर्षु वेदेषु परंश्रेयोऽलब्ध्वा शांडिल्य इदं शास्त्रमधिगतवानिति वेदनिन्दादर्शना'दित्यधिकरणशेषभाष्यात् विशिष्टपांचरात्रे वेदविरुद्धत्वादप्रमाणमिति तद्भावकल्पनमिति चेत्, न, अंशे प्रामाण्यमाहे'तिभामतीविरोधात्तथा कल्पनायोगात् ।

वक्ष्यमाणकाठकगतेन्द्रभरद्वाजसंवादेन कृत्स्नाम्नायविचारस्य पुरुषायुषेण दुष्करत्वमिति निन्दापदतात्पर्यात् । अतएव भागवतशास्त्रीयाक्षरमालाध्येतुः स्वाध्यायाध्येतृपुरुषाद्विशेषवचनं वेदनिन्दायां न तात्पर्यम्, अन्यथा विशिष्य नारायणस्य परमेश्वरत्वं तदभिगमनादिकं न निराक्रियते, न प्रतिषिध्यते इति वचनविरोधः । ततश्च भाष्ये योंशः श्रुतिविसंवादगोचर इति दर्शितस्तदंशे प्रामाण्यं नेत्येव भाष्यभावः कल्पनीयः ।

अयमपि ग्रन्थकृत् उत्तरतन्त्रे 'उत्पत्त्यसंभवा' दित्यधिकरणे भाष्यभामत्यादौ आगमानामप्यविरुद्धांशे प्रामण्यं स्वीकृतं, यस्तु विरुद्धोंऽशस्तस्यापि स्मृतिस्थस्येव कथंचिदविरुद्धेऽर्थे तात्पर्यं कल्प्यत इति कौस्तुभे (७-पुटे) वक्ष्यति ॥

भागवतशास्त्राऽक्षराध्येतुर्विशिष्टत्वाभिधानमात्रेण वेदनिन्दाप्रतीतिरिति तु न विद्वज्जनहृदयंगमम् ,यतः काठके (तै, १-प्र.९ अ.) इन्द्रभरद्वाजसंवादे 'भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास,तंह जीर्णिं स्थविरं शयानम् , इन्द्र उपव्रज्य उवाच,भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमेनेन कुर्या इति, ब्रह्मचर्यमेवैनेन चरेयमिति होवाच (४५) भरद्वाजेत्यामंत्र्य, तं त्रीन् गिरिरूपानविज्ञातानिव दर्शयांचकार, तेषां हैकैकस्मान्मुष्टिनाऽऽददे, सहोवाच, भरद्वाजेत्यामंत्र्य, वेदा वा एते, अनन्ता वै वेदाः, एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः, अथ ते इतरदननूक्तमेव, एहीमं विद्धि,अयं वै सर्वा विद्येति (४६) तस्मैह तमग्निं सावित्रमुवाच,तं स विदित्वाऽमृतोभूत्वा स्वर्गंलोकमियाय,आदित्यस्य सायुज्यम् , अमृतो हैव भूत्वा स्वर्गं लोकमेति, आदित्यस्य सायुज्यं य एवं वेदे'ति, सावित्राग्न्युपदेशेन तदुपासनेनच सर्वे वेदा निन्दिता इति सर्वान् वेदान् न परित्यजन्ति, तेषामध्ययनमध्यापनं च न कुर्वन्तीति न, तदुक्तकर्माणि चानुतिष्ठन्त्येवाऽऽस्तिका जनाः । तथावक्तारोऽपि दुर्लभा लोके, शांकरे भाष्ये—' चतुर्षु वेदेष्वित्यादिर्वेदनिन्दादर्शना'दित्यन्तो ग्रन्थोऽस्ति न वेति संदिह्यते 'इति निन्दा आदिपदग्राह्ये'ति तद्व्याख्याने दर्शनात् ।

भागवताऽक्षरविदो विशेषवचनं च पंचरात्रस्य स्तावकमेव भवेत्, न तु वेदनिन्दातात्पर्यकम् । एकस्य स्तुतिर्नान्यनिन्दापर्यवसायिनी भवेदिति निरूपितत्वात् । नच—नहि निन्दान्यायेन तथाऽर्थलाभ इति वाच्यम् - यत्र मुख्यो निषेधः श्रूयते तत्रहि तन्न्यायप्रवृत्तिः । किंच - तस्य न्यायस्याऽन्यनिन्दायां न तात्पर्यं किंतु प्रकृतस्य स्तावकत्व इति निर्णेत्रा भवता पंचरात्रस्य'ऽप्रामाण्यं न शक्यते वक्तुम् ।

यच्चोक्तं 'यत्तु माध्वा' इत्युपक्रम्य, अप्रामाण्यं वदन्ती' ति माध्वग्रन्थमनूद्य,तत्तुच्छम्, पुराणानां क्वचिदप्रामाण्ये त्वदुदाहृततामसादिविभागवाक्यस्यैव लाघवादप्रामाण्यौचित्या'दित्यादिदूषणं, तत्पूर्णप्रज्ञमतीयग्रन्थतात्पर्याऽनभिज्ञानमूलकम् । तथाहि—

स्कान्दादिषु शिवादिपरत्वपरतयाऽभिमतेषु विष्णोः सर्वोत्तमत्वजगत्कर्तृत्वादिप्रतिपादनदर्शनात् , शिवादेस्तदधीनत्वाद्युक्तेश्च विष्णोर्जगत्कारणत्वादिपरवचनान्येव प्रमाणपदवीमारोहन्ति । तत्र तत्र पुराणेषु एतद्वैपरीत्यदर्शनेन शिवादीनामपि जगत्कर्तृत्वाद्यङ्गीकारे द्वैराज्यादिदोषप्रसङ्गात् , एकस्यैव हरेर्वा हरस्यवा तदंगीकार्यम् ,

अन्यथा शास्त्रार्थनिर्णयाऽसंभवः, अतः कः पक्षः श्रेयानिति विप्रतिपत्तौ नारायणपराण्येव वचनानि प्रमाणं श्रुतिसंवादादिति ग्राह्यम् । भवदाचार्येण शंकरेण ' उत्पत्त्यसंभवा' (२-२-४२) दित्यधिकरणे, 'श्रुतिसमाश्रयणेनापि एवंरूप'इत्यादिना, प्रसिद्धत्वा'दित्यन्तेन श्रुतिसंवादगोचरागमवचनानां प्रामाण्यमिति वदता नारायणस्य परत्वकर्तृत्वाराध्यत्वादयः पंचरात्रोक्ताः प्रामाणिकत्वेन ग्राह्या इत्यभिधानात्। तत्र 'श्रुत्यनुसारिणी च स्मृतिः प्रमाण'मिति सामान्योक्तेः सर्वस्मृतिषु श्रुतिसंवादगोचरो भागः प्रमाणमित्यभिप्रायः । अत एव स्मृत्यधिकरणे प्रधानवादनिरासाय च ' अतश्चेतिस्मृतिमुदाहृत्य इयंच श्रुत्यनुसारिणीति कथनम् । तेन नारायणपदघटितातश्च'ति स्मृतेरुदाहरणात्, सर्वागमेषु नारायणस्य कर्तृत्वादिबोधको भागः प्रमाणं स एव शास्त्रार्थनिर्णयहेतुरिति ।

नारायणस्यैव जगत्कर्तृत्वादौ दृढाध्यवसायः शंकराचार्यस्य,स्कान्दादिषु भारतादिषु च शिवोत्कर्षपराणां वचनानां दर्शनेपि तेषु नैकमपि वचनं नोदजहार भाष्यादिषु क्वापि ।

ततश्च —श्रुतिसंवादविसंवादाभ्यामागमपुराणादीनां प्रामाण्याऽप्रामाण्यनिर्णयः तत्र न शैवादिभेदः, श्रुतेश्च तात्पर्यं विष्णोः परत्वकर्तृत्वादौ, यत्रकुत्रापि भवतु नरायणकर्तृत्वादिवचनं तत् श्रुत्यविसंवाद्येव, अतस्तद्ग्राह्यं प्रमाणतया शास्त्रार्थनिर्णय इति तदभिप्रायः ।

अस्मदाचार्या अपि—

ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥

यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रंथविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥

इति वेदादीनामेव शास्त्रत्वं, यच्च स्मृतिपुराणादिगतं वचनजातं एतस्य वेदादेः अनुकूलमविसंवादि तत्समार्थकं, तदपि शास्त्रमिति प्राहुः । स्मृतिषु न पुराणभेदः शैवे वा वैष्णवे वा ब्राह्मादिषु वा श्रूयमाणं वचनं वेदतात्पर्यविषयविष्णूत्कर्षपरं तदनुकूलं

वा स्यात् तद्वचनं शास्त्रार्थनिर्णये प्रमाणतया ग्राह्यं श्रुतिसंवादात् यत्तु नैवं, न तद्ग्राह्यं श्रुतिविसंवादगोचरत्वादिति व्यवस्था । पुराणसामान्यविषयेयं व्यवस्थितिः । 'एषां यत्र विरोधि स्यात्तत्तत्रोक्तं तन्न वार्यते' (ता. नि. १) इत्युक्तेः । अयमर्थः- एषां ऋगादीनां, न विरोधि तथात्वेन प्रतीयमानमनुकूलमिति यावत् , तत्र=शैवादिषु पुराणेषु उक्तं पठितं, यद्वचनं, तत् ,न वार्यते= न त्यज्यते, किंतु प्रमाणतया ग्राह्यं, सर्वथा विरोधि तु त्याज्यं, विष्ण्वाधिक्याऽविरोधितया वा कथंचिद्योज्यं, 'विष्ण्वाधिक्यविरोधीनि यानि वेदवचांस्यापि तानि योज्यान्यानुकूल्याद्विष्ण्वाधिक्यस्य सर्वश'इत्युक्तेरिति मन्यन्ते । अत्रापि: स्मृतिवचसां समुच्चये । ततश्च यानि वचनानि स्कान्दादिगतानि न विरोधीनि तान्युदाह्रियन्ते प्रमाणतयाऽऽचार्यैरिति न कश्चिद्विरोधः । तृणाग्रभक्षकोऽयमाचार्यद्वयाशयमजानानो दोषमुद्घाटयति ।

किंच—इदं च वक्ष्यमाणस्ववचनविरुद्धम् । इत्थंहि वक्ष्यति—पूर्वतंत्रे भाष्यकृता शबरस्वामिना 'विरोधाधिकरणे, शिष्टाकोपाधिकरणे च, पाञ्चरात्रस्य निर्णीतमप्राण्यमसहमानः, (७-पु.) 'अत एवोक्तमुत्तरतन्त्रे 'उत्पत्त्यधिकरणे' भाष्यभामत्यादावागमानामप्यविरुद्धांशे प्रामाण्यं स्वीकृतमिति पंचरात्राऽप्रामाण्यवादिमीमांसकमतं दूषयन्ति भाष्यकारादय इति । यदि स्यादिदं भाष्याद्युक्तं तवेष्टं, तदा स्ववचनविरुद्धमिदं विशिष्टपञ्चरात्राऽप्रामाण्यकथनम् , यदीदं नेष्टं तर्हि अपसिद्धान्तः । किंच - जैमिनीयास्तावत् ब्रह्म तत्प्रतिपादक पंचरात्रस्य प्रामाण्यं च नांगीकुर्वन्ति, बादरायणीयास्तु तदुभयमङ्गीकुर्वते इत्येतदतिरोहितम् । एतेनोभयोस्तत्तंत्रविदोराजन्ममनैकमत्यमिति विदित्वापि ब्रह्मवादिनः प्रति मीमांसामर्यादोल्लङ्घनं भवतामित्यसकृदुक्तिः विभीषिकामात्रम् । विरुद्धतंत्रमर्यादादरस्यानुचितत्वात् ।

तत्र वैयाकरणाः—'निजां त्रयाणां गुणः श्लौ (पा-सू-७-४-७५) विति सूत्रे त्रयाणां ग्रहणात् कपिञ्जलाधिकरणसिद्धं बहुवचनस्य त्रित्वपर्यवसानं नात्र शास्त्रे स्वीकुर्मः, तेन 'सप्तमीशौण्डै' (पा.सू.२-१)रित्यत्र शौण्डैरिति न त्रित्वपर्यवसायि तेन च शौंडादिभिरित्यर्थलाभः, शौण्डादिराकृतिगणः, तस्मात् बहूनि लक्ष्याणि सिध्यन्ति । किंच - ज्ञापकस्य सामान्यापेक्षत्वात् 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्या'दित्यादिन्यायानपि नाद्रियामहे । तेन-परिभाषाणां विधिशेषभतानामपि

परस्परमङ्गाऽङ्गिभावसिद्धिरिति वदन्ति। देवदत्तः पचतीत्यादौ तिङर्थभावनाविशेष्यकबोध इति मीमांसकानामुद्घोषः, मतमिदं शतधा दूषयन्ति वैयाकरणाः भाष्यभूषणतत्सारमञ्जूषादौ। नैयायिका अप्येवं–प्रथमान्तार्थमुख्यविशेष्यकबोधं वर्णयन्ति।

एत एव—गवादिपदानां गोत्वादौ शक्तिः, तमसो दशमद्रव्यत्वमित्यादितन्मतं दूषयन्ति, तत्प्रकारो दीपिकादिग्रन्थतोऽवसेयः।

## ॥ चक्राङ्कनखण्डननिराकरणम् ॥

यच्चाऽत्र चक्राङ्कनदूषणम्, तत्तु कौस्तुभोक्तपाञ्चरात्राऽप्रामाण्यस्य खण्डनेनैव दूषितं भवति। अथापि किंचिद्ब्रूमः—उत्पत्त्यसंभवाधिकरणे शांकरभाष्ये संकर्षणाद्युत्पत्तेरेव विशिष्य श्रुतिविसंवादगोचरत्वं दर्शितं, नतु चक्राङ्कनस्य, भामत्यादावपि अन्यत्र वेदाविसंवादात् यत्रांशे विसंवादः, स निरस्यते, तमाहेत्यवतरितं 'यत्पुनरिदमिति वाक्यम्। यदि चक्रांकनं श्रुतिविसंवादगोचरोऽभविष्यत्, तदेदमप्युपलक्षणया ग्राह्यमित्यवक्ष्यन् ते। अतोऽप्रतिषिद्धमनुमतं भवतीति न्यायेन चक्रांकनं शास्त्रसंमतं भगवदाराधनाङ्गतयाऽनुष्ठेयो धर्म इति सिध्यति। भट्टोजिना तु तदीयभाष्यभावमबुध्वा कृतं तद्दूषणम्।

किंचायं मन्वादिस्मृतिवचनानि महाभारतादिकं चाऽपश्यन् हेमाद्रिप्रायश्चित्तकाण्डं पश्यन् तत्रोदाहृतवचनमात्रावष्टंभेन, तदुक्तयुक्त्याभासाश्रयणेन चेत्थमदूषयदिति निर्णीयते। तथाहि—तत्र निर्णयसिंधौ द्वितीयपरिच्छेदे आषाढमासव्रतनिर्णये–चक्रांकनविधिनिषेधपक्षौ प्रदर्श्य शिष्टाचार एव संकटपाशनिस्सरणसृणिरिति संक्षेपः (८-६-पु) इत्युक्तम्। अत्र शिष्टपदं श्रोत्रियभागवतादिपरम्।

धर्मसिन्धावपि—शयनीयबोधिन्योस्तप्तमुद्राधारणमुक्तं रामार्चनचंद्रिकायाम्। अत्र तप्तमुद्राधारणे विधायकानि प्रशंसावचनानि, निषेधकानि निन्दावचनानि च बहुतराण्युपलभ्यन्ते, तेषां शिष्टाचाराद्व्यवस्था। येषां कुले पितृपितामहादिभिस्तप्तमुद्राधारणादिधर्मोऽनुष्ठितः तैस्तथैवानुष्ठेयः, येषां तु कुलेषु न केनाप्यनुष्ठितः, तैः स्वमतिविलसितश्रद्धया तद्धर्मोऽननुष्ठेयो दोषश्रवणादिति तात्पर्यम्' (धर्मसि, ४३ पु) इति धारणाऽधारणयोर्व्यवस्था दर्शिता। ततश्चोदिताऽनुदितहोमवद्व्यस्थितिरिति तात्पर्यमुभयोर्ग्रन्थयोः।

यत्तु चक्राङ्कनप्रमाणश्रुतिविषये केनचिद्विदुषा देवानांप्रियतमेन निर्णयसिंधु-टिप्पण्यामुक्तम् , श्रुतिरियं वैष्णवैः स्वमतपुष्ट्यर्थं कथमप्येकदेशपरतया व्याख्याता दुराग्रहेण, वास्तवार्थस्तु सायणाचार्यैरुक्तः, एवमन्यान्यपि श्रुतिवचनानि वस्तुतो भिन्नार्थानि बलादाकृष्य पूर्वोत्तरसंबंधमनाकलय्य कथमपि व्याख्याय लोकान् भ्रामयन्ति । वास्तवमर्थं जिज्ञासुभिः तत्वमार्गमारुरुक्षुभिर्न तत्र भ्रमितव्यमित्युक्तम् । अत्रोच्यते—सायणाचार्य एक एव वेदव्याख्याने चतुरः सर्वज्ञः, तदुक्त एवार्थो वास्तवो ग्राह्यश्चेति किं कुलधर्मः, उत धर्मशास्त्रकाराः पठन्ति, अथवा तथा राज्ञामाज्ञा, न कंचिदत्र नियमं पश्यामः, अतो भ्रान्तिविलसितमेतत् । भट्टभास्करो वेदार्थं सायणोक्तादर्थादन्यथा किं न वर्णयति । कल्पसूत्रकारा यत्रयत्र विनियोजयन्ति श्रुतिवाक्यानि तानि तत्तदनुसारेण भिन्नभिन्नार्थानि नीतानि सायणादिभिरेव, अतोऽनेकार्थान्येव वेदवाक्यानि ।

अत एव महाभाष्ये 'चत्वारि शृंगाः, चत्वारिवाक्, उतत्वः पश्यन्, सक्तुमिव' इति ऋचः (यथासन्दर्भं) सायणादिभिरन्यथा व्याख्याता अपि व्याकरणाध्ययनफलपरत्वेन व्याख्याताः ।

भारद्वाजादिभिर्ब्रह्ममेधसंस्कारे प्रेतदाहोपस्थाने पुरुषसूक्तं विनियुज्य तस्य तद्विषयताऽभिहिता । आपस्तंबेन पुरुषमेधाख्यकर्मणि 'उत्तरनारायणेन आदित्य-मुपस्थाये'ति आदित्योपास्तौ विनियुञ्जानेन 'अंभस्यपार' इत्युत्तरानुवाकस्या-दित्यपरता प्रदर्शिता, इदमनुवाकद्वयं ब्रह्मपरतया व्याख्यातं सायणादिभिः । अधिकंतु पुरुषसूक्तव्याख्याने मदीये द्रष्टव्यम् ।

यास्कादिभिः 'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्नवेद किमृचा करिष्यति य इत्तद्विदुस्त इम समासत' इति मंत्रो ब्रह्म - ओंकार-सावित्र्यग्निविद्याद्यनेकविषयकतया व्याख्यातः ।

कुमारिलभट्टोऽपि तन्त्रवार्तिके श्रुतिवाक्यानि बहुभिर्बहुधा व्याख्यायन्त इत्याह । तत्प्रकारश्च दर्शितस्तत्रैव तेन । तत्सिद्धं चक्रांकनश्रुतेर्द्वैतिसंमतार्थेऽप्रामा-ण्याभिधानं भट्टोजेरयुक्तमिति ॥

यत्तु—पुराणानां सात्त्विकत्वादिकथनं स्वकल्पितवचनमूलकमित्युक्तम्, तदपि आत्मवत्सर्वेऽपि वदन्तीति मत्वा भाषितम्। यतोऽयं 'मयड्वैतयोर्भाषाया पा.सू० मिति सूत्रे भाष्यानुक्तस्वोत्प्रेक्षितसूत्रप्रत्याख्यानयोगविभागादिना 'आनंदमयशब्दे विकारार्थ एव मय' डिति आनन्दमयाधिकरणीयशांकरसिद्धान्तोक्तिं समर्थयते स्म। 'अतोभिस ऐ' सिति सूत्रे एसित्येकारोच्चारणं सुकरम्, अथापि-द्विमात्रत्वाविशेषात्, पररूपशंकैव नास्तीति लाघवात् ऐसकृत इति मनोरमायामुक्तवान्। इदंच भाष्ये न दृश्यते। प्रत्युत 'नद्यै' रित्यादिछान्दसि रूपसिद्धये 'बहुलंछंदसी 'त्युत्तरसूत्रे ऐसो ऽनुवृत्तये ऐकारोच्चारणस्यावश्यकत्वेन एवमुक्तिरसंगतेति बाला अपि जानन्ति।

किंच—प्रयोगपारिजाते पृथ्वीचन्द्रोदयादौ तु विष्णुशातातपहारीतादिवचनान्युदाहृतानीति, यथा—विष्णुः 'शंखचक्राद्यङ्कनंचे' त्यादीनि कतिपयवचनान्युदाहरत्, तानि वचनानि तासु स्मृतिषु नोपलभ्यन्तेऽन्यत्वे। यच्चोक्तं पंचमे (५-पु.) कौर्मे इत्युपक्रम्य श्राद्धवर्ज्यब्राह्मणप्रस्तावे 'बौद्धश्रावके 'त्यादिवचनात् हेमाद्रौ श्राद्धकांडे वर्ज्यब्राह्मणप्रस्तावे 'बौद्धश्रावके'त्यादिवचनं, पुराणान्तरादौ विद्यमानवचनानि चोदाहृत्य पांचरात्रपराणां कर्मानर्हत्ववचनं, तदपि मन्वादिस्मृतिमहाभारतमहानिबन्धाऽनवलोकनमूलकम्। मनुयाज्ञवल्क्यस्मृत्यादौ तद्व्याख्यानेषु च, महाभारते वैद्यनाथीयधर्मसिन्धुनिर्णयसिन्धुसुधीविलोचनादिनिबन्धग्रन्थेषु वर्ज्यब्राह्मणप्रस्तावे एवंजातीयकानां वचनानामनुपलंभात्।

यदपि—(७-पु.) स्कान्दादिपुराणानां तामसत्वमुक्त्वा स्वाभिमतार्थे प्रमाणतया स्कान्दादिवचनोदाहरणाद्व्याघात इत्युक्तम्, तदपि तामसत्वविभागतात्पर्यानवगमादेव। तत्तात्पर्यन्तु—"श्रुत्यनुसारिणी स्मृतिः प्रमाणमिति उसत्त्यसंभवाधिकरणे, 'अतश्चे 'ति स्मृतिमुपन्यस्य श्रुत्यनुसारिण्य एताः, विप्रतिपत्तौ श्रुत्यनुसारिण्य एव ग्राह्या' इति स्मृत्यधिधिकरणे च शांकरभाष्योक्तेः, याः स्मृतयो नारायस्य परमेश्वरत्वादिपराः, तदनुकूलाश्च याः, ताः प्रमाणं, ततः-तान्येव वचनानि, इतराणितु तामसानि, इति त्वदीयाचार्योक्तेरेव सात्त्विकतामसविभागस्सिध्यति। एषापि व्यवस्था अस्मदीयाचार्योदाहृतप्रमाणमूलैव। भवान् परं भवदाचार्याभिप्रायं पौराणिकवचनतात्पर्यं च न जानाति, तदपि भवदीयदुर्विधिविलसितमेव। परेषां वचनानां कल्पित-

स्वोक्तिस्तव भूषणं, परमेश्वरसाधकानां प्रमाणानां कल्पितत्ववादिनः किमेतदाश्चर्यम् ।

चक्राङ्कनादौ प्रमाणानि, तेषामर्थः, तदधिकार्यादयश्चेति सर्वं तप्तचक्रभूषणादौ निरूपितं विस्तरजिज्ञासुभिस्तत्र एवावसेयम् ।

अयं च भागः स्वोपज्ञतंत्राधिकारनिर्णयस्थोऽत्र योजितोऽनेन ग्रन्थकृता ।

इदं बोध्यम — अत्र भट्टोजिभट्टोक्तं, मञ्जूषायां तद्धितार्थनिरूपणप्रकरणे उत्पत्त्यसंभाधिकरणे शंकराचार्योक्तं पांचरात्रप्रा.ाण्यं प्रामादिकमिति गूढाभिसंधिना नागेशेन च यदुक्तं 'नीचाधिकारिकमप्रमाण'मित्यादिना पाञ्चरात्राप्रामाण्यं तच्चेत्युभयं भगवद्भागवतप्रद्वेषमूलकमेव । प्रद्वेषश्च नारायणतद्भक्ततच्छास्त्रजीवब्रह्मभेदनिन्दादिरूपः । अस्य तु फलं भगवानाह गीतायाम्—

'अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १६-१८ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

इति । अन्यत्र च—

मन्ये त्वां राक्षसं क्रूरमथवा तामसात्मकम् ।
यस्मात्क्षिपसि गोविन्द पांडवंच धनञ्जयम् ॥ इति ।

इदंच । मोघाशा मोघमकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥

इति (गीता. ९-१२) श्लोके तात्पर्यचंद्रिकायामुदाहृतम् ।

अनेन — अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ९-११ ॥

इति पूर्वश्लोकोक्तभूतमहेश्वरत्वादिधर्मो भगवतोऽसाधारण इत्यविज्ञाय मादृशः कश्चन मानुषोयमिति मन्वानानां सर्वं ज्ञानकर्मादिकं विफलमिति प्रादर्शि। अत्र-श्लोके—परं श्रेष्ठं अनितरसाधारणम्, भावं = धर्मन्, महेश्वरमिति भावप्रधानम्, अस्य भावमित्यनेनाभेदेनान्वयः अथवा—भावं आशयं, परं=गूढम्, महेश्वरमित्यस्य मामित्यनेनाभेदेनान्वयः। ममान्तराभिप्रायमजानन्तो मानुषेण रूपेणावतीर्णं मां सर्वभूतमहेश्वरमवजानन्तीत्यन्वयः।

ननु—प्रकृतितो दयानिधिर्भगवान् पापकर्मस्वपि दयया तेषामपराधान् सोढ्वा पापादुद्धरेदेवेति चेत् अत्र—श्रीमधुसूदनसरस्वत्यः 'तानहं द्विषतः क्रूरान्,' इति गीताव्याख्याने सविस्तरमाहुः—तथाहि- 'एतादृशेषु द्रोहिषु नास्ति ममेश्वरस्य कृपा,' इत्यर्थः। तथाच श्रुतिः— अथ 'य इह कपूयचरणा' इत्यादिना अदोष इत्यन्तेन। तथाहि 'तेषामयोग्यत्वात्, न होश्वरः पाषाणेषु यवांकुरान् करोति, ईश्वरत्वादयोग्यस्यापि योग्यतां संपादयितुं शक्नोतीति चेत्, शक्नोत्येव, सत्यसङ्कल्पत्वात्, यदि सङ्कल्पयेत् न तु संकल्पयति। आज्ञालंघिषु स्वभक्तद्रोहिषु दुरात्मसु अप्रसन्नत्वात्, येषु प्रसादकारणमस्ति आज्ञापालनादि तेषु प्रसीदति, येषु तु तद्वैपरीत्यं तेषु न प्रसीदतीति'।

तस्मात्—पाञ्चरात्रतदनुसारिपुराणभागांश्चोपजीव्य श्रौतस्मार्तमार्गं त्यजन्ति त्याजयन्ति केचिदिति भाषणं स्वाचार्यभाष्योक्तव्यवस्थाविरुद्धमप्रामाणिकं, पामरजन-व्यामोहकं वचनं स्वाचार्यवचनदूषणव्यक्तिपरम्॥

पाञ्चरात्रस्य प्रामाण्यं, नारायणस्य परत्वं च विशेषेण समर्थितं हयशिरो-रत्नभूषणे श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकैः॥

प्रमाणमेव पाञ्चरात्रं सर्वांशेन, संकर्षणादयोपि भगवद्रूपभेदा रामकृष्णादिवत्। वासुदेवादयोऽपि भगवन्मूर्तय उपास्या एवेत्यस्मन्मतसंक्षेपः। तस्मात्पाञ्चरात्रोक्त-प्रकारेणैव जगत्कर्तृत्वादिना तं भगवन्तं समाराध्य तत्प्रसादेन तदनुग्रहभाजनतामासाद्य ऐहिकामुष्मिकसमस्तैश्वर्यसुखमनुभवन्तु भगवद्भक्ता इति शम्॥

इति तत्त्वकौस्तुभखंडनकुलिशे प्रथम आघातः

---

श्रीगुरुभ्यो नमः

## ॥ अथ द्वितीय आघातः ॥

जिज्ञासाधिकरणविचारः

यदत्रोक्तं भट्टोजिना प्रारम्भे—

द्वितीये तु परिच्छेदे मध्वाधिकरणस्थितिः ।
प्रदर्श्यते खण्ड्यते च प्रायशो विदुषां मुदे ॥ १ ॥ इति ।

अस्यायमर्थः—मध्वाचार्यैःस्वीये ग्रन्थे प्रदर्शिताधिकरणशरीरमनूद्य दूष्यत इति ।

अत्रेदमादौ वक्तव्यम्—नात्र कौस्तुभे प्रदर्शितानि दूषणानि स्वोपज्ञानि परन्तु—अप्पय्यदीक्षितोक्तान्येवानूदितानि, (दूषितानि च तद्दर्शितेनैव पथा) तस्य—अस्य चेयान्विशेषः — स तु पञ्चाधिकरणीदूषणमुखेन सर्वं तद्ग्रन्थजातं दूषितमिति मन्यते । अयं तु तत्प्रेरितस्तन्नीतिमास्थाय प्रत्यधिकरणं दूषयन् तथा मनुत इति ।

यद्येवं तर्हि—सा दीक्षितकृतिः श्रीविजयीन्द्रश्रीचरणैः काठकोद्धारे, श्रीसत्यनाथतीर्थैर्गदायां, श्रीराघवेन्द्रतीर्थैश्चन्द्रिकाप्रकाशे, श्रीवनमालामिश्रैः मध्वमुखालङ्कारे, श्रीनारायणपण्डिताचार्यैरद्वैतकालानले दूषिता बहुधा । तैरेवायमपि दूषितप्राय एव । अथापि तत्र वक्तव्यं किञ्चिदस्तीति ममोद्यमः ॥

कौस्तुभे प्रथमाधिकरणशरीरानुवादग्रन्थः—वेदान्तविचारशास्त्रं नारम्भणीयं, विषयाभावात्, न च ब्रह्म विषयः, तद्धि स्वप्रकाशं जीवाभिन्नं निर्गुणं चेति सर्वोपनिषद्भिस्सिद्धम् । न च तत्र निरूपणीयं किञ्चिदस्तीति पूर्वपक्षः । स्यादेवं यदि ब्रह्म निर्गुणं जीवाभिन्नं च स्यात्, न त्वेवम् 'तद्विजिज्ञासस्व तद्ब्रह्मेती'ति श्रुत्या जिज्ञासापदरूढ्यर्थस्य मननापरनामधेयस्य विचारस्य विषये धर्मिणि ब्रह्मपदं श्रावितम्, तच्च गुणपूर्णत्ववाचकं 'अथकस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इति श्रुतेः । ततश्चाल्पगुणाज्जीवसङ्घाद्भिन्नमेव ब्रह्म अत्र विषयः इति शास्त्रमारम्भणीयमिति सिद्धान्त इति माध्वाधिकरणशरीरमिति ॥

अप्पय्यदीक्षितकृतावपि—'अत्रेदं परकीयमधिकरणम, ब्रह्ममीमांसाशास्त्रमिदं नारंभणीयं, निर्विषयत्वात्' इत्यादि वर्तते। एवमेव पञ्चाधिकरण्यामधिकरणशरीरानुवादग्रन्थः समानार्थक एव दृश्यते, अक्षरविपर्यासस्तु अकिञ्चित्करः।

तत्र पूर्वपक्षस्तावदयुक्तः, वस्तुतो जीवाभिन्नस्यापि ब्रह्मणः आवृतत्वेन विचार्यत्वोपपत्तेः, त्वयाहि—पुंस्त्वादिवदित्यधिकरणे जीवस्वरूपात्मकोऽप्यानन्द इदानीं भावरूपाज्ञानेनाऽऽवृतः ब्रह्मस्वरूपतद्गुणगणादिकमप्यावृतं, परमेश्वरापरोक्षज्ञानेन तु मुक्तावभिव्यज्यत इति स्वीकृतमिति पूर्वपक्षदूषणम्।

अत्र वदामः—माध्वग्रंथेषु एवंशरीरकपूर्वपक्षस्यैवादर्शनात्, अनुक्तोपालम्भ इति प्राञ्च आचार्याः।

ननु—श्रीपूर्णप्रज्ञमतीयग्रन्थपर्यालोचनायामेवं पूर्वपक्षाकारो लभ्यत इति चेत्—उच्यते—भाष्ये तावन्न पूर्वपक्षः प्रदर्शितः, तत्वप्रकाशिकासुधयोस्तु कः पूर्वपक्षी एवं पूर्वपक्षं करोतीति नोक्तम्। किन्तु तात्पर्यालोचनायामनेके पूर्वपक्षिणः स्वप्रज्ञानुसारेणाक्षिपन्तीत्येव गम्यते। तेन बहवः पूर्वपक्षाः, सर्वेऽप्येते न प्रथमाधिकरणस्य, किन्तु तद्विजिज्ञासस्वेत्यादिश्रौतजिज्ञसायाः। अस्य तु जन्माद्यस्य यत इत्यादि चिकीर्षितं शास्त्रं विषयः, शास्त्रकर्तव्यताया एवादिमेनानेनाधिकरणेन साधनात्, परम्परया विषयता तु ब्रह्मणोऽस्तु नाम, न तदेतदधिकरणशरीरप्रविष्टं भवेत्। तत्र देहस्य जडत्वेन प्रत्यक्षसिद्धत्वेन, अतिरिक्तात्मनः स्वप्रकाशत्वेन, स्वप्रकाशसंविदाश्रयत्वेन, मानसप्रत्यक्षविषयत्वेन च आत्मस्वरूप सिद्धमिति न तस्य विचारविषयत्वम्। जीवातिरिक्तेश्वरसत्वे प्रमाणाभावेन, सत्त्वे वा तस्य निर्गुणत्वेन न विषयत्वं विचारे। इतरे तु पक्षाः सुभातो ज्ञेयाः। एते सर्वे नास्तिककोटिष्वेव प्रवेष्टव्याः। जीवाभेदवादोऽपि ईश्वरस्यापि जीवत्वमेवेति तात्पर्यपर्यवसायी भवति। ततश्च श्रौतं 'ब्रह्म विजिज्ञासस्वे' ति वाक्यगतं ब्रह्मपदं जीवपरम्, जीवस्य च प्रकारान्तरेण सिद्धतया विचारविधिरनुवादक एवेति पूर्वपक्षः। एवञ्च—श्रीभगवत्पादमतीयग्रन्थाभिप्रायाऽनवबोधमूलकं दीक्षितद्वयकृततदनुवादतत्खण्डनम्॥ त्वयाहीत्यादि तु सर्वथाऽसङ्गतम्, श्रीभगत्पादग्रन्थे तदीयानां ग्रन्थेषु वा क्वापि तथाऽनुक्तेः। भगवत्पादादिभिः ज्ञानानन्दस्वरूपब्रह्मस्वरूपज्ञानानन्दादिगुणगणस्य

भावरूपाज्ञानेनावरणानङ्गीकारात । उभावप्येतौ स्वसिद्धान्तदुर्वासनावासितान्तःकरणौ ब्रह्मवादिनस्सर्वेऽप्येवं वदन्तीति मन्येते । तयोर्हि मते नित्यशुद्धत्वादिविशिष्टस्य ब्रह्मचैतन्यस्य भावरूपाविद्याऽऽवरणेन ईश्वरजीवत्वादिसमस्तव्यवहारविषयत्वमिति सिद्धान्तः। एतेन — तन्मतमर्यादयैव तन्मतं दूषयामीति तयोः प्रतिज्ञा तावत् भज्यत एव ॥

जीवब्रह्मणोरभेदवादिनः पूर्वपक्षित्वेऽपि जीव एव ब्रह्मपदवाच्यः, स च स्वप्रकाशः वस्तुनो ब्रह्माऽभेदात् , स कुतो जिज्ञास्य इति तदभिप्रायं मत्वा, श्रीभगवत्पादाः सूत्रव्याख्यानेन समाधातुं प्रक्रमन्ते । सूत्रं तु जीवब्रह्मणोर्न वास्तवस्वरूपाभेदबोधनाय प्रवृत्तम् । उपनिषदामपि सर्वासां न जीवेशयोर्वास्तवाभेदे तत्पर्यम् । 'तत्त्वमसी' त्यादीनामपि मुखं चन्द्रः, सिंहो माणवक इत्यादाविव तत्सादृश्यबोधकत्वमेवेति भगवत्पादसिद्धान्तः । सूत्रकृद्बादरायणस्यापि बृहत्त्वनिमित्तकब्रह्मशब्दस्य 'जन्माद्यस्य यत' इति वक्ष्यमाणलक्षणयुतस्य वस्तुनो वाचकस्य प्रयोक्तुः सूत्रकृतः न तयोर्वास्तवाभेदे तात्पर्यम् । अत एवात्र ब्रह्ममीमांसायां जीवाऽवृत्तिधर्मान् ब्रह्मणि निरूप्य जीवेऽपि ते धर्मास्सन्तीति मन्द शङ्कां 'नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्चान्यः' इत्यादिसूत्रैर्वारयति तत्र तत्र । एतेन—'तथासिद्धान्तोऽपि तुच्छः गुणपूर्णत्वासिद्धे'रिति कौस्तुभोक्तं निरस्तं भवति । तथाहि- प्रथमसूत्रेण हि 'तद्विजिज्ञासस्वे' ति तैत्तिरीयश्रुत्यादिचोदितब्रह्मजिज्ञासाकर्तव्यता तावत्समर्थ्यते सूत्रकृता, एतदनुसारेण 'कारणं तु ध्येयः' (श्वे) इति श्रुत्यानुगुण्येन च 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विज्ञासस्व, तद्ब्रह्मे'ति श्रुतेः यतो भूतानां जन्मस्थितिलयाः मुक्तौ च यत्समभिवेशनं, तद्ब्रह्म, जगत्कर्तृत्वादिविशिष्टं वस्तु ब्रह्मपदवाच्यम् । तत् = जगत्कर्तृत्वादियुतं ब्रह्मपदवाच्यं वस्तु, विजिज्ञासस्व=विचारयेति योजना । अत्र एतच्छ्रुतिसूत्राभ्यां, 'सदेव सोम्य इदमग्र आसीत् , तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत (छा०-६-) सोऽकामयत, बहुस्यां प्रजायेयेति, स तपोऽतप्यत, स तपस्तप्त्वा, इदं सर्वमसृजत, यदिदं किञ्च, तत्सृष्ट्वा, तदेवानुप्राविशत् (तै०२) 'स ईक्षाञ्चक्रे, कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामी (प्र०६-३) ति, स प्राणमसृजत प्राणाच्छ्रद्धां खं वायु' रित्याद्युपनिषद्वाक्यनिचयेन,

गतिर्भर्ता प्रभुस्साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ (गी-९-१७)

इत्यदिस्मृत्या च जिज्ञास्यस्य ब्रह्मणः परमेश्वरस्य सृष्टिकर्तृत्व-तदुचिततप-आदिगुणपूर्णता प्रसिद्ध्यति, — तथापि 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुति-स्मृतिभ्यः सर्वेषामाम्नायानां हरेर्गुणपूर्णतायां तात्पर्यमित्यवधार्य सर्वश्रुतिसारार्थगुणपूर्णत्वबोधक 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतिमिमामुदाजहुर्भाष्यकाराः अन्तेवासिभ्यः स्पष्टप्रतिपत्तये । न त्विदमेकमेव वाक्यं गुणपूर्णतायां प्रमाणमिति धिया ॥

किञ्च एतत्सूत्रीयशङ्कराचार्यभाष्यतद्व्याख्यानतोऽपि अत्र ब्रह्मशब्दो गुणविशिष्टवाचीति प्रतीयते, ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यत' इति । अत एव ब्रह्मशब्दस्य न जात्याद्यर्थान्तरमाशङ्कनीयम् । अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धबुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहतेर्धातोरर्थानुगमा' दिति ( भाष्ये ), तत्रानेकार्थत्वात्संशयः — कस्य ब्रह्मणो जिज्ञासेति, अस्ति ब्रह्मशब्दो विप्रत्वजातौ..........तमिमं संशयमपाकरोति ब्रह्म चेति ॥ मुक्तस्वभावमिति ॥ अयमर्थः — प्रागपि ब्रह्ममीमांसाया अधीतवेदस्य निगमनिरुक्तव्याकरणादिपरिशीलनविदितपदपदार्थसंबन्धस्य नित्यत्वाद्युपेतब्रह्मस्वरूपावगमस्तावत् , विचारणाद्विनापि अस्तीत्यादी'ति भामत्युक्तेः । एवंच— वादिप्रतिवाद्युभयरीत्या श्रुतिसूत्रतत्तद्भाष्यादितो गुणवत्त्वं लभ्यते ब्रह्मण इति व्युत्पन्नलोकमात्रस्य स्पष्टावगमात् 'गुणपूर्णत्वस्याऽसिद्धे' रिति कौस्तुभोक्तिरुभयमतीयग्रन्थाक्षरार्थाऽनभिज्ञानमूला । नन्वस्ति गुणपूर्णतालाभः तथापि तदाविद्यक (व्यावहारिक)मिति तदाशय इति तु आपातरमणीयं पृथग्जनव्यामोहकमित्यवधातव्यम् । निरस्तोऽयमीदृशव्यवहारोऽप्रामाणिक इत्यन्यत्र ।

किंच — ब्रह्मणो गुणलाभस्याविद्यकत्वे तुल्यन्यायाच्छास्त्रप्रतिपाद्यत्वस्याप्याविद्यकत्वापातेन तस्य तत्र वस्तुतोऽभावेन, प्रमाणान्तराविषयत्वेन च ब्रह्मणः, तदस्तित्वाभावपर्यवसानात्कौस्तुभकारादीनामीश्वराऽभाववादिमतप्रवेशः स्पष्टः । किंचैवंजातीयको व्यवहारोऽप्रामाणिकः श्रुतिस्मृत्यादावदर्शनात् , तत्र तु नित्यमनित्य-

मित्यादिरेव दृश्यते—' नित्योऽनित्यानाम्, नित्यः सर्वगतः स्थाणुः, आगमापायिनोऽनित्या ' इति ।

यदत्र ब्रह्मणो गुणवत्त्वमाविद्यकमित्यत्र ' साक्षी चेता केवलो निर्गुणश्चे ' ति श्रुतेः प्रमाणत्वेनोदाहरणम्, तदस्य लोकोत्तरप्रज्ञतां प्रकटयति । यतोऽत्राविद्यकमित्यादिपदं (तदर्थकपदान्तरं वा) न दृश्यते । निर्गुणपदं तु न गुणाभावार्थकं, किन्तु प्राकृतगुणत्रयरहितमित्यर्थकं ' निर्गुणं गुणभोक्तृचे ' (गी० १३-) तिश्लोकशाङ्करभाष्ये सत्त्वरजस्तमांसि गुणाः तैर्वर्जितमिति तत्पदस्य व्याख्यानात् । एवमेव व्याख्यातं श्रीधरीये गूढार्थदीपिकायां चेदं पदम् । ' त्रैगुण्यवर्जित ' मिति भारतवचोऽत्रार्थे प्रमाणम् ।

किञ्च — अनधीतसर्वशाखानां, अपरिशीलितेतिहासपुराणानामर्वाचीनाज्ञतमानां भट्टोजिप्रभृतीनां परमात्मपरानुग्रहविदिताखिलशाखेतिहासपुराणाद्यधीतसर्वशास्त्ररहस्य (प्रामाणिक) भाष्यकारोदाहृतश्रुतीतिहासपुराणवचनेषु अप्रसिद्धत्वधिया' बृहन्त ' इति श्रुतेः कल्पितत्वभाषणं स्वमतस्य प्रामाणिकपरोदाहृतवचनविरोधपरिहारेऽसामर्थ्यमात्मनः प्रकटयति । न तु परस्य तन्मतस्य वा किमपि दूषणमुक्तं भवत्यनेन ॥

किञ्च — अयमेवंवदन् पण्डितम्मन्यः ' अत एवचोपमा सूर्यकादिवत् ' (३-२-१७) इति सूत्रे शङ्कराचार्योदाहृतप्रमाणवचनं पठ्यमानेदानीन्तनवेदादिष्वदर्शनात्कल्पितमिति परकृतकरिष्यमाणचोदनां कथं समाधास्यति, एवमदसीयाश्चेति देवोऽपि न जानीयात् ॥ तत्रहि — ' यथाह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैको गच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेषु एवमजोऽयमात्मा ' इति वचनमुदाहृतम् । इदं च श्रुतिच्छायामेवानुसरति ।

वेदानामनन्तता प्रोक्ता सुरपतिना मघवता ' अनन्ता वै वेदाः ' (का० १-प्र) अतस्त्वया दुश्शका सर्ववेदमीमांसेति भरद्वाजं प्रति । भगवता पतञ्जलिनापि प्रदर्शितं शब्दोपलब्धिस्थानस्यातिमहत्त्वं ' न चैवोपलभ्यन्ते ' इति वदन्तं पण्डितव्यंसकं प्रति वदता, " उपलब्धौ यत्नः क्रियताम्, महान् शब्दस्य विषयः — सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्याः, बहुधा भिन्नाः, एकशतमध्वर्युशाखा, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाऽऽथर्वणो वेदः,

वाकोवाक्यम्, इतिहासः, पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषय इतीति"— एतावदुपलब्धिस्थानमपश्यन् नोपलभ्यत इति वादिनस्तु साहसिका एव ॥

अस्मदाचार्यास्तु त्रिभुवनगुरोः सर्वेश्वरस्य श्रियःपतेर्नारायणस्य साचिव्यादि सर्वकार्यधुरीणमुख्यप्राणस्येश्वरानुग्रहमुख्यभाजनस्य, तृतीयावतारभूताः परमात्मपारानुग्रहस्यैव सर्वस्यास्य द्रष्टारः । मुख्यप्राणस्तु प्रपञ्चसृष्ट्यादिविविधविचित्रकार्यकर्तुरीश्वरस्य सर्वाधिकारिस्थानीय इति छान्दोग्यप्रश्नोपनिषच्छङ्करभाष्यतोऽवेहि ॥ तथाहि— तद्भाष्यम् "प्राणो वा आशाया भूयान् यथावा अरा' (छा०७-१५) इति खण्डकाव्याख्याने— यस्मिन् (प्राणे) परा देवता, नामरूपव्याकरणाय आदर्शादौ प्रतिबिम्बवत्, जीवेनात्मनाऽनुप्रविष्टा, यश्च महाराजस्येव सर्वाधिकारीश्वरस्य, 'कस्मिन्नु अहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति, स प्राणमसृजते"ति श्रुतेः यस्तु छायेवानुसरतीश्वरम्, तद्यथाऽरे नेमिरर्पितो नाभौ अरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः, स एष प्राण एव प्रज्ञात्मा" इति कौषीतकिनाम्, अत एवमस्मिन् प्राणे सर्वं समर्पितम्, अतःस एष प्राणोऽपरतन्त्रः, प्राणेन स्वशक्त्यैव याति'—'स प्राणमसृजते' (प्र०-६-११)ति वाक्यव्याख्याने च ईश्वरेणैव सर्वाधिकारी प्राणः ईश्वरस्य सर्वाधिकारिस्थानीयः पुरुषेण सृज्यते इत्युक्तम् । स एव मुख्यप्राणः श्रीमध्वाचार्यरूपेण अवतीर्णो महीमण्डल इति कथं जानन्ति लोका इति चेत्— शृणु—कौस्तुभकारमतीया जनाः यथा तदीयाचार्यचरित्रश्रवणपठनादिना सांप्रदायिकेतिहासेन 'चतुर्भिस्सह शिष्यैस्तु शङ्करोऽवतरिष्यती'ति आप्तवाक्येनेत्यप्पय्यदीक्षितदर्शितमार्गेण 'शङ्करः शङ्करस्साक्षाद्व्यासो नारायणस्स्वयम् । तयोर्विवादे संप्राप्ते किं कुर्मः किङ्करा वय'मित्यद्वैतिविद्वद्ग्रकृतग्रन्थादौ विद्यमानश्लोकेन च गिरिजाजानेर्भगवतश्शङ्करस्यापरावतारतां स्वाचार्यश्रीशङ्कराचार्यवर्याणां जानन्ति, तथैव वयमप्यस्मदाचार्याणां चरित्रश्रवणपठनादिना तदीयेतिहासादिश्रवणेन च सर्वेश्वरसर्वाधिकारिनिरुक्तगुणपूर्णभगवद्दासमुख्यप्राणापरावतारत्वं जानीम इति ।

उक्तं ह्याचार्यचरिते—

सर्वज्ञमन्यमनवेक्ष्य सकार्यवीर्यं नारायणो भुवनजीवनमात्रभाषे ।
आनन्दयेः सुमुख भूषितभूमिभागो रूपान्तरेण मम सद्गुणनिर्णयेन

आदेशमौलिमणिमुज्ज्वलवर्णमेनं बद्धाञ्जलिर्मरुदनर्घमधत्त मूर्ध्ना ।
हारावलीमिव हृदा विभुधेन्द्रयाज्ञां बिभ्रन्निजाननुजिघृक्षुरवातितीर्षत् ॥ इति ।

मुख्यप्राणस्य तु महिमातिशयः 'देवासुरास्संयन्ता आसन्' इत्यादिछान्दोग्येऽन्यत्रोपनिषदादिषु चोक्तः पौनःपुन्येन, तत एवावगन्तव्यः ॥

इदमवधेयम्—'अथ ह एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे, तं हाऽसुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्वंसेत, एवं यथाऽश्मानमाखणमृत्वा विध्वंसते, एवं हैव स विध्वंसते, य एवं विदित्वा पापं कामयते, यश्चैनमभिदासति, स एषोऽश्माखणः' (छा०१-२-८) इति मुख्यप्राणं तदुपासकं च असुरकृतपापवेधो न बाधत इति दर्शयित्वा खण्डशेषेण मुख्यप्राणमहिमोच्यते विशेषेण ॥ विदध्वंसुः = नष्टाः, अश्मानं = कठिनपाषाणं, आखणः = पांसुपिण्डः अभिदासति = हिनस्ति ॥ एतादृशमहिमोपेतश्रीमुख्यप्राणावतारभूताः श्रीमध्वाचार्याः भुवनेऽवतीर्य, बदरीं प्राप्य, भगवतो व्यासात्सूत्रकृतः शास्त्रोपदेशमादेशं च स्वीकृत्य, यथाचार्याभिप्रायं सूत्रभाष्यादिकं विरच्य, भगवद्भक्तमास्तिकलोकं तोषयामासुः । तेन जानीमो भगवदनुग्रहेण सर्वज्ञा अस्मदाचार्याः इति । अतस्तदुदाहृतं 'बृहन्त' इति वाक्यं श्रुतिवाक्यमित्यत्र न विशयलेशोऽपीति सिद्धम् ॥

प्रकृतमनुसरामः— यदुक्तं (कौ.) गुणानां पारमार्थिकत्वेऽपि ब्रूमः—त्वन्मते विरुद्धधर्मैर्भेदो न सिद्ध्यति.... विरुद्धगुणशालिनोरत्यन्ताभेदस्साधितः, तत्कथं जीवब्रह्मणोर्भेदस्सिद्ध्येदित्यादि ॥ अत्रोच्यते—अस्तु नाम धर्माणां व्यावहारिकत्वादिकथा, उभयोरपि तयोर्धर्मयोः परस्परभेदकत्वं तावत् तदाश्रयाणामकामेनाप्यभ्युपेयम् । अन्यथा कौस्तुभकृन्मताचार्यैर्जीवब्रह्मधर्माणां व्यावहारिकत्वेऽपि 'ब्रह्मधर्माणां जीवादावविद्यमानत्वेन जीवादिभ्यो भिन्नः परमेश्वर एव ब्रह्मपदवाच्यो जगत्कर्ता इति कृतस्सिद्धान्तः ॥

"परमेश्वर एव अक्षिस्थानः प्रत्येतव्यः । तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम् । तस्माद्भेदव्यपदेशात्परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते । तस्मात्परमेश्वरो वैश्वानर इति सिद्धम्" । इति अन्तर्याम्यदृश्यत्ववैश्वानराधिकरणेषु ब्रह्मपदवाच्यपरमेश्वरस्य अक्षिस्थानत्वादि सिद्धान्तः, द्युभ्वाद्यधिकरणे ब्रह्मणः सर्वा-

श्रयत्व-मुक्तोपसृप्यत्वादिसिद्धान्तश्च भज्येत । सूत्रकृदुक्तब्रह्मलक्षणं च निरर्थकं भवेत् । एतेन—जीवब्रह्मणोर्धर्मा भिन्नभिन्ना एव परस्परव्यावर्तका इति सर्वैर्व्याचार्यैं स्वीकार्यम् । अन्यथा सर्वं शास्त्रं निरर्थकं स्यात् ॥

अस्मदाचार्यास्तु— 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति धर्माणां सर्वेषां परस्परासामानाधिकरण्यं तदाश्रयव्यक्तीनां च स्वभावतो भेदं चाङ्गीकुर्वन्तीति सुप्रसिद्धम् ॥

भगवान् बादरायणः श्रुत्यन्तोदितमहामहिमवतो महापुरुषस्य नारायणवासुदेवादिपदाभिधेयस्य हरेः श्रुतिसिद्धां गुणपूर्णतामास्तिकलोकेभ्यो बोधयितुं समस्तशास्त्रार्थसाराथब्रह्मसूत्रगीतादिकमचीक्लृपत् । तद्ग्रन्थरत्नं व्याकुर्वाणाः श्रीमदाचार्याः जीवब्रह्मणोरुपासकोपास्यभावाल्पज्ञत्वसर्वज्ञत्वादिनिरूपणपूर्वं तामेव गुणपूर्णतामाविष्कृत्य तयोर्वास्तवं भेदं सूत्रकृदभिमतं स्थापयामासुः । न तु क्वापि परस्परासमानाधिकरणधर्मवतामत्यन्ताऽभेदमसाधयन् । आनन्दमयाधिकरणादिषु तु भगवद्रूपाणां मूलरूपावताररूपाणां च न परस्परं भेद इति निरूपणं नाऽसंगतम् । भगवद्रूपेषु वर्तमानानां धर्माणां भेदाभावस्य शास्त्रसिद्धत्वान्न विरोधः ॥ 'एक आत्मनः शरीरे भावादि' त्यधिकरणेऽशांशिनोर्नात्यन्ताभेदः, न निर्विशेषाभेदः, तथा प्रमाणाभावात्, तद्दृष्टान्तेन सर्वत्राक्षेपो न कार्यः ॥

यत्तु—जीवब्रह्मणोरभेदबोधकानां सहस्रशः सत्वात्, श्रूयते हि अमृतबिन्दूपनिषदित्यारभ्य, तद्ब्रह्माहमस्मीत्यादिवाक्यजातं दर्शितम् (कौ०)। तत्सर्वं ब्रह्माधीनं जीवजातं जीवस्वामी ब्रह्म, द्वितीयः परमात्मा नास्तीत्याद्यर्थवर्णनेन, परमात्माऽद्वितीयः सर्वनियामक इत्याद्यर्थकमिति सुवचम् । अतो न तद्विरोधः । वस्तुतस्तु एषु नैकमपि वचनं तदीयभाष्य उदाहृतम् । तथात्वेऽपि तान्यर्थान्तरवर्णनेन भेदपरतया नेतुं शक्यानि, तच्च दर्शितमधस्तात् ॥

यच्चाऽभेदे लाघवमवष्टम्भकमुक्तं, तदत्यन्तमपेशलं निर्लज्जस्य भाषणम् । परिहसेयुरिदमाकर्ण्य विदितलोकव्यवहारा जनाः, महासदसि दृष्ट्वा तु किं कुर्युरिति न जानीमः ॥

यदप्युक्तं—नाहमीश्वर इति प्रत्यक्षेण न भेदसिद्धिः, तस्य व्यावहारिकभेदविषयत्वादिति, तदसाधु । भेदद्वैविध्यस्यैवासिद्धेः ॥ किञ्चासौ केन महताऽऽचार्येण कस्यां महाविद्याशालायामेवमभ्यपि गो न जानते जनाः । लोकाचार्यो भगवान् श्रीकृष्णः पार्थमन्तेवासिनं 'सोऽहं' मित्यभेदबुद्धिर्नरकसाधकमोहकारणमज्ञानमिति सविस्तरमध्यापयामास । स चाध्यापितो भागोऽद्यापि विराजते गीतायां (१६-अ) श्रीकृष्णानुग्रहेण । अभेदबुद्धिरनर्थहेतुरिति जानन्तु सर्वे इति भगवतोऽभिप्रायः—तथाहि —

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।
आढयोऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥

यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥

प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ इति ॥

अत्राभेदबुद्धेरज्ञानत्वमोहजनकत्वानर्थहेतुत्वाभिधानेन न सा प्रमाणं, नापि शास्त्रजन्यसमीचीना बुद्धिः । 'नाहमीश्वर इति भेदबुद्धिस्तु नाज्ञानं, नाऽनर्थहेतुः, नाप्रमाणं । शास्त्रजन्यसमीचीनज्ञानम् । अतोऽभेदबुद्धिर्न कार्या, भेदबुद्धिस्तु कर्तव्येत्युक्तं भवति ॥

एवञ्च 'नाहमीश्वर' इति भेदप्रत्यक्षस्य व्यावहारिकभेदविषयकत्वाभिधानं शास्त्रार्थाज्ञानमूलकम् ॥

भेदप्रतिनिधिर्विशेष इति रिक्तं वच इति वचनमेव रिक्तं वचनम् । अस्मन्मतसिद्धान्ततत्त्वार्थापरिज्ञानमूलकत्वादेतदुक्तेः । अप्पय्यदीक्षितकृतिदूषणावसरे विशेषाचिन्त्यशक्तिस्वरूपोदाहरणानि कालानले स्पष्टीकृतानि परमतदूषणपूर्वम् (९.१-१८) अत्र प्रष्टव्यमित्यादिना ।

एवं गुणानां स्वरूपात्मत्वात्....सगुणं ब्रह्मेति शब्दो निर्गुणत्वार्थवसाय्येवेत्यादेर्दूषणमपि तत्रैव द्रष्टव्यम् ॥ 'नाहमणु'रित्यादिप्रत्यक्षस्य त्वयापि भ्रमत्वस्वीकाराच्चेत्यप्यसङ्गतम । जीवाणुत्वस्य शास्त्रसिद्धत्वेन तथानङ्गीकारात् ॥

यदप्युक्तं—न च 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्यादिभिर्भेदसिद्धिः, अन्योऽन्तर आत्मेत्यादिवदुपपत्तेरिति दूषणम्—एतदपि न समञ्जसम्। यतः-इदमस्मन्मतसिद्धान्तस्य गीताप्रकरणार्थस्य चाज्ञानेन कल्पितम्। अन्नमयादीनां पञ्चानामपि ब्रह्मस्वरूपत्वात, तत्र ब्रह्मनानात्वस्य शास्त्रासम्मतत्वेन नानात्वोक्तेरुपपत्तिरुक्ता ॥ ब्रह्मणोऽद्वितीयत्वमङ्गीकुर्वता त्वयापि तदवताराणां ब्रह्माऽनन्यत्वमनया रीत्या रीत्यन्तरेण वा साधनीयम्। अन्यथा ब्रह्माऽनेकत्वप्रसङ्गदोषो दुष्परिहरः। गीतायांतु (अ१५) पञ्चदशभिः श्लोकैः परमात्मनः प्रपञ्चसृष्ट्यादिकर्तृत्वादिसामर्थ्यं निरूप्य, सृष्टपदार्थाः के, स्रष्टुरीश्वरस्य कथं व्यवहारः, सृष्ट्यादिनिरूपणस्य फलं च किमिति जिज्ञासां अध्यायशेषैः पञ्चभिः श्लोकैः द्वाविमावित्यादिभिः प्रशमयति भगवान्। तत्राद्यश्लोकार्थः—क्षराक्षराख्यराशिद्वयात्मक पुरुषपदाभिधसमस्तप्रपञ्चः सृष्टो लोके चकास्तीति ॥ क्षराक्षरपदव्याख्यानमुत्तरार्धम्। द्वितीयेन तु श्लोकेन पूर्वोक्तक्षाराक्षराभ्यामन्यः पुरुषोऽस्ति स उत्तमः परमात्मेति चोच्यते। तस्य कार्यमाह—यो लोकत्रयमित्यादिना। इदं बोध्यं—पुरुषस्त्रिविधः, क्षरः, अक्षरः, परमात्मेति। स परमात्मा स्रष्टा उत्तमः सर्वलोकनियन्तेति सर्वशास्त्रतात्पर्यमिति। उत्तरैस्त्रिभिः नियन्तुः पुरुषोत्तमत्वादिविवरणं, तस्य तथात्वज्ञानोपासने, तत्फलं च प्रबोधितमिति। ततश्च तत्र प्रसक्ताः पदार्थास्त्रयः तत्र परमात्मन उक्तमन्यत्वं स्वरसत उपपद्यते इति न काचिदनुपपत्तिः। अतः अन्योऽन्तर आत्मेत्यादिवदुपपत्तेरिति दृष्टान्ताभिधानमज्ञानमूलकमेवेत्यवधेयम्। एवञ्च उत्तमःपुरुष इति वचनं प्रपञ्चेश्वरयोर्भेदमेव बोधयतीति स्थितिः ॥

यदुक्तं—गुणादीनां स्वरूपात्मकत्वेन सगुणं ब्रह्मेति वचनं निर्गुणत्वपर्यवसायीति, तदपि तान्त्रिकव्यवहारानभिज्ञानमूलकम्। यतः कारणत्वादीनां कारणादिस्वरूपत्वेऽपि कारणादि न निर्धर्मकमिति तान्त्रिका आहुः ॥ किञ्च-ये गुणाः स्वरूपभूताः इत्यङ्गीक्रियन्ते, न तदभावबोधकं श्रुतिगतं निर्गुणपदं, किन्तु सत्त्वादिगुणत्रयाभावबोधकम्। अत इयं श्रुतिर्ब्रह्मणो निर्धर्मकत्वे प्रमाणं भवितुमर्हति ॥

यत्तु—'नवीनमाध्वेन शब्दान्तरादिकं जीवब्रह्मबोधकमित्यादि—स्वीकारादि'त्यन्तमुक्तम्, तदपि चिन्त्यम्—यतः श्रीव्यासराजश्रीचरणग्रन्थभावमनाकलय्य

मीमांसकमतं च सम्यगबुध्वा यथेच्छं प्रलपितमित्थम् । शब्दान्तरादीनां प्रमाणषट्कवादिना त्वया पृथक् प्रामाण्यस्य दुर्वचत्वेन विरुद्धधर्माधिकरणत्वलिङ्गकानुमानोद्बोधनद्वारा जीवब्रह्मभेदकत्वोपपत्तेः । न च—ब्रह्मणि विरुद्धधर्मसमावेशवदत्रापि सोऽस्तीति वाच्यम् । 'अणोरणीयान् महतो महीयानि"ति श्रुतिवाक्येन विरुद्धधर्मसमावेशस्य बोधितत्वेन ब्रह्मणि तत्स्वीकारोऽपि 'एषह्येनं' प्रबोधयति, एतस्माज्जीव उत्तिष्ठती' ति श्रुतिवाक्याभ्यामुद्बोधकत्वोद्बोध्यत्वरूपविरुद्धधर्मयोर्भिन्ननिष्ठत्वस्यैवावगमेन तद्दृष्टान्तकथनायोगात् ॥

यच्चत्रोक्तम्—पूर्वतन्त्रे भेदस्यौपाधिकत्वाच्चेत्यभिधाय न ह्यैन्द्रदधिपयोयागयोरित्यादि तद्विवरणं कृतम्, तदतितुच्छम् । मीमांसकैस्स्वमतीयप्रक्रियानिर्वाहाय क्वचिज्जघन्यवृत्त्याश्रयणे, सा सर्वैः सर्वत्रादरणीयेति किमीश्वरशासनमस्ति ? येन सर्वे तान्त्रिकास्तेषामेव पन्थानमाद्रियेरन् । तादृशं शासनं नास्तीत्येव हि ज्ञात्वा तेषां मतं शतधा दूषयन्ति वैयाकरणादयः । तत्रोक्तमेकमुदाहरणम्—फलं व्यापारश्चेत्युभयं धातुवाच्यम् । तदाश्रयः कर्ता कर्म च । कर्तरि तिङि व्यापारस्य, कर्मणि तिङि फलस्य विशेष्यत्वम् । देवदत्तः पचतीत्यादौ देवदत्ताभिन्नकर्तृनिष्ठः विक्लित्त्यनुकूलो व्यापार इति बोधशरीरम् । कर्मणि प्रयोगे तु-पच्यते तण्डुल इत्यादौ देवदत्ताभिन्नकर्तृनिष्ठव्यापारजन्या तण्डुलाभिन्नकर्मनिष्ठा विक्लित्तिरिति बोधशरीरमिति वदन्ति शाब्दिकाः—

फलव्यापारयोर्धातुराश्रये च तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥

इति वचनात् 'लः कर्मणि च भावे चे' ति सूत्राच्चेति ॥ मीमांसकास्तु—फलं धात्वर्थः, भावना तिङर्थः, कर्तुराक्षेपाल्लाभः, फलानुकूला भावनेति बोध इति वदन्तीति स्थितिः । भावार्थाधिकरणं मानं तेषाम् । इदं च मतं मनोरमामञ्जूषभूषणसारादौ बहुधा दूषयित्वा मीमांसकानां शास्त्रजन्यं ज्ञानं च नास्तीति प्रतिपादितम् ।

वैशेषिकादयोऽपि पचति देवदत्त इत्यादौ पाकानुकूलकृतिमान् देवदत्त इति प्रथमान्तार्थविशेष्यकबोधं वदन्तो भावनाविशेष्यकबोधवादिनो मीमांसकाननेकधा दूषयन्ति ॥

किञ्च विदितमेवैतत् — यत्—देवताया विग्रहभोजनतृप्तिप्रसादफलप्रदत्वलक्षणधर्मपञ्चकाभावं वर्णयित्वा कर्मजन्यापूर्वविशेषः फलं ददातीति सिद्धान्तयित्वाऽऽत्मानं श्रुत्यर्थमीमांसकत्वेन प्रख्यापयन्ति शबरादय इति। इदमध्यात्मविद औपनिषदाः सर्वथा न सहन्ते। यत एते व्याससिद्धान्तं प्रद्विषन्तीति तद्ग्रन्थतो लभ्यते। अतः शङ्कराचार्यप्रभृतयः इदं मतमदूषयन् सूत्रभाष्यादौ। तथाहि— देवताधिकरणादौ देवताया विग्रहादिपञ्चकाभावे सर्वं शास्त्रं निरर्थकं स्यात्, अपूर्वकल्पने मानाभावात्, 'देवासुरास्संयत्ता आसन्' इत्यादिभिर्विग्रहादिसद्भावावगमात्। 'फलमत' इति फलाधिकरणेन जगत्कर्तुरीश्वरस्यैव फलप्रदत्वसिद्धेः। 'भोक्तारं यज्ञतपसाम्,' (गी-५) अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे (गी ९) ति भोजनलाभात्, 'तत्प्रसादात्परां शान्ति' (गी-१८)मिति प्रसादोक्तेः, 'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविता' इति दानस्य, दानस्य प्रसादपूर्वकत्वनियमेन प्रसादतृप्त्योरपि लाभाच्च मीमांसकमतमसमञ्जसमिति प्राहुः॥

एतेन जैमिनीयमतसर्वस्वभूतप्रमेयनिरसनेन तदीयानां निर्णयोऽकिंचित्कर इति सूचितम्।

एवमवान्तरप्रक्रिया अपि, जातिशक्तिवादः, विनियुक्तविनियोगाभाववादः, कार्यतात्पर्यवादः इत्येवमादयो मतान्तरप्रवर्तकाचार्यैः प्रत्याख्याताः।

नागेशोपि वैयाकरणो मञ्जूषायां विधिवादे देवताविग्रहाद्यभाववादादिकं निरास्थत्। अतो व्यासमतविरुद्धभाषिणां भाषणमास्थातुं कथमिच्छेयुः। तस्मात्कौस्तुभोक्तं मीमांसान्यायविरोधादिकं सर्वं केवलविभीषिकामात्रं पामरजनव्यामोहकम्। विस्तृतमेतदुदारायां, कालानले च 'न्यायैः शङ्कान्तराद्यै' (४-प्र-५६) रित्यादिना विस्तरजिज्ञासुभिस्तत एवावसेयम्।

किंचायं भट्टोजिस्तद्गुरुश्च मीमांसकमतविरुद्धमेव भाषमाणो वञ्चयति जनान्। तथाहि—वार्तिकपर्यालोचनायामपि स मन्यते कर्मभेदस्य पारमार्थिकत्वमिति प्रतीयते, अयं हि तदीयो ग्रन्थः—'न च शब्दवदेव परोपाधिको भेदप्रत्ययो न पारमार्थिको भावनाभेदः स्यात्, नैतदेवं शब्दस्यापि, गकारादिभेदः पारमार्थिको नैव कस्यचिदनिष्टः, तद्वदिहापि यागादिभेदे सिद्धे शब्दस्थानीयमनुष्ठानसामान्यं

निरूप्यते । नच शब्दान्तरभूता ध्वनयो द्रुतादिबुद्धिमपारमार्थिकीकुर्वन्ति, एवमत्र यागादयोऽदूरव्यतिरिक्ता ' इति । एतदर्थस्स्पष्टः ।

ततश्च—तन्त्ररत्नवरदराजीयोक्तं कर्मभेदस्यापारमार्थिकत्वम्, तदनुसारिदीक्षितद्वयवचनं च, न भट्टादिप्राचीनमीमांसकसंमतम् ।

किंच—यागदानहोमानां भवदभिमताऽमुख्यभेदसिद्धये शब्दान्तरादीनां हेतुत्वेनाश्रयणेपि, बाधकाभावस्थले मुख्यभेदस्यैव साधकतया तेषामाश्रयणे काऽनुपपत्तिः, किं तेषाममुख्यभेदसाधकत्वमेवेति तल्लालाटे भगवल्लेखो दृश्यते । तेषां भेदसाधकत्वस्वभाव इति हि प्रसिद्धम् । भवतस्तावत्तथावासनावासितचित्तस्य तथाभानेपि, न तथाभानं परेषामुपासितगुरुचरणानां सुशास्त्रसंगतचेतसामित्यवेहि ।

किञ्च—जीवब्रह्मणोर्भेदः पारमार्थिक इति मतमनुमतं मीमांसावार्तिककृतोऽपि । यतस्तदीयश्लोकवार्तिके, संबन्धाक्षेपपरिहारेऽद्वैतनिराकरणपराः श्लोका विराजन्ते । एते हि ते—

> पुरुषस्य च शुद्धस्य नाऽशुद्धा विकृतिर्भवेत् (८२)
>
> स्वाधीनत्वाच्च धर्मादेस्तेन क्लेशो न युज्यते ।
> तद्वशेन प्रवृत्तौ वा व्यतिरेकः प्रसज्यते ॥ (८३)
>
> स्वयं च शुद्धरूपत्वादसत्वाच्चाऽन्यवस्तुनः ।
> स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किं कृता ॥ (८४)
>
> अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते ।
> स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥ (८५)
>
> विलक्षणोपपाते हि नश्येत्स्वाभाविकी क्वचित् ।
> न त्वेकात्माऽभ्युपायानां हेतुरस्ति विलक्षणः ॥ (८६) इति ।

किं बहुना मीमांसकचक्रवर्तिना पार्थसारथिना शास्त्रदीपिकायां तर्कपादे सांख्यादिमतनिरसनप्रस्तावेऽद्वैतमतं सविस्तरं निरस्तम् । तेन जानन्ति सुधियो मीमांसकानां न जीवपरयोरभेदे तात्पर्यमिति ॥

'शब्दान्तरे कर्मभेद' इतिसूत्रे च भेदस्य व्यावहारिकत्वबोधकपदाऽश्रवणात्सूत्रकृतो व्यवहारिकभेदे तात्पर्यं न सुकल्पम्। कामुकस्य विरहिणः 'प्रासादे सा पथिपथि च सा पृष्ठतः सा पुरः सा' इति सर्वत्र कान्तादर्शनवत् दुःशास्त्रवासनावशंवदमानसस्य विष्णुविद्वेषिणो जनस्य सर्वत्राद्वैतदर्शनमुपपद्यते। एतेन यद्वक्ष्यति भट्टोजिः 'उपसंहारोऽर्थाभेदा' (३।३) दित्यधिकरणे मीमांसान्यायविरोध इत्यादि, 'तत्सर्वं मीमांसान्यायतत्त्वानभिज्ञता लक्षणमिति विजानन्तु सुधियः॥

किञ्च—सत्तात्रैविध्यमनङ्गीकुर्वतां मीमांसकानां मते व्यावहारिकभेदपरत्वं तदीयन्यायानां कथंचिदपि दुरुपपादम्।

वस्तुतः पदार्थानां व्यावहारिकभेदाङ्गीकारे तेषां भेदो नेत्येवेत्युक्तं भवतीति प्रजाः कार्याऽकार्यविवेकशून्यहृदया उत्सृङ्खलप्रवृत्त्या इह परत्र च महत्कष्टमनुभवेयुः। अतो—जीवपरयोः, परस्परं जीवयोः, सर्वेषां च वस्तूनां वास्तवो भेदो निरूपितः शास्त्रे, ये तु भेदबुद्धिर्मिथ्येति निरूपयन्तो जनान्वञ्चयन्ति, ते तु हितशत्रवः। तस्माद्भेदः सत्य इति सिद्धम्॥

॥ इति जिज्ञासाऽधिकरणविचारः॥

---

## ॥ जन्माधिकरणविचारः॥

(कौ०) उदाहृतश्रुतिस्थब्रह्मपदस्य जीवपरत्वमाशंक्य निराक्रियते, तथाहि—ब्रह्मशब्दो जीवे रूढो 'बृहज्जातिजीवकमलासनशब्दराशि' ष्विति धातोरुत्पन्नत्वात्, ब्रह्मणि तु गुणपूर्तिवशात्प्रयुज्यमानो यौगिकः, एवंच रूढेर्बलीयस्त्वा 'त्तद्ब्रह्मे' त्यत्र ब्रह्मपदं जीवपरमेव, तत्कथं जीवातिरिक्तस्य विचार्यतेति पूर्वः पक्षः। सिद्धान्तस्तु—सत्यं रूढिर्बलीयसी, बाधादिह त्यज्यते....पूर्णगुणो विष्णुरेव योगतो गृह्यत इति। (अनुवादः)

(कौ० दूषणम्) अत्र पूर्वपक्षस्तावदशुद्धः। शरीरबृंहकत्वादिवत्लप्तयोगेनैवोपपत्तौ जीवे रूढिकल्पनायोगात्, 'प्रथमाधिकरणे, आनन्दमयोऽभ्यासात्, सर्वत्र प्रसिद्धोपदेशात्, गुहां प्रविष्टावात्मानौ ही' त्याद्यधिकरणेषु च ब्रह्मशब्दस्याऽज्ञरूढिर्जीवे, विद्वद्रूढिस्तु विष्णावेवेति त्वदुक्तेश्चेत्यादि।

(कु०) इदमसंगतम्—सति योगे, न रूढिराश्रयणीयेति नियमाभावात्, पङ्कजादिशब्दे योगस्य रूढेश्च सत्त्वाच्च। अवयवार्थाऽनुसन्धानाभावेपि जीवादिप्रतीते रूढ्यंगीकारात्। विद्वद्रूढिरित्युक्तिः पूर्वपक्षासांगत्ये कथं हेतुर्भवेदिति किंचिदपि नालोचितवानयं ग्रन्थकृत्। विद्वद्रूढिस्तु श्रुतीतिहासपुराणादिष्ववयवार्थानुसन्धानपूर्वं जगत्कारणत्वादिनिखिलगुणगणपरिपूर्णे परतत्त्वाभिधेये ब्रह्मणि बहुलप्रयोगमूला, तां प्रदर्श्याऽज्ञजनव्यामोहपरिहाराय खलु भाष्यकृतामुद्यमः। अत एव हि भवतां भाष्यकारः कोशाद्यवलंबेन, उपायान्तरेण वा, ब्रह्मशब्दोऽत्र जात्यादिपर इति परकीयशङ्कां 'ब्रह्मच वक्ष्यमाणलक्षणं 'जन्माद्यस्य यत' इति, अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशंकितव्य'मित्यादिना पर्यहार्षीत्। 'आदिना जीवकमलासनशब्दराशीनां ग्रहण' मित्याहाऽऽनन्दगिरिः। एवंच—श्रौतं सौत्रंच ब्रह्मेदं परदेवतामालाऽसाधारणधर्मवद्वस्तु परं, तेन नेदं लक्षणमतिव्याप्तं, जात्यादिव्यावृत्तिश्च भवतीति भवदीयैरुक्तं भवति। नानासम्बद्धग्रन्थकारैः पूर्वपक्ष उक्तः, उक्तस्तु श्रीजयार्यैस्तत्वप्रकाशिकायां तत्र विद्यमानाऽऽनुपूर्वी नानूदिता भट्टजिना। तत्र हि—'बृहज्जातिजीवे 'ति ब्रह्मशब्दस्य जीवे रूढत्वा' दिति पंक्तिरस्ति। उदाहृतोऽयं पाठो मध्वमुखलङ्कारकृता। न्यायविवरणटीकायां तु 'ब्रह्मशब्दस्तावज्जातिजीवकमलासनशब्दराशीषु प्रसिद्ध' इति पाठश्चास्ति। ग्रन्थकृदयं स्वसंकल्पितदूषणानुगुणपाठं कल्पयित्वा तमद्यनु दूषयतीत्यनेन विभाव्यम्।

न्यायविवरणानुसारेण तत्वप्रकाशिकायां बृहच्छब्दो गुणपूर्णत्ववाचिब्रह्मशब्दपर्याय इति ज्ञेयम्, अतो ग्रन्थद्वयस्यैकार्थता। सुधाचंद्रिकादावभिधानादिति व्यवहारादभिधानमिदम्।

अतएव—बृहद्ब्रह्मशब्देति समस्तगुणपूर्णब्रह्मणि प्रसिद्धमित्येतदधिकरणसुधायामुक्तम्। बृहच्छब्दस्तु 'वर्तमाने पृषद्बृहन्महच्छतृवच्चे 'ति शाकटायनवचनेनाऽतिप्रत्ययान्तो निपातितः, निपातनादेव लघूपधगुणाभावः। ब्रह्मशब्दस्तु बृहधातोः 'अन्येभ्योऽपि दृश्यन्ते' (पा-३-२-७५) इति मनिन्प्रत्यये पृषोदरादित्वात्, ऋकारस्य रादेशो निष्पन्नः, केचित्तु—'बृंहेर्नोऽच्चे' ति शाकटायनवचनेन मनिन्प्रत्यये नस्याऽकारादेशो यणि निष्पन्न इति वदन्ति। 'अन्यदीयशास्त्रेण साधुत्व

कल्पनापेक्षया पाणिनीयेन साधुत्वकल्पनं श्रेय इति 'पृषोदरादि' सूत्रशेखरोक्तेराद्यः कल्पो वरम् । अत्र 'बृहधातोर्मनिन्प्रत्यये निष्पन्नब्रह्मशब्दस्य, 'ब्रह्मशब्दस्य व्युत्पाद्यमानस्य.... बृहतेर्धातोरर्थानुगमात् , वृद्धिकर्मा हि बृहतिरतिशायने वर्तते इति — जिज्ञासानयश्रुतप्रकाशिका - शाङ्करभाष्य - भामतीकाराणामुक्तिरनुकूला । आनन्दगिरिस्तु बृंहतेर्ब्रह्मशब्दनिष्पत्तिं मन्यते । अतो 'धातुरप्रामाणिक' इति भाषणं स्वाचार्यभाष्याद्यनध्ययनमूलकं, द्वेषमूलकं वेति बोध्यम् । नेयमानुपूर्वी प्रसिद्धेति भाषणमयुक्तम् । यतः अदृष्टाश्रुतग्रन्थस्य भवतः सर्वमप्रसिद्धमेव । ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः' इति, अतएव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरपरत्वमाशङ्कनीयम् , (शां०भा.) आदिना जीवकमलासनशब्दराशीनां ग्रहणम् (आन.गिरि) इति भवदीयभाष्यादिग्रन्थपर्यालोचनायां बृह (त्) ब्रह्मान्यतरपदघटितानुपूर्वीपाठो भवन्मताचार्येभ्यः पूर्वमेव प्रत्नेषु ग्रन्थेषु आसीदिति ज्ञायते ।

'बहुलमेतन्निदर्शनमिति' चुरादौ पठितस्य दशगणीपाठो बहुलमित्याहुः । तेन अपठिता अपि (धातवः) लौकिकवैदिकसौत्रा अपि बोध्याः, भ्वादिस्तुदादिश्चाकृतिगणः' इति भवतैव कौमुद्यामुक्तत्वेन तदन्यतरगणे विशिष्टेयमानुपूर्वी पठितेति शक्या वक्तुम् । नच— जात्यादीनां क्रियात्वाभावात् कथं धातुत्वमिति वाच्यम् । 'गडि वदनैकदेशे, विदि अवयवे, भदि कल्याण' इत्यादाविव तत्तद्व्यापारोपलक्षणया धातुत्वस्य सुवचत्वात् ॥

(कौ) यदपि 'चतुर क्रमठे' त्यादिदण्डकमेकं पठित्वा एतद्घटकनामनिर्देशे नोदाहृतश्रुतीनां मध्वाचार्यकल्पितत्ववचनम् ; इति । एतदपि दत्तोत्तरम् । (२२.पुटे)

किंच—चतुरश्रुतिरिति नास्मदीयाचार्यग्रन्थेषु क्वापि व्यवहृतम् । तुरश्रुतिरिति तु दृश्यते । 'चतुरश्रुति 'रिति भाष्यकारीयवाक्ये चेति भिन्नं पदं समुच्चये सः, तुरश्रुतिश्चेत्यर्थः । यथावस्थितपदपदार्थविवेकशून्यहृदयो भवान् अन्यथाऽनूद्य दूषयन्नात्मनोऽच्युतप्रज्ञशिरोमणितां प्रख्यापयति । समानमेतत् भवतो गुरोरपि । सन्ति हि मन्त्रद्रष्टारो विचित्रनामधेया इति अनुक्रमणिकाग्रन्थतो जानन्त्येव वैदिकविद्वज्जनाः ।

किञ्च — भवदीयदण्डकपाठोऽपि भवत एवाऽविवेकितमत्वमाविष्करोति ।

कौमुद्यां भवानेव 'अनुवादे चरणाना' मिति सूत्रे कठकालापं, कठकौथुममिति कालापकौथुमशब्दौ प्रायुङ्क्त, तत्रैव सूत्रे महाभाष्ये कठ-कालाप कौथुम-कौमोद-पैप्पल शब्दाः प्रयुक्ताः, अनृष्याऽऽनन्तर्येति सूत्रोयबिदादिगणे माठरकौशिकगोप-वनशब्दानां पाठो दृश्यते, अत्रिभृगुवसिष्ठेति सूत्रे, 'निर्णेशुगच्छगलाद्वत्सभरद्वा' जेति सूत्रे च भृगुवत्सशब्दौ पठ्येते, एते कठकालापादयः शब्दा ऋषिवचनाः, मन्त्रद्रष्टृत्वं च ऋषित्वमिति सुप्रसिद्धम् ।

वल्लप्तयोगेनैवोपपत्तौ जीवे रूढिकल्पनाऽयोगादिति तु स्वस्यैव मूर्खतमत्व-मावेदयति, शङ्करभाष्यादौ ब्रह्म च वक्ष्यमाणलक्षणं, बृहतेर्धातोरर्थानुगमादित्यादि वदता, जीवादिव्यावृत्तिरभिहिता स्वन्मताचार्येण । वल्लप्तयोगेनैव जीवेपि किंचिदर्था-नुगमसद्भावेन ब्रह्मशब्दस्य जीवपरत्वसंभवे तद्व्यावृत्तये कृतप्रयासो विफल एव स्याद्भव-दीयानाम् । अतो ब्रह्मशब्दो जीवादौ रूढ इति पूर्वपक्षिणोऽभिप्राय इति वर्णनीयं सर्वैः ॥

कौ० यच्चोक्तं 'विद्वद्रूढिस्तु विष्णावेवे' ति त्वदुक्तेश्चेति, पूर्वपक्षासाङ्गत्य-निरूपणावसरे, (कु०) तदत्यन्तबुद्धिमान्द्यविलासः ।

ग्रन्थकृत्त्वेन सुप्रसिद्धोऽयमत्रैवं वदतीत्येतत्परमाश्चर्यमावहति । सिद्धान्तोक्तिः कथं पूर्वपक्षानौचित्ये हेतुः स्यादिति किंचिदपि नालोचितमायुष्मता । पूर्वपक्षस्तु सिद्धाऽन्ताविरोधेनैव कार्य इति किमस्ति राजशासनादि । पूर्वपक्षिणः केचिद-ज्ञानात् , केचित् सिद्धान्तज्ञानेपि, तमुपमर्द्य आच्छाद्य वेति बहुविधाः । अज्ञरूढिः पूर्वपक्षहेतुः, विद्वद्रूढिः सिद्धान्तहेतुरित्यङ्गीकारे किं बाधकं पश्यति ग्रन्थकृदयमिति न जानन्ति सुधियः । पूर्वपक्षयुक्त्याभासादिकं खण्डयित्वा खलु सिद्धान्तयन्ति ग्रन्थ-कृतः । एषा हि शैली सिद्धान्तयतामाचार्याणाम् । नास्य दोषोऽत्र, यतोयमप्पय्य-दीक्षितकृतिस्थमेव विलिखन् 'गतानुगतिको लोको न लोकः पारमार्थिक' इति न्यायमनुसरन्नष्टः । अप्पय्यदीक्षितस्तु —

'एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ' (गी० १६) ॥

इति भगवदुक्तेर्विषयो भवति ।

अस्मदाचार्याभिप्रेतविद्वद्रूढिस्वरूपमजानन्नेवाऽयमेवमाह । इदमाचार्याणां

वचनम् - 'विद्वद्रूढिर्वैदिका स्यात्, सा योगादेव लभ्यते' इति । योगलभ्यावयवार्थसमानाधिकरणतत्तच्छब्दवत्त्वं विद्वद्रूढिः । प्रकृते तादृशब्रह्मशब्दवत्त्वम् ।

सिद्धान्तदूषणमतीव तुच्छम्, ब्रह्मशब्दस्य जीवे रूढत्वं 'यतो वा' इति वाक्यसिद्धजगत्कर्तृत्वादिविशिष्टविष्णोर्जीवाऽभेदापादने कथं हेतुतामियादित्यसमीक्ष्यकारिकृतत्वात् । विशिष्टगुणवतो ब्रह्मण उपास्यत्वं, अतथाभूतस्य जीवस्योपासकस्य जिज्ञासोश्च (विरुद्ध) विभिन्नधर्मवत्तयाऽभेदापादनायोगात् । आपाद्याप्रसिद्धेः । 'अग्निर्माणवक' इत्यादौ तु न स्वरूपाभेदः । बाधोद्धारः कृत इत्यभिमानमात्रं, न तु कृतः । अस्मदाचार्यभाष्याद्यभिप्रायमजानतैवाऽनेन यत्किंचिदेवं प्रलपनं कृतमिति तत्रैवाऽस्माभिर्न्यरूपि । अविमृश्यैव क्रियासमभिव्याहारेण प्रलपन्नार्हति प्रतिवचनम् ।

(कौ) यदभिहितं 'तत्त्वमसी' ति वाक्यतुल्यार्थमेवैतदिति । (कु) तदप्यविचारितरमणीयं, स्वजनमोहकमेव । द्वैतिनः प्रति नैवं वक्तुं शक्यम्, तेषां मते तद्वाक्यस्यापि जीवेशभेदबोधकत्वमेवेति सिद्धान्तात् । तन्मर्यादयैव तन्मतं दूष्यत इति प्रतिज्ञाभङ्गात् ।

इति जन्माधिकरणविचारः

---

## शास्त्रयोनित्वाधिकरणविचारः

---

(कौ) (अनु०) 'जगज्जन्मादिकारणत्वं विष्णुलक्षणं शिवादावतिव्याप्तं, जगदनेककर्तृकं विचित्रकार्यत्वात् प्रासादादिवदित्यनुमानेन तत्रापि तत्संभवात्, तथा प्रमाणदर्शनादिति प्राप्ते, जगत्कर्तृत्वस्य धर्मादिवच्छास्त्रैकगम्यत्वादनुमानस्याऽप्रयोजकत्वाद्धरिरेव जगत्कारणमिति सिद्धान्त इति माध्वाधिकरणम् ।

(कौ० दू०) शिवविरिञ्चपराणामपि श्रुतीनां प्रसिद्धत्वात्, अनुमानमपि नाऽप्रयोजकं, नापि बाधितम्, एतच्चोत्तराधिकरणभङ्गे स्पष्टीभविष्यतीति । (कु) अत्रोच्यते— वयमप्येतदसाङ्गत्यं तत्रैव निरूपयिष्यामः । अथाप्यवश्यमवधेयं सर्वैरिति किञ्चिदत्र वदामः — दीक्षितोऽयमप्पय्यदीक्षितभाषणमेवाऽनुभाषमाणोऽपि परमतदूषणाय प्रवृत्त इत्येतन्मात्रं महद्विद्मस्माकं भाग्यमिति मन्यन्ते केचिदद्वैतिनः ।

अन्ये तु अक्षरमर्मविदो यद्यप्ययं शङ्करमतानुयायीति 'शाङ्करादपि भाष्याब्धे-स्तत्वकौस्तुभमुद्धर' इति तदीयश्लोकेनाऽवगम्यते, अथापि—दीक्षितीयपरमतदूषण-मिदं श्रीशङ्कराचार्याभिप्रायविरोधीति खिद्यन्ते। स्पष्टमिदममात्सर्येण ग्रन्थं परिशीलयताम्। श्रीशङ्कराचार्यास्तु पूर्वोदाहृततदीयग्रन्थतो विष्णोः परदेवतात्वं जगत्कारणत्वादिकं, चाभिप्रयन्ति। अयं तु—विष्णोर्जगत्कर्तृत्वादिकं दूषयतीत्यतिरोहितम्॥

इति शास्त्रयोनित्वाधिकरणविचारः

## समन्वयाधिकरणविचारः

कौस्तुभे—अस्तु शास्त्रैकगम्यता तथापि शास्त्रत एव शिवविरिञ्चयोरपि जगत्कर्तृत्वप्रतीतेरतिव्याप्तिरेवेति पूर्वपक्षः। सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्ग-रूपादन्वयात तद्धेतुकात् सम्यक् वचनवृत्त्या सर्वशास्त्रस्य तत्परत्वरूपादन्वयाच्च विष्ण्वाख्यं ब्रह्मैव कारणतया शास्त्रगम्यमिति सिद्धान्त इति माध्वाधिकरणम्। (कौ० दू०) 'अत्र सिद्धान्तो दुरुपपादः' इत्यादिना, तस्माद्द्वैतमतावलम्बनं विहाय श्रुतीनामेकवाक्यता दुरुपपादेति स्थितमित्यन्तेन दूषणं कृतम्। तथाहि—श्वेताश्वतराणां मन्त्रोपनिषदि हर एव जगत्कर्ता प्रतीयते। "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणि" इति मन्त्रमुदाहृत्य शिवेशरुद्रेशानमहेश्वरादिशब्दस्वरसात्, श्वेताश्वतर-सन्दर्भः शिवपर एव। कौर्माद्युपबर्हणं चास्त्यत्र। माण्डूक्ये च—'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते' इति। आनुशासनिके 'स एव भगवानीश' इत्युपक्रम्य—

सोऽसृजत् दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम्।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः।
युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथाऽसृजत्॥ इति।

पराशरपुराणे 'तस्यासाधारिणी मूर्तिः साम्बा चन्द्रार्धशेखरा' इत्यारभ्य ब्रह्मविष्णु-महेशानास्तं ध्यायन्ति निरन्तरमिति,

पाद्मे—शिवराघवसंवादे—

य एकश्शाश्वतो देवो ब्रह्मवन्द्यो महाशिवः ।
दक्षिणेनासृजत्पुत्रं ब्रह्माणं वामतो हरिम् ।
पृष्ठदेशे महेशानं त्रीन् पुत्रानसृजत्प्रभुः ॥ इति ।

तथा-'प्रजापतिर्वा इदमेक आसीत् नाऽहरासी' दित्यादिना विरिञ्चस्यापि जगत्कर्तृत्वं प्रतीयते, तत्कथं विष्णोरेव तथात्वमिति त्वदभिमतं सिद्ध्येदित्युक्तम् ।

(कुलिशं) अत्र वदामः—यदत्र सोपबृंहणं 'यदा तम' इति 'मन्त्रेण सर्वेषां कारणवाक्यानां, हरशिवादिपदस्वरसात् श्वेताश्वतरसन्दर्भस्य च, शिवपरत्वाभिधानम्, सोऽसृज' दित्यादिवचनोपन्यासेन शिवविरिञ्चयोर्जगत्कारणत्वभाषणं च, सांबमूर्त्य-परावतारस्य स्वाचार्यशंकराचार्यस्य 'आदिकर्ता नारायणाख्यो विष्णुः.... परमार्थतत्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयत् गीताशास्त्र'मिति गीतावतरण-ग्रन्थे वदतः, स्मृत्यधिकरणे 'सोऽसृज'दित्यादिवचनान्यपहाय नारायणकर्तृत्व-बोधकनारायणपदघटितवचनमुदाहरतः, पदस्वारस्यं गृहीत्वा वेदादिशास्त्रविमर्शनेन तत्वविनिर्णयाकौशलं द्योतयति । परमार्थतत्वं जिज्ञासूनां समस्तशास्त्रप्रतिपाद्यदेवतायां गुरौ च भक्तिरावश्यकीति प्रतिपादकश्वेताश्वतरसन्दर्भान्तिममन्त्रस्य देवपदस्य सहस्र-नामभाष्ये हराविति शङ्कराचार्येण, तन्मतीयेन केनचिद्विदुषा वा व्याख्यानात्, औपनिषदहरादिपदानां व्याख्यातृभिः शङ्करादिभिर्भाष्यकारप्रभृतिभिर्योगस्यैव दर्शित त्वेन रूढ्यर्थसांबमूर्तिपरतयाऽव्याख्यातत्वेन च, 'असच्छिव एव केवल' इतिमन्त्रो-त्तरार्धस्य कारणवाक्यप्रतीकधारणपरतया केनापि भवन्मतीयविदुषाऽव्याकृतत्वेन च, एतन्मंत्रस्थशिवपदस्य शुद्धस्वभावः, मङ्गलम्, अविद्यादिमलाऽस्पृष्टसुखसंविद्रूप इति शङ्करशङ्करानन्दविज्ञानभगवदादिभिर्व्याख्यातत्वेन ईशेशानरुद्रमहादेवपदानामपि योगेन धर्मपरत्वस्य दर्शितत्वेन च श्वेताश्वतरस्य शैवत्वे गमकाभावेन गीतादिवत् वैष्णवत्वस्यैव सिद्धत्वात् ।

तत्र हि—हरतीति हरः, अविद्यादेर्हरणात् परमेश्वरः (शं० भ०) अविद्याभाव इति(शङ्करानन्द)अविद्याहरणकेति(विज्ञा०)रुद्द्रावयति, रोदयतीति अविद्यानाशकम् (शङ्कर० वि०) महांश्चासावीश्वरश्च, महतामीश्वरश्चेति (भाष्यादौ) ईशेशानपदयोः

'ईश्वरो नियन्ते' ति व्याख्यातानि । अतो भट्टेऽयुक्तं सर्वमसमञ्जसमेवेति ॥

किञ्च — अस्यापि सन्दर्भस्य नारायणपरतैव न सांबमूर्तिपरतेति श्वेताश्वतरोपसंहारेण विज्ञायते । तथा हि—

'किङ्कारणं ब्रह्म कुतःस्म जाता जीवाम केन क्व च संप्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्' ॥

इत्युपनिषदारम्भे कृतकारणप्रश्नस्योपनिषदुपसंहारे—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' ॥ इति ।

समाहितम् ।

अस्य चायमाशयः—यो देवो हिरण्यगर्भं चतुर्मुखमुत्पाद्य तस्मै वेदानुपादिशत् स देवो मया शरणीक्रियते मोक्षाय । मोक्षदश्च भगवान् वासुदेव एवेति गीतायां 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ (गी० १८) सर्वधर्मा' नित्यादिना भगवतेति निर्धारितः । 'विष्णुर्हि दाता मोक्षस्य, मोक्षमिच्छेज्जनार्दना' दित्यादिवचनान्यत्रार्थेऽनुकूलानि । भगवत्प्राप्तिरेव मोक्षो नान्यदिति सर्वशास्त्राभिप्रायः । हिरण्यगर्भजन्म च नारायणादेवेति भारतादिसिद्धम् । तत्र (वन० २७३) 'ततश्चतुर्मुखो ब्रह्मा नाभिपद्माद्विनिस्सृतः' (४५) (शा० ३५८) 'पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः' इति, अत्र पूर्वश्लोकाद्धिरण्यगर्भ इत्यनुवर्तते । 'इदं तु सप्तमं जन्म पद्मजन्मेति वै प्रभो' (४३) यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप' (३५८-४८) 'नतोऽस्म्यहं त्वाऽखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् । यन्नाभिदेशादरविन्दकोशाद्ब्रह्माऽऽविरासीद्यत एष लोकः' ॥ (भाग० १०-४०-१) इत्यादिभिर्नारायणात् हिरण्यगर्भोत्पत्त्युक्तेः । भारतार्थसंग्रहभूते गीतायां च 'ब्रह्मणोप्यादिकर्त्रे' (गी० ११-३७) इत्यस्य — 'यतो ब्रह्मणो हिरण्यगर्भस्यापि आदिकर्ता कारणं, अतस्तस्मात् आदिकर्त्रे' इति तच्छ्लोकव्याख्या शांकरी च चतुर्मुखस्य नारायणादुद्भवे ज्ञापिका, नात्र वक्तव्यं विशेषेण । भारतादिवचनेनोपबृंहणेन 'यो ब्रह्माणं विदधाती' त्यस्यास्मदुक्त एवार्थो न्याय्यः । अतो गीतावत् श्वेताश्वरसन्दर्भो नारायणपर एवेति युक्तम् ।

एतेन — 'हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु' इति मन्त्रे हिरण्यगर्भजनकत्वेनोक्तोऽपि नारायण एवेत्यवसेयम् । तन्मन्त्रपूर्वार्धे 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षि' रित्यत्र श्रूयमाणरुद्रपदं यौगिकम-ज्ञाननाशकमित्यर्थकं, य इत्यस्य विशेषणम् । 'बुद्ध्या संयुनक्तु' इत्यस्य ज्ञानमुत्पादयतु ममेत्यर्थः । 'अज्ञानां ज्ञानदो विष्णुः, तेषामेवानुकंपार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता (गी० १०-११) इत्यादेः, 'इदं च सप्तमं जन्म पद्मजन्मेति वै प्रभो । सर्गे सर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जितम् ॥ (शां० ३५७-४२) अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः' (शां० ३६१-२०) इति ब्रह्मवचनाच्च हिरण्यगर्भस्य नारायणादुत्पत्तिः चतुर्मुखाद्रुद्रस्यो-त्पत्तिरिति सिद्धेः । आद्यं नारायणं प्रति ब्रह्मोक्तिः । द्वितीयं शिवं प्रति तदुक्तिः । अतोऽत्र रुद्रपदं शिवपरमिति व्याख्यानं न युक्तम् ॥ किञ्च —

अथ तस्यासनस्तत्र चतुर्वक्त्रस्य धीमतः ।
ललाटप्रभवः पुत्रश्शिव आगाद्यदृच्छया ॥ (शां० ३६०-११)

आकाशेन महायोगी पुरा त्रिनयनः प्रभुः ।
ततः खान्निपपाताशु धरणीधरमूर्धनि ॥ (१२)

अग्रतश्चाऽभवत्प्रीतो ववन्दे चापि पादयोः ।
तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना ॥

उत्थापयामास तदा प्रभुरेकः प्रजापतिः ॥ (१३)

उवाच चैनं भगवान् चिरस्यागतमात्मजम् ॥ (शिवंप्रति चतुर्मुखवचनम्)

ब्रह्मा तस्योदरभवस्तस्याहं च शिरोभवः ॥ (अनु० २५१-५४)

अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ (५२)

तत्रच त्रितयं दृष्टं भविष्यति न संशयः ।
समस्ता हि वयं देवास्तस्य देहे वसामहे ॥ (शां० २५१-५३) इति ।

इदमपि शिववचनं मुनिगणं प्रति ॥

(कौ.) यदपि—अस्य ए...न्तेत्यादि स्वमतोपन्यसनं, (कु) तदपि न प्रसक्ता-

नुबन्धि, यतो भवन्मतदूषणायाऽस्मदाचार्या नाऽप्रवर्तन्त। किञ्च अस्मत्पदेन-किं अस्मा (भवान्) विवक्ष्यते, उत शंकराचार्यः, न प्रथमः—यतो न कस्यचित्सिद्धान्तस्य कर्ता भवान्, न द्वितीयोपि—स आचार्यः नारायणस्य जगत्कर्तृत्व-सिद्धान्तवादी, भवांस्तु संप्रति ब्रह्मशिवान्यतरकर्तृत्ववादी, अस्यां दशायां तद्विवक्षाऽयोगात्। न च शिवाचार्यो विवक्ष्यत इति वाच्यम्—तस्य भेदवादित्वात्, भवताऽद्वैतवादिना तद्विवक्षाया अकार्यत्वात्। अतोऽप्रसक्तमेवैतत्।

(कौ०) यच्चाप्युक्तम्—'सर्वेषां लीलाविग्रहत्वेऽपि' पूज्यत्वाऽविशेषेऽपि 'नहिनिन्दा'न्यायेन कस्यचिन्निकर्षोक्तिः। उक्तं हि भागवते—

आत्ममायां समाविश्य सोऽहं गुणमयीं द्विजाः।
सृजन् रक्षन् हरन्विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ ५१ ॥
तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि।
देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ॥ ५२ ॥ इत्यादि।

'अस्मदित्यादि—स्थित' मित्यन्तग्रन्थस्याऽयमभिप्रायः—एकैकस्मिन् श्रुति-पुराणवाक्ये एकस्या विष्ण्वाद्यन्यतमाया देवतायाः कारणत्वादिप्रतिपादनदर्शनात् त्रिसृषु मूर्तिषु एकस्य उत्कर्षोऽपरस्या निकर्ष उक्त इति भाति, नैतच्छास्त्रसंमतम्। तथात्वे भेद एव विशिष्टशास्त्रविषय इति सिद्ध्येत्, स तु नेष्यते, मूर्तीनां भेदाभावस्यैव शास्त्रसंमतत्वेनाऽभिमतत्वात्तव। एवंच एकस्या उत्कर्षाभिधाना-दन्यस्या निकर्षोक्तिः सिध्यति सा 'नहिनिन्दा'न्यायेनेति बोध्यम्। तत्र प्रमाणं भागवतम्। ततश्च—मूर्तीनां भेदाभावोऽङ्गीकार्यः, तथासति कारणोपासनपराणां वाक्यानां विरोधः शाम्यति, अतोऽद्वैतमेव वरं तदेव सर्वैराश्रयणीयमिति।

(कु०) उच्यते—एतदाशामात्रमस्य, भगवान्नारायण एक एव सर्वजगत्कर्तो-पासितव्यश्च, रुद्रादीनां श्रुत्याद्युक्तकर्तृत्वादिकं तु अन्तर्यामिनारायणाधीनम्, तत्तद्वारा कारयितृत्वान्नारायणस्य, तदधीनत्वमितरेषां व्यापारस्य। उक्तं हि—'तत्रतत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमञ्जसे' ति। कारयि-तर्यपि कर्तृत्वव्यपदेशः, पाचयितरि पक्तेतिवत्। एवं च ब्रह्मरुद्रौ प्रयोजककर्तारावेव अन्तर्यामिब्राह्मणमपि अत्रानुकूलम्। तद्धि नारायणः सर्वान्तर्यामी सन् सर्वान् तत्तत्का-

येषु नियमयतीत्यर्थबोधनद्वारा सर्वकर्तेति शास्त्रेषु प्रतिपाद्यत इति बोधयद्रुद्रादीनां नारायणाद्भेदमेव स्पष्टयति । शाखाभेदेन वाजसनेये श्रूयमाणशब्दौ आत्मविज्ञाननियन्तृनारायणातिरिक्तचेतनपरौ, तत्र ब्रह्मरुद्रावपि घटकौ भवतः, नियम्यत्वाविशेषात्, संकोचे कारणाभावाच्च । अथापि अधिकारवशादितरजीवापेक्षयोत्तमौ ।

उदाहृतभागवतमपि द्वैतिनामभिमतमेवार्थं बोधयति, न भट्टोज्यभिमतम् । अयं च तदर्थः—इदं च दक्षं प्रति यागशालायामाविर्भूतभगवद्वचनम् । सोहं=श्रुत्यादौ सर्वकर्तृत्वेन प्रसिद्धोऽहम (विष्णुः) गुणत्रयीं सत्त्वरजस्तमोरूपगुणस्वरूपां आत्ममायां मदधीनजडप्रकृतिं समाविश्य, तां परिणमय्य (आश्रित्य) 'प्रकृतिं स्वामवष्टभ्ये'ति-गीतोक्तेः, विश्वं=प्रपञ्चं सृजन् ब्रह्माणं सृष्ट्वा तद्द्वारा सृजन् (सर्जयन्) रक्षन्=स्वरूपेणैव रक्षणं कुर्वन्, हरन्=रुद्रं सृष्ट्वा तद्द्वारा प्रलयकाले संहारयन्, क्रियोचितां=व्यापारानुगुणां, संज्ञां=ब्रह्मा विष्णुः रुद्र इतिनाम, दध्रे = धारयामि । नारायण एक एव सृष्टिस्थितिलयादिकर्ता, तत्र साक्षाद्रक्षणकर्तृत्वं, सृष्टिलययोर्ब्रह्मरुद्राभ्यां सृष्टिलयकारयितृत्वात् तत्त्वम् । राजप्रेरितभृत्यकृतकार्यस्य राजकर्तृत्वं यथा, तथेति भावः । उक्तमेव विशदयति - तस्मिन्निति ॥ सृष्ट्यादिषु मुख्यकर्तरि गुणपूर्णे समाधिकरहिते प्रकृतिसंबन्धरहिते सर्वेश्वरे स्वतंत्रे विराजमाने, देहात्मबुद्धिः, अविवेकी अज्ञः, भूतानि भेदेन=वैशिष्ट्यं तृतीयार्थः, भेदविशिष्टानि, मदनधीनानि स्वतन्त्राणीति यावत् । अनुपश्यति=जानाति । अयं भावः - राजप्रेरणयाऽमात्यादीनां क्वचित्कर्मणि प्रवृत्तावपि तत्त्वानभिज्ञः अमात्यादीनां तत्कर्मणि स्वतन्त्रकर्तृत्वं यथा मन्यते, तथा शास्त्रतत्त्वमविद्वान् नारायणप्रेरणया ब्रह्मरुद्रादयः कर्म कुर्वन्तीति न जानाति, किन्तु स्वतन्त्रा एवेति । एवंच नारायणादन्येषां स्वातन्त्र्यज्ञानी अज्ञः, यः परेषां हर्यधीनतां इति मन्यते स ज्ञानीति । एतेन — अज्ञो भूतानि भेदेन पश्यति = नारायणप्रतियोगिक भेदप्रकारकभूतविशेष्यकज्ञानवान् भवति । ईशभूतयोर्भेदं पश्यति अज्ञः, ज्ञानी तु अभेदं पश्यतीत्यर्थ इति न भ्रमितव्यम् ॥

ननु — 'त्रयाणामेकभावना' मिति श्लोकेन मूर्तित्रयस्यैकस्वरूपत्वोक्त्या विरोध इति चेत्, उच्यते—

त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥

इत्युत्तरश्लोकस्त्रयाणमेकस्वरूपत्वकथनाय न प्रवृत्तः, अपितु— ब्रह्मरुद्रान्तर्यामिस्व रूपयोः पालकविष्णुस्वरूपस्य च स्वरूपैक्यबोधनाय। ततश्च निरुक्तमूर्तित्रयस्य भेदाज्ञानिनः शान्तिः फलमिति श्लोकाभिप्रायः। न तु ब्रह्मविष्णुरुद्राणां भेदाभावे। त्रयाणां = ब्रह्मरुद्रान्तर्यामिरूपे द्वे, पालकविष्णुरूपमेकमिति रूपत्रयाणाम्। तेषाम् एकस्वभावत्वात्। तेन तस्य मूर्तित्रयस्य न किञ्चिदपि वैषम्यम्। सर्वभूतात्मनाम् = सर्वस्वामिनाम्। अथवा—त्रयाणामिति प्रतीतार्थकं, एकभावानाम् = स्वस्वयोग्याधिकारलाभात् वैमत्यरहितानामित्यर्थः। भिदां=मिथो विरोधं। त्रयाणामेकमनस्कत्वाद्भेदबुद्धिर्न स्वरूपतः, स्वरूपाभेदे शास्त्राणां तात्पर्याभावात्। ननु—चतुर्मुखेन सान्त्वितेन प्रसन्नमनसा शिवेन यजमानप्रभृतीनामङ्गवैकल्ये परिहृते निर्मलचित्तदक्षकृतशिवस्तुतौ—

'विद्यातपोव्रतधरान् मुखतः स्म विप्रान् ब्रह्मात्मतां प्रथयितुं प्रथमं त्वमस्राः।
तद्ब्राह्मणान्परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः'॥ (४ ७-१४)

इति शिवस्य ब्राह्मणस्रष्टृत्वोक्तेः त्रयाणां स्वरूपाभेद एव न्याय्य इति चेत्, सत्यम्—तत्र त्वमित्यनेन अन्तर्यामिणो हरेर्ग्रहणम्। अत्र पालनस्यैव प्रार्थनाश्रवणात् तस्य च हरिकर्तृकत्वप्रसिद्धेः, विप्रसृष्टावपि तस्यैव कर्तृत्वं, हरेः सर्वकर्तृत्वश्रवणात्। ब्रह्मात्मतामित्यस्य वेदरक्षकतामित्यर्थः,। श्रीधरीयेतु 'ब्रह्मात्मतत्त्वमवितु'मिति पाठं स्वीकृत्य ब्रह्म वेदं, आत्मतत्त्वं चावितुं संप्रदायप्रवर्तनेन ज्ञापयितुमित्यर्थो वर्णितः। न चात्राऽन्तर्यामिपरतया नयनं साहसमात्रमिति वाच्यम्—'भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः। न ब्रह्मबन्धुषु च वां भगवन्नवज्ञां तुभ्यं हरेश्च कुत एव धृतव्रतेषु'॥ (१३) इति पूर्वश्लोके 'तुभ्यं हरेश्च वा' मिति हरिहरावुद्दिश्य तयोर्ब्राह्मणेष्ववज्ञाभावबोधनादत्र संबोध्यत्वं युक्तम्। अविशेषेण हरेः सर्वान्तर्यामितया शिवेऽपि तत्सन्निधानात्। अनेन शिवः स्वकर्तव्यं सर्वं स्वान्तर्यामिहरिनियमनेनैव करोतीति बोधयता सर्वेऽपि स्वस्वकार्यं हरिनियता एव कुर्वन्तीति शास्त्रपरमार्थो ज्ञापितः। एतेन — शिवकृतदक्षाध्वरनाशनमपि भक्ताग्रेसरशिवापराधमसहमानान्तर्यामिनारायणप्रेरणेनैव जातम्। अतः — चतुर्मुखकृतशिवस्तुतिरपि अन्तर्यामिविषयिण्येव। तथाहि — ब्रह्मोवाच — 'जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः। शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम्'॥ (भाग० ४-६-४२)

त्वमेव भगवन्नेतच्छिवशक्त्योः सरूपयोः ।

विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ॥ (भाग० ४-६-४३)इति ।

अस्याऽयमर्थः श्रीधरीत्या—त्वां=विश्वस्येशं जाने, जगतः योनिबीजभूतयोः=प्रकृति-शिवयोः कारणम् , अथापि निरन्तरं = निर्भेदं यद्ब्रह्म तदेव त्वमिति जाने ॥ ४२ ॥ त्वमेव सरूपयोः=अविविक्तयोः शिवशक्त्योः क्रीडन् विश्वसृष्ट्यादि करोषि, ऊर्णनाभिरिवेत्यादीति । अत्राध्याहारादिकं बह्वस्ति । अत्र प्रकरणे सांबःशिवः स्तुत्यत्वेन प्रसक्तः, स योनिबीजपदेन गृहीतः, ततोऽन्य उत्तमः स्वगतभेदादिरहितः ब्रह्माभिन्नत्वेनाभिमतः कश्चन ईशपदवाच्यः पुरुषः, शिवशक्त्योरस्थितः, (अन्तर्यामीति यावत्) ताभ्यां वा क्रीडन्, विश्वसृष्ट्यादि करोतीति वाक्यार्थः संपद्यते । तस्य सांबशिवकारणत्वाभिधानात्, स्वस्य स्वकारणत्वायोगात्, अन्यस्य चाप्रसक्तेः, उत्तरत्र ‘ तुभ्यं हरेश्चे ’ति वक्ष्यमाणत्वात् , हरेश्च सर्वान्तर्यामित्वोक्तेः तस्य शिवेपि सन्निधानात्, हरिरेव ईशपद्वाच्य इत्यभ्युपगन्तव्यमिति विमर्शकाः । अन्तर्यामिस्तवनेनाऽधिष्ठानभूतः शिवोपि सन्तोष्यतीति नारायणमन्तर्यामिणमस्तावीच्चतुर्मुखः ।

‘ जाने त्वामीशे ’ ति पाठः (वि०.ध्व) ईशेत्यन्तर्यामिणः संबोधनं, ततो दक्षस्तदाज्ञया वैष्णवादिना यागेन नारायणादीनर्चयित्वा सुखमास्तेति कथाशेषः । एतेन सप्तमाध्यायो विष्णूत्कर्षप्रतिपादनाय प्रवृत्तः, न त्वन्यनिन्दायां, तस्मात् ‘ न हि निन्दा ’ न्यायेनैकस्य निकर्षोक्तौ कथमिदं भागवतं प्रमाणं स्यादिति विभावय । आर्थिकनिषेधो न न्यायसंचारहेतुः ।

अहं ब्रह्मा च शर्वश्च जगतः कारण परम् ।

आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः॥(भाग० ४-७-५०)इति श्लोकस्यैवमर्थः-अहं जगतः परं कारणं, (मुख्यं कारणम्) आत्मेश्वरः, सर्वप्राणिनामीश्वरः, उपद्रष्टा=साक्षी, स्वयंदृक्=स्वयंप्रकाशः, अविशेषणः=व्यावर्तकोत्तरावधिशून्यः । उत्तम इति यावत् । ब्रह्मा च, शिवश्च तदन्तर्यामी चाहमिति । अहं मुख्यकर्ता, तावुभौ प्रयोज्यकर्ताराविति भावः । उत्तरश्लोकानामप्यत्रैव तात्पर्यम् , न स्वरूपभेदे । नारायणस्य सर्वत्वव्यपदेशे सर्वव्याप्तिर्हेतुरित्युक्तं ‘ सर्वं समाप्नोषि ततोऽसि सर्वः ’ (गी० ११) इति, भगवता ।

इत्युत्तरश्लोकस्त्रयाणमेकस्वरूपत्वकथनाय न प्रवृत्तः, अपितु—ब्रह्मरुद्रान्तर्यामिस्वरूपयोः पालकविष्णुस्वरूपस्य च स्वरूपैक्यबोधनाय । ततश्च निरुक्तमूर्तित्रयस्य भेदाज्ञानिनः शान्तिः फलमिति श्लोकाभिप्रायः । न तु ब्रह्मविष्णुरुद्राणां भेदाभावे । त्रयाणां = ब्रह्मरुद्रान्तर्यामिरूपे द्वे, पालकविष्णुरूपमेकमिति रूपत्रयाणाम् । तेषाम् एकस्वभावत्वात् । तेन तस्य मूर्तित्रयस्य न किञ्चिदपि वैषम्यम् । सर्वभूतात्मनाम् = सर्वस्वामिनाम् । अथवा—त्रयाणामिति प्रतीतार्थकं, एकभावानाम् = स्वस्वयोग्याधिकारलाभात् वैमत्यरहितानामित्यर्थः । भिदां=मिथो विरोधं । त्रयाणामेकमनस्कत्वाद्भेदबुद्धिर्न स्वरूपतः, स्वरूपाभेदे शास्त्राणां तात्पर्याभावात । ननु—चतुर्मुखेन सान्त्वितेन प्रसन्नमनसा शिवेन यजमानप्रभृतीनामङ्गवैकल्ये परिहृते निर्मलचित्तदक्षकृतशिवस्तुतौ—

'विद्यातपोव्रतधरान् मुखतः स्म विप्रान् ब्रह्मात्मतां प्रथयितुं प्रथमं त्वमस्राः ।
तद्ब्राह्मणान्परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः'॥ (४ ७-१४)

इति शिवस्य ब्राह्मणस्रष्टृत्वोक्तेः त्रयाणां स्वरूपाभेद एव न्याय्य इति चेत्, सत्यम्—तत्र त्वमित्यनेन अन्तर्यामिणो हरेर्ग्रहणम् । अत्र पालनस्यैव प्रार्थनाश्रवणात् तस्य च हरिकर्तृकत्वप्रसिद्धेः, विप्रसृष्टावपि तस्यैव कर्तृत्वं, हरेः सर्वकर्तृत्वश्रवणात् । ब्रह्मात्मतामित्यस्य वेदरक्षकतामित्यर्थः, । श्रीधरीयेतु 'ब्रह्मात्मतत्वमवितु'मिति पाठं स्वीकृत्य ब्रह्म वेदं, आत्मतत्वं चावितुं संप्रदायप्रवर्तनेन ज्ञापयितुमित्यर्थो वर्णितः । न चात्राऽन्तर्यामिपरतया नयनं साहसमात्रमिति वाच्यम्—'भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः । न ब्रह्मबन्धुषु च वां भगवन्नवज्ञां तुभ्यं हरेश्च कुत एव धृतव्रतेषु' ॥ (१३) इति पूर्वश्लोके 'तुभ्यं हरेश्च वा' मिति हरिहरावुद्दिश्य तयोर्ब्राह्मणेष्ववज्ञाभावबोधनादत्र संबोध्यत्वं युक्तम् । अविशेषेण हरेः सर्वान्तर्यामितया शिवेऽपि तत्सन्निधानात् । अनेन शिवः स्वकर्तव्यं सर्वं स्वान्तर्यामिहरिनियमनेनैव करोतीति बोधयता सर्वेऽपि स्वस्वकार्यं हरिनियता एव कुर्वन्तीति शास्त्रपरमार्थो ज्ञापितः । एतेन — शिवकृतदक्षाध्वरनाशनमपि भक्ताग्रेसरशिवापराधमसहमानान्तर्यामिनारायणप्रेरणेनैव जातम् । अतः — चतुर्मुखकृतशिवस्तुतिरपि अन्तर्यामिविषयिण्येव । तथाहि — ब्रह्मोवाच — 'जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः । शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम्' ॥ (भाग० ४-६-४२)

त्वमेव भगवन्नेतच्छिवशक्त्योः सरूपयोः ।
विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ॥ (भाग० ४-६-४३)इति ।

अस्याऽयमर्थः श्रीधररीत्या—त्वां=विश्वस्येशं जाने, जगतः योनिबीजभूतयोः=प्रकृतिशिवयोः कारणम्, अथापि निरन्तरं = निर्भेदं यद्ब्रह्म तदेव त्वमिति जाने ॥ ४२ ॥ त्वमेव सरूपयोः=अविविक्तयोः शिवशक्त्योः क्रीडन् विश्वसृष्ट्यादि करोषि, ऊर्णनाभिरिवेत्यादीति । अत्राध्याहारादिकं बह्वस्ति । अत्र प्रकरणे सांबःशिवः स्तुत्यत्वेन प्रसक्तः, स योनिबीजपदेन गृहीतः, ततोऽन्य उत्तमः स्वगतभेदादिरहितः ब्रह्माभिन्नत्वेनाभिमतः कश्चन ईशपदवाच्यः पुरुषः, शिवशक्त्योरस्थितः, (अन्तर्यामीति यावत्) ताभ्यां वा क्रीडन्, विश्वसृष्ट्यादि करोतीति वाक्यार्थः संपद्यते । तस्य सांबशिवकारणत्वाभिधानात्, स्वस्य स्वकारणत्वायोगात्, अन्यस्य चाप्रसक्तेः, उत्तरत्र 'तुभ्यं हरेश्चे'ति वक्ष्यमाणत्वात्, हरेश्च सर्वान्तर्यामित्वोक्तेः तस्य शिवेपि सन्निधानात्, हरिरेव ईशपदवाच्य इत्यभ्युपगन्तव्यमिति विमर्शकाः । अन्तर्यामिस्तवनेनाऽधिष्ठानभूतः शिवोपि सन्तोष्यतीति नारायणमन्तर्यामिणमस्तावीच्चतुर्मुखः ।

'जाने त्वामीशे' ति पाठः (वि०.ध्व) ईशेत्यन्तर्यामिणः संबोधनं, ततो दक्षस्तदाज्ञया वैष्णवादिना यागेन नारायणादीनर्चयित्वा सुखमास्तेति कथाशेषः । एतेन सप्तमाध्यायो विष्णूत्कर्षप्रतिपादनाय प्रवृत्तः, न त्वन्यनिन्दायां, तस्मात् 'न हि निन्दा' न्यायेनैकस्य निकर्षोक्तौ कथमिदं भागवतं प्रमाणं स्यादिति विभावय । आर्थिकनिषेधो न न्यायसंचारहेतुः ।

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ।

आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः॥(भाग० ४-७-५०)इति श्लोकस्यैवमर्थः-अहं जगतः परं कारणं, (मुख्यं कारणम्) आत्मेश्वरः, सर्वप्राणिनामीश्वरः, उपद्रष्टा=साक्षी, स्वयंदृक्=स्वयंप्रकाशः, अविशेषणः=व्यावर्तकोत्तरावधिशून्यः । उत्तम इति यावत् । ब्रह्मा च, शिवश्च तदन्तर्यामी चाहमिति । अहं मुख्यकर्ता, तावुभौ प्रयोज्यकर्तारावितिभावः । उत्तरश्लोकानामप्यत्रैव तात्पर्यम्, न स्वरूपाभेदे । नारायणस्य सर्वत्वव्यपदेशे सर्वव्याप्तिर्हेतुरित्युक्तं 'सर्वं समाप्नोषि ततोऽसि सर्वः' (गी० ११) इति, भगवता ।

क्वचिदभेदाभिधानं तु तदधीनत्वेन, तत्प्रीतिविशेषविषयत्वेन वा बोध्यम् । प्रमाणमुक्तमत्रैव तात्पर्ये । अतो हरिणा कस्यापि स्वरूपाभेदो न शास्त्रतात्पर्यविषय इति सिद्धम् ॥ 'जाने त्वामीशे' त्यत्र 'योनिबीजयोरितिपदवाच्यशांबमूर्तेः कारणं नियामकं ब्रह्म नारायण इत्युक्तेः, भगवन्निति पुरोवर्तिना शिवं संबोध्य 'वां तुभ्यं हरेश्चे'ति हरिहरावुद्दिश्य युष्मत्कृतदण्डो मे क्षेमायैवाऽभवदिति दक्षकृतविज्ञप्तिदर्शनात्, यागशालायामाविर्भूतं श्रियःपतिं नमस्कुर्वाणेषु देवेषु 'त्र्यक्षे' ति रुद्रनाम्नो मुख्यतया निर्देशात्, न कस्यचिदपि अज्ञलोकस्य दुर्भाषणं न गणयामि तव परमानुग्रहबलादिति हरिं प्रति शिवकृतविज्ञापनाच्चायमध्यायो विष्णोरेव सर्वोत्तमत्वे प्रमाणम् ॥

किंच—यं ब्रह्मा वरुणेन्द्ररुद्रमरुतस्तुन्वन्ति दिव्यैस्स्तवैः
वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुराऽसुरगणा देवाय तस्मै नमः ॥(भाग० १२-१३)

यस्याङ्घ्रिपङ्कजरजस्स्नपनं महान्तो वांछन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिस्स्यात् ॥
(भाग० १०-५२-४३)

यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् ॥
(भाग० ३-२९.)

इत्यादिना हरेः शिवादुत्कर्षोक्तेः न तयोरभेदो युक्तः । 'जाने त्वामीशे' ति विजयध्वजीयपाठे ईशेति अन्तर्यामिणो नारायणस्य संबोधनं, नियामकेत्यर्थः ।

किं बहुना—अयं सप्तमोऽध्यायो नारायणस्य सर्वदेवोत्तमत्वेन जगत्कर्तृत्वेन, सर्वदेवोपास्यत्वेन, सर्वशास्त्रविषयत्वं; ब्रह्मरुद्रादीनां तदधीनत्वं च प्रतिपादयितुं प्रवृत्तः । अतोऽत्र—आत्तहविषाऽध्वर्युणा प्रेरिते यजमाने दक्षे तां देवतां ध्यायति, तत्राविर्भवन्तं श्रीवक्षसं भगवन्तं नारायणं ब्रह्मरुद्रादयस्सर्वे सुरगणा दृष्ट्वा प्रणमन्तोऽस्ताविषुरिति कवयो वदन्ति । तथाहि तत्राष्टभुजो भगवानाविरभूदित्याह(भा० ४-७-२०)—

श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमण्डितकुण्डलास्यः ।
कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥

वक्षस्यधिश्रितवधूर्वनमाल्युदारहासाऽवलोककलया रमयंश्च विश्वम् ।
पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरि रज्यमानः ॥ २१ ॥

तमुपागतमालक्ष्य सर्वे सुरगणादयः ।
प्रणेमुः सहसोत्थाथ ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥

रुद्रः—तव वरद वरांघ्रावाशिषेहाऽखिलार्थे ह्यपि मुनिभिरसक्तै रादरैरर्हणीये ।
यदि रचितधियं माऽविद्यलोकापविद्धं जपति न गणये तत्त्वत्पराऽनुग्रहेण॥२०॥

ब्रह्मा — नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ।
ज्ञानस्य चाऽर्थस्य गुणस्य चाश्रयो मायामयाद्व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥

दक्षः—भूयाननुग्रहः अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः ।
न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥

विद्यातपोव्रतधरान् मुखतः स्म विप्रान् ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक् ।
तद्ब्राह्मणान्परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥

जाने त्वामीश विश्वस्य जगतो योनिबीजयोः ।
शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ भाग० ४-६-४१ ॥

त्वमेव भगवन्नेतच्छिवशक्त्योः सरूपयोः ।
विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ॥ (४३) इति ॥

अन्यत्र — इति मे संस्तुतिं श्रुत्वा भगवान्प्रणतार्तिहा ।
ममाक्षिगोचरं रूपमकरोत्स दयापरः ॥ ९-२० ॥

सांद्रानन्दमहेन्द्रनीलमणिवद्देहप्रभाभास्वर-
स्वर्णैर्मौलिषु हारकुण्डलयुगैः केयूरकाञ्च्यङ्गदैः ।
मञ्जीरैर्विलसत्तिशङ्खवलयं लक्ष्म्याङ्कितं शाश्वतं
सर्वेशं करुणाकरं सुरवरैर्भक्तैः समासेवितम् ॥ २१ ।

दृष्ट्वा तत्पदपङ्कजं हृदि दधे गोविन्ददामोदर-
श्रीकृष्णेति मुखैर्वदन् त्रिजगतः कर्तुर्मुदाहं तदा ।

क्वचिदभेदाभिधानं तु तदधीनत्वेन, तत्प्रीतिविशेषविषयत्वेन वा बोध्यम् । प्रमाणमुक्तमत्रैव तात्पर्ये । अतो हरिणा कस्यापि स्वरूपाभेदो न शास्त्रतात्पर्यविषय इति सिद्धम ॥ 'जाने त्वामीशे' त्यत्र 'योनिबीजयोरितिपदवाच्यशांबमूर्तेः कारणं नियामकं ब्रह्म नारायण इत्युक्तेः, भगवन्निति पुरोवर्तिना शिवं संबोध्य 'वां तुभ्यं हरेश्चे'ति हरिहरावुद्दिश्य युष्मत्कृतदण्डो मे क्षेमायैवाऽभवदिति दक्षकृतविज्ञप्तिदर्शनात्, यागशालायामाविर्भूतं श्रियःपतिं नमस्कुर्वाणेषु देवेषु 'त्र्यक्षे' ति रुद्रनाम्नो मुख्यतया निर्देशात् , न कस्यचिदपि अज्ञलोकस्य दुर्भाषणं न गणयामि तव परमानुग्रहबलादिति हरिं प्रति शिवकृतविज्ञापनाच्चायमध्यायो विष्णोरेव सर्वोत्तमत्वे प्रमाणम् ॥

किंच—यं ब्रह्मा वरुणेन्द्ररुद्रमरुतस्तुन्वन्ति दिव्यैस्स्तवैः
वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुराऽसुरगणा देवाय तस्मै नमः ॥(भाग० १२-१३)

यस्याङ्घ्रिपङ्कजरजस्स्नपनं महान्तो वांछन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिस्स्यात् ॥
(भाग० १०-५२-४३)

यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् ॥
(भाग० ३-२९.)

इत्यादिना हरेः शिवादुत्कर्षोक्तेः न तयोरभेदो युक्तः । 'जाने त्वामीशे' ति विजयध्वजीयपाठे ईशेति अन्तर्यामिणो नारायणस्य संबोधनं, नियामकेत्यर्थः ।

किं बहुना—अयं सप्तमोऽध्यायो नारायणस्य सर्वदेवोत्तमत्वेन जगत्कर्तृत्वेन, सर्वदेवोपास्यत्वेन, सर्वशास्त्रविषयत्वं; ब्रह्मरुद्रादीनां तदधीनत्वं च प्रतिपादयितुं प्रवृत्तः । यतोऽत्र—आत्तहविषाऽध्वर्युणा प्रेरिते यजमाने दक्षे तां देवतां ध्यायति, तत्राविर्भवन्तं श्रीवक्षसं भगवन्तं नारायणं ब्रह्मरुद्रादयस्सर्वे सुरगणा दृष्ट्वा प्रणमन्तोऽस्ताविषुरिति कवयो वदन्ति । तथाहि तत्राष्टभुजो भगवानाविरभूदित्याह(भा० ४-७-२०)—

श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमण्डितकुण्डलास्यः ।
कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥

वक्षस्यधिश्रितवधूर्वनमाल्युदारहासाऽवलोककलया रमयंश्च विश्वम् ।
पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरि रज्यमानः ॥ २१ ॥

तमुपागतमालक्ष्य सर्वे सुरगणादयः ।
प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥

रुद्रः—तव वरद वरांघ्रावाशिषेहाऽखिलार्थे ह्यपि मुनिभिरसक्तैः रादरैरर्हणीये ।
यदि रचितधियं माऽविद्यलोकापविद्धं जपति न गणये तत्त्वत्पराऽनुग्रहेण॥२०॥

ब्रह्मा — नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ।
ज्ञानस्य चाऽर्थस्य गुणस्य चाश्रयो मायामयाद्व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥

दक्षः—भूयाननुग्रहः अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः ।
न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥

विद्यातपोव्रतधरान् मुखतः स्म विप्रान् ब्रह्माऽऽत्मतत्त्वमवितुं प्रथमं त्वमस्राक् ।
तद्ब्राह्मणान्परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥

जाने त्वामीश विश्वस्य जगतो योनिबीजयोः ।
शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ भाग० ४-६-४१ ॥

त्वमेव भगवन्नेतच्छिवशक्त्योः सरूपयोः ।
विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ॥ (४३) इति ॥

अन्यत्र — इति मे संस्तुतिं श्रुत्वा भगवान्प्रणतार्तिहा ।
ममाक्षिगोचरं रूपमकरोत्स दयापरः ॥ ९-२० ॥

सांद्रानन्दमहेन्द्रनीलमणिवद्देहप्रभाभास्वर-
स्वर्णैर्मौलिषु हारकुण्डलयुगैः केयूरकाञ्च्यङ्गदैः ।
मञ्जीरैर्विलसत्सिशङ्खवलयं लक्ष्म्याङ्कितं शाश्वतं
सर्वेशं करुणाकरं सुरवरैर्भक्तैः समासेवितम् ॥ २१

दृष्ट्वा तत्पदपङ्कजं हृदि दधे गोविन्ददामोदर
श्रीकृष्णेति मुखैर्वदन् त्रिजगतः कर्तुमुदाहं तदा ।

नेत्रे निर्झरवारिपूरमिव मे गात्रे च हर्षं तथा
वाण्यां गद्गदतां विलोक्य भगवान्मामाह भक्तप्रियः ॥ २२ ॥
ज्ञातं मे सुखवर्यं वाञ्छति भवान् मद्भक्तसङ्गावलिं
तेनाहं प्रवदामि ते करुणया भक्ताय साकं वरैः ।
मल्लीलां गदतो भविष्यति भवत्सर्वे जना वैष्णवाः
भार्या चापि तथा ऽनुकूलसुखदा भक्ताग्रणीर्मे भावन् ॥ २३ ॥
एतावदुक्त्वा भगवान् गतो लोकमलौकिकम् ।
अहं च तान्वरान् लब्ध्वा कृतार्थोऽस्मि द्विजर्षभ ॥ २४ ॥

एवमादीनि परः सहस्राणि प्रमाणानि विष्णोर्ब्रह्मरुद्रादिभ्य उत्तमत्वे सन्ति । तस्माद्धरेरेव सर्वोत्तमत्वं सर्वजगत्कारणत्वं च सिद्धम् इति ॥

इति समन्वयाधिकरणविचारः ।

---

## ईक्षत्यधिकरणविचारः

( कौ० अनु० ) 'श्रुतत्वाच्च ' सिंहावलोकनन्यायेन वाच्यत्वे हेतूपन्यासपरमिदं सूत्रं, तस्माच्छ्रुतिप्रतिपाद्यत्वात् सर्वपदावाच्ये लक्षणाया अपि दुरुपपादत्वात् वाच्यमेव ब्रह्मेति माध्वाधिकरणशरीरम् । इदंच माध्वोक्तं नैवाऽधिकरणान्तरेण विरोधात् न्यायविरोधाच्चाशुद्धमेव । तथाहि — अतत्वे तत्ववादिना माध्वेन 'तथान्यप्रतिषेधात्' ( ३ - २ - ३९ ) इति सूत्रे सांप्रदायिकं 'तथान्ये' त्यकारान्तं पाठं विहाय तथाऽन्य' दिति तान्तं पठित्वा रचितेऽधिकरणे ध्येयं ब्रह्मैव नेति निर्णीतम् । तेनोपासनाविधिषु प्रविष्टानां ब्रह्मादिशब्दानां तद्वाच्यं नेति अर्थात्सिद्धम्, उपास्यसमर्पकपदवाच्यत्वे उपास्यत्वापत्तेः । अतएव हि केनोपनिषदि 'यन्मनसा न मनुते' इति मन्त्रस्य सन्निधावाम्नायमानं 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति मंत्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति । तस्मादवाच्यमिति त्वयाऽभ्युपगन्तव्यम् ।

तथाच — सृष्ट्यादिवाक्यस्थब्रह्मात्मनारायणादिपदानामपि तद्वाच्यं न भवेदिति कथं तस्य जगत्कर्तृत्वादिसिद्धिः । न च—उपास्यसमर्पकपदावाच्यत्वे सृष्ट्यादिवाक्यस्थपदवाच्यता संभवत्येवेति वाच्यम्, त्वन्मते सृष्ट्यादिवाक्यानामपि उपासनापरत्वात् । 'आध्यानाय प्रयोजनाभावात्' इत्यधिकरणे त्वया तथैव सिद्धान्तितत्वात् । तथाच त्वन्मतं निष्कृष्यमाणमित्थं पर्यवस्यति । वाङ्मनसातीतमुपासनानन्तरमुच्यमानानां मुक्तानां च साक्षात्कारस्यैव विषयभूतं परं ब्रह्म 'तदेव त्वं विद्धी' त्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यं, तस्य प्रतिबिम्बविशेषस्तु जीववदनादिः कर्ता उपास्यश्च एक एव सृष्ट्यादिश्रुतिभिस्तदनुसारिपुराणादिभिः शक्त्या प्रतिपाद्य इति ।

अतएव 'यतो वाचो निवर्तन्ते । अप्राप्ये 'त्युक्तम् । प्रशब्दस्य मुख्यत्वपरतया 'अप्राप्ये 'त्यस्य शक्तिनिषेधपरत्वात्, प्रसिद्धं चेदं ब्रह्म गीतादौ न्याय्यं च, सर्वेषां पदानां ब्रह्मणि शक्तौ पर्यायत्वापत्त्या सहप्रयोगायोगात् । लाक्षणिकानां तु तत्तत्संशयनिवृत्त्यै सहप्रयोगः प्रसिद्धो लक्षणवाक्येषु, सोऽयमित्यादिवाक्येषु च ।

उक्तंच—लक्ष्यार्थस्य विशेषेऽपि व्यवच्छेद्यविभेदतः ।
ज्ञानानन्दादिशब्दानां पर्यायव्यर्थता न हि ॥ इति ॥

(कु०) अत्रोच्यते — सूत्रादिष्वयं पाठः सांप्रदायिकः, अयं नेति सन्निमर्शे निर्धारयितुं न कोऽपि देवः प्रभवति, कुतोऽयं भट्टोजिरनधीतवेदवेदान्तप्रबन्धोऽनवलोकितश्रुतिपुराणादिः निर्णेतुं शक्नोति । इदमेकं स्वोत्प्रेक्षितं दूषणम् । अन्यत्तु अन्योक्तानुवादः ।

अतत्त्वे तत्त्ववादिनेत्याद्युक्तिस्तावत् स्वभर्म श्रीमध्वाचार्येष्वारोप्य तेषां तथाक्षादित्वमभिहितम । आरोप्यवादस्तु भट्टोजेस्तदीयानां च स्वाभाविको महान् गुणः । इदं तत्त्वमिदमतत्त्वमिति सूत्रकाराद्बादरायणादन्यः को वक्तुं पारयति । स तु परतत्त्वं नारायण इति

'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' ॥

इति भारते निर्धारितवान् । परतत्त्वं हि ध्येयम् । स तु भगवत्पदवाच्यः श्रियःपतिः

नेत्रे निर्झरवारिपूरमिव मे गात्रे च हर्षं तथा
वाण्यां गद्गदतां विलोक्य भगवान्मामाह भक्तप्रियः ॥ २२ ॥
ज्ञातं मे सुरवर्य वाञ्छति भवान् मद्भक्तसङ्गावलिं
तेनाहं प्रवदामि ते करुणया भक्ताय साकं वरैः ।
मल्लीलां गदतो भविष्यति भवत्सर्वे जना वैष्णवाः
भार्या चापि तथाऽनुकूलसुखदा भक्ताग्रणीर्मे भावन् ॥ २३ ॥
एतावदुक्त्वा भगवान् गतो लोकमलौकिकम् ।
अहं च तान्वरान् लब्ध्वा कृतार्थोऽस्मि द्विजर्षभ ॥ २४ ॥

एवमादीनि परः सहस्राणि प्रमाणानि विष्णोर्ब्रह्मरुद्रादिभ्य उत्तमत्वे सन्ति । तस्माद्धरेरेव सर्वोत्तमत्वं सर्वजगत्कारणत्वं च सिद्धम् इति ॥

इति समन्वयाधिकरणविचारः ।

---

## ईक्षत्यधिकरणविचारः

---

( कौ० अनु० ) 'श्रुतत्वाच्च' सिंहावलोकनन्यायेन वाच्यत्वे हेतूपन्यासपरमिदं सूत्रं, तस्माच्छ्रुतिप्रतिपाद्यत्वात् सर्वपदावाच्ये लक्षणाया अपि दुरुपपादत्वात् वाच्यमेव ब्रह्मेति माध्वाधिकरणशरीरम् । इदंच माध्वोक्तं नैवाऽधिकरणान्तरेण विरोधात् न्यायविरोधाच्चाशुद्धमेव । तथाहि — अतत्त्वे तत्त्ववादिना माध्वेन 'तथान्यप्रतिषेधात्' ( ३ - २ - ३९ ) इति सूत्रे सांप्रदायिकं 'तथान्ये' त्यकारान्तं पाठं विहाय तथाऽन्य' दिति तान्तं पठित्वा रचितेऽधिकरणे ध्येयं ब्रह्मैव नेति निर्णीतम् । तेनोपासनाविधिषु प्रविष्टानां ब्रह्मादिशब्दानां तद्वाच्यं नेति अर्थात्सिद्धम्, उपास्यसमर्पकपदवाच्यत्वे उपास्यत्वापत्तेः । अतएव हि केनोपनिषदि 'यन्मनसा न मनुते' इति मन्त्रस्य सन्निधावाम्नायमानं 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति मंत्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति । तस्मादवाच्यमिति त्वयाऽभ्युपगन्तव्यम् ।

तथाच — सृष्ट्यादिवाक्यस्थब्रह्मात्मनारायणादिपदानामपि तद्वाच्यं न भवेदिति कथं तस्य जगत्कर्तृत्वादिसिद्धिः । न च—उपास्यसमर्पकपदावाच्यत्वे सृष्ट्यादिवाक्यस्थपदवाच्यता संभवत्येवेति वाच्यम्, त्वन्मते सृष्ट्यादिवाक्यानामपि उपासनापरत्वात् । 'आध्यानाय प्रयोजनाभावात्' इत्यधिकरणे त्वया तथैव सिद्धान्तितत्वात् । तथाच त्वन्मतं निष्कृष्यमाणमित्थं पर्यवस्यति । वाङ्मनसातीतमुपासनानन्तरमुच्यमानानां मुक्तानां च साक्षात्कारस्यैव विषयभूतं परं ब्रह्म 'तदेव त्वं विद्धी' त्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यं, तस्य प्रतिबिम्बविशेषस्तु जीववदनादिः कर्ता उपास्यश्च एक एव सृष्ट्यादिश्रुतिभिस्तदनुसारिपुराणादिभिः शक्त्या प्रतिपाद्य इति ।

अतएव 'यतो वाचो निवर्तन्ते । अप्राप्ये'त्युक्तम् । प्रशब्दस्य मुख्यत्वपरतया 'अप्राप्ये'त्यस्य शक्तिनिषेधपरत्वात्, प्रसिद्धं चेदं ब्रह्म गीतादौ न्याय्यं च, सर्वेषां पदानां ब्रह्मणि शक्तौ पर्यायत्वापत्त्या सहप्रयोगायोगात् । लाक्षणिकानां तु तत्तत्संशयनिवृत्त्यै सहप्रयोगः प्रसिद्धो लक्षणवाक्येषु, सोऽयमित्यादिवाक्येषु च ।

उक्तंच—लक्ष्यार्थस्य विशेषेऽपि व्यवच्छेद्यविभेदतः ।
ज्ञानानन्दादिशब्दानां पर्यायव्यर्थता न हि ॥ इति ॥

(कु०) अत्रोच्यते — सूत्रादिष्वयं पाठः सांप्रदायिकः, अयं नेति सविमर्शं निर्धारयितुं न कोऽपि देवः प्रभवति, कुतोऽयं भट्टोजिरनधीतवेदवेदान्तप्रबन्धोऽनवलोकितश्रुतिपुराणादिः निर्णेतुं शक्नोति । इदमेकं स्वोत्प्रेक्षितं दूषणम् । अन्यत्तु अन्योक्तानुवादः ।

अतत्वे तत्ववादिनेत्याद्युक्तिस्तावत् स्वधर्मं श्रीमध्वाचार्येष्वारोप्य तेषां तथावादित्वमभिहितम् । आरोप्यवादस्तु भट्टोजेस्तदीयानां च स्वाभाविको महान् गुणः । इदं तत्वमिदमतत्वमिति सूत्रकाराद्बादरायणादन्यः को वक्तुं पारयति । स तु परतत्वं नारायण इति —

'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' ॥

इति भारते निर्धारितवान् । परतत्वं हि ध्येयम् । स तु भगवत्पदवाच्यः श्रियःपतिः

सकलचराऽचरप्रपञ्चनिर्मातेति श्रुतीतिहासपुराणादिविषय इति च शास्त्रेषु सर्वत्र प्रसिद्धम् । श्रीमध्वाचार्यास्तु श्रीव्यासेन निर्धारिततत्वमेव श्रुतितदनुसारिस्मृतिवचोभिरेव स कर्ता, ध्येयश्चेति सर्वेषां सुबोधाय स्वग्रन्थेषु प्रत्यपीपदन् । अतः श्रीमध्वाचार्या एव तत्ववादिनः ।

श्रीबादरायणेन निर्धारितं नारायणस्य जगत्कर्तृत्वादिकं परित्यज्य मायावाच्छन्नः कश्चन चेतनविशेषो जगत्कर्ता, कर्तृत्वंच तटस्थलक्षणं ब्रह्मणः, ब्रह्म च विवर्तोपादानं जगत इति व्याससिद्धान्तविरुद्धसिद्धान्तं वदन्तो भट्टोजिस्तदनुयायिनश्च कथं तत्वभाषिणो भवेयुरिति जानन्तु । शुद्धस्य मायावेच्छेदः शास्त्रेण निरूपयितुमशक्यः, दुर्घटश्च ।

यच्चोक्तं—वाच्यत्वनिरूपणं स्वसिद्धान्वविरुद्धमित्यादि ' ध्येयं ब्रह्मैव ने ' त्यादिना सिद्धान्तितत्वादित्यन्तेन, तदत्यन्तमसमंजसम् । तथाहि—सूत्रकृता ' न प्रतीकेन हि स ' (४ १-४) इत्यनेन प्रतीकस्य नामादेर्ब्रह्मत्वं तावत्प्रतिषिद्धम् । अत एव ' नामब्रह्मे'त्यादौ नामादीनां ब्रह्मप्रतीकत्वमित्याहुर्ब्रह्मवादिनः । ' तदव्यक्तमाह हि ' (३-२-२३) इति सूत्रेणाव्यक्तत्वमाह ब्रह्मणः श्रीव्यासः । अव्यक्तत्वं चेन्द्रियाऽगोचरत्वम्, अत्रैव सूत्रे शाङ्करेऽनिन्द्रियग्राह्यत्वमव्यक्तत्वमित्युक्तम् । मनस्त्विन्द्रियमिति ' मनः षष्ठानीन्द्रियाणि, (गी० १५-७) इन्द्रियाणि दशैकं चे ' (गी० १३-५)ति भगवद्वचनसिद्धम् । प्रतीकस्यैव ब्रह्मत्वे, तस्येन्द्रियगोचरत्वमायातमिति तस्याव्यक्तत्वोक्तिपरसूत्रादीनामसङ्गतिरेव स्यात् । सर्वमिदमभिप्रेत्य श्रीमध्वाचार्या ध्यानकाले ध्यायिनां चित्ते प्रतिभातं वस्तु ब्रह्मप्रतीकमित्याहुः । ब्रह्मप्रतीकोपासनमपि ब्रह्मोपासनमेव, विष्णुप्रतिमोपासनवत्, यथा प्रतिमायां सन्निहितो विष्णुः फलं ददाति, तथा प्रतीके सन्निहितं ब्रह्म फलं ददाति । शालग्रामे विष्णुरिवेति अन्तरदहरादिनयेषु शाङ्करोक्तेः । एवञ्चोपासनावाक्ये ब्रह्मादिपदानां ब्रह्मवाच्यं न बाधकसद्भावादित्येतावता सृष्ट्यादिवाक्यगतब्रह्मादिपदानामपि ब्रह्म न वाच्यमिति प्रलपनं ' पृष्ठताडने दन्तपात' इति न्यायमनुसरति । न हि गङ्गायां घोष इत्यादावनुपपत्त्या गङ्गापदस्य न प्रवाहो वाच्य इत्येतावता गङ्गायां मीनः, स्नातीत्यादावपि प्रवाहो गङ्गापदवाच्यो नेति शक्यते वक्तुम् । स्वजनपृथग्जनसभायामेव शोभेतेदम् ॥

सृष्ट्यादिवाक्यानामप्युपासनावाक्यत्वादिति त्वतितुच्छम् । तेषामुपासना-प्रयोजकगुणबोधकत्वेन उपासनाप्रयोजनकत्वमेव, नोपासनावाक्यत्वात् । उपासीते-त्यादिपदाश्रवणात् उपासनाप्रयोजकगुण (धर्म) बोधकानामपि उपासनाविधित्वाङ्गीकारे, 'तदेतद्ब्रह्म चतुष्पादमष्टाशफं षोडशकलमिति चतुष्पात्त्वादिधर्मोपदेशः किमर्थ इति प्रश्ने 'बुध्यर्थ' इति सूत्रेणोपासनार्थं इति यत् भवन्मतीयभाष्येऽभिहितं, तदसंगतं स्यात् , धर्मबोधकस्यैव विधित्वे किमर्थमिदमिति प्रश्नस्यैवानुदयेन समाधानसूत्रस्य वैयर्थ्यात् । गुणबोधकवाक्यार्थनिर्णायकस्यैव उपासनार्थत्वस्य वक्तुं शक्यत्वात् ॥

(कौ०) यदत्रोक्तं—त्वन्मतं निष्कृष्यमाणमित्यादिना श्रीमध्वाचार्यमत-निष्कर्षशब्दजालम् , (कु०) तदपि श्रीमध्वचार्यग्रन्थार्थाऽपरिज्ञानमूलकम् , स्वमता-चार्यग्रन्थतात्पर्याऽवबोधनेऽसमर्थोऽयं परमतीयग्रन्थार्थनिष्कर्षे कथं कल्पते ।

शास्त्रं तावत् द्वैराशिकम् , उपासनाविधिपरम् , तदुपयोगिगुणबोधनपरं चेति । 'आध्यानाय प्रयोजनाभावात्, बुध्यर्थः पादवत्' इति तृतीये सूत्रयता बादरायणेन बोधितम् । भगवतो गुणोपदेशस्तद्द्वारेण ज्ञानाय, तथोपासनाय चेति तदर्थः । 'तदेवं विद्धी'त्यादीनां तु लक्षणया प्रतिपाद्यमिति नार्थः । अपितु भाष्योक्त-मर्थान्तरमेव । एतेन—पूर्वार्धस्य ब्रह्म साकल्येन न वाच्यमनन्तगुणत्वादित्येवार्थः । 'यतो वाच' इत्यादीनामपि साकल्येन वाङ्मनसाऽगोचरत्वमित्येव तात्पर्यम् । ततश्च—ब्रह्म लक्षणया बोध्यत इत्यर्थ इति मूर्खप्रलपनमेव । उक्तमानन्त्यं भगवद्गुणानां भागवते — (द्वितीये, सप्तमे ४१ श्लो)

नान्तं विदाम्यहममी मुनयः प्रजेशा मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन्गुणान्दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् ॥

एतेन—'अत एव यतो वाच' इत्याद्युक्तमपास्तम् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे' त्यस्य मनसा सहिता वाचः भगवतो गुणगणं ज्ञात्वा वक्तुं भगवन्तमेत्य साकल्येन विज्ञाय वक्तुमशक्ता निवर्तन्त इत्यर्थः । 'नैतद्यक्षमशकं शक्तवानहं विज्ञातुं, विशेषतो यदेतद्यक्षमिति, भवन्मतीयाचार्यव्याख्याने विशेषत इत्युक्त्या साकल्येन न जानीतोऽग्निवायू इत्यर्थप्रतीतेः । न हि राजादिनिष्ठधर्माणामस्मदीयमनोवागगोचरत्व-मात्रेण राजनि न सन्ति ते धर्माः, वाच्याश्च न ते भवन्तीति शक्यते वक्तुम् ॥

सकलचराऽचरप्रपञ्चनिर्मातेति श्रुतीतिहासपुराणादिविषय इति च शास्त्रेषु सर्वत्र प्रसिद्धम् । श्रीमध्वाचार्यास्तु श्रीव्यासेन निर्धारिततत्वमेव श्रुतितदनुसारिस्मृतिवचोभिरेव स कर्ता, ध्येयश्चेति सर्वेषां सुबोधाय स्वग्रन्थेषु प्रत्यपीपदन् । अतः श्रीमध्वाचार्या एव तत्ववादिनः ।

श्रीबादरायणेन निर्धारितं नारायणस्य जगत्कर्तृत्वादिकं परित्यज्य मायावाच्छन्नः कश्चन चेतनविशेषो जगत्कर्ता, कर्तृत्वंच तटस्थलक्षणं ब्रह्मणः, ब्रह्म च विवर्तोपादानं जगत इति व्याससिद्धान्तविरुद्धसिद्धान्तं वदन्तो भट्टोजिस्तदनुयायिनश्च कथं तत्वभाषिणो भवेयुरिति जानन्तु । शुद्धस्य मायावेच्छेदः शास्त्रेण निरूपयितुमशक्यः, दुर्घटश्च ।

यच्चोक्तं—वाच्यत्वनिरूपणं स्वसिद्धान्वविरुद्धमित्यादि 'ध्येयं ब्रह्मैव ने' त्यादिना सिद्धान्तितत्वादित्यन्तेन, तदत्यन्तमसमंजसम् । तथाहि—सूत्रकृता 'न प्रतीकेन हि स' (४ १-४) इत्यनेन प्रतीकस्य नामादेर्ब्रह्मत्वं तावत्प्रतिषिद्धम् । अत एव 'नामब्रह्मे'त्यादौ नामादीनां ब्रह्मप्रतीकत्वमित्याहुर्ब्रह्मवादिनः । 'तदव्यक्तमाह हि' (३-२-२३) इति सूत्रेणाव्यक्तत्वमाह ब्रह्मणः श्रीव्यासः । अव्यक्तत्वं चेन्द्रियाऽगोचरत्वम्, अत्रैव सूत्रे शाङ्करेऽनिन्द्रियग्राह्यत्वमव्यक्तत्वमित्युक्तम् । मनस्त्विन्द्रियमिति 'मनः षष्ठानीन्द्रियाणि, (गी० १५-७) इन्द्रियाणि दशैकं चे' (गी० १३-५)ति भगवद्वचनसिद्धम् । प्रतीकस्यैव ब्रह्मत्वे, तस्येन्द्रियगोचरत्वमायातमिति तस्याव्यक्तत्वोक्तिपरसूत्रादीनामसङ्गतिरेव स्यात् । सर्वमिदमभिप्रेत्य श्रीमध्वाचार्या ध्यानकाले ध्यायिनां चित्ते प्रतिभातं वस्तु ब्रह्मप्रतीकमित्याहुः । ब्रह्मप्रतीकोपासनमपि ब्रह्मोपासनमेव, विष्णुप्रतिमोपासनवत्, यथा प्रतिमायां सन्निहितो विष्णुः फलं ददाति, तथा प्रतीके सन्निहितं ब्रह्म फलं ददाति । शालग्रामे विष्णुरिवेति अन्तरदहरादिनयेषु शाङ्करोक्तेः । एवञ्चोपासनावाक्ये ब्रह्मादिपदानां ब्रह्मवाच्यं न बाधकसद्भावादित्येतावता सृष्ट्यादिवाक्यगतब्रह्मादिपदानामपि ब्रह्म न वाच्यमिति प्रलपनं 'पृष्ठताडने दन्तपात' इति न्यायमनुसरति । न हि गङ्गायां घोष इत्यादावनुपपत्त्या गङ्गापदस्य न प्रवाहो वाच्य इत्येतावता गङ्गायां मीनः, स्नातीत्यादावपि प्रवाहो गङ्गापदवाच्यो नेति शक्यते वक्तुम् । स्वजनपृथग्जनसभायामेव शोभेतेदम् ॥

सृष्ट्यादिवाक्यानामप्युपासनावाक्यत्वादिति त्वतितुच्छम् । तेषामुपासना-प्रयोजकगुणबोधकत्वेन उपासनाप्रयोजनकत्वमेव, नोपासनावाक्यत्वम् । उपासीते-त्यादिपदाश्रवणात् उपासनाप्रयोजकगुण (धर्म) बोधकानामपि उपासनाविधित्वाङ्गीकारे, 'तदेतद्ब्रह्म चतुष्पादमष्टाशफं षोडशकलमिति चतुष्पात्त्वादिधर्मोपदेशः किमर्थ इति प्रश्ने 'बुध्यर्थं' इति सूत्रेणोपासनार्थ इति यत् भवन्मतीयभाष्येऽभिहितं, तदसंगतं स्यात् , धर्मबोधकस्यैव विधित्वे किमर्थमिदमिति प्रश्नस्यैवानुदयेन समाधानसूत्रस्य वैयर्थ्यात् । गुणबोधकवाक्यार्थनिर्णायकस्यैव उपासनार्थत्वस्य वक्तुं शक्यत्वात् ॥

(कौ०) यदत्रोक्तं—त्वन्मतं निष्कृष्यमाणमित्यादिना श्रीमध्वाचार्यमत-निष्कर्षशब्दजालम् , (कु०) तदपि श्रीमध्वचार्यग्रन्थार्थाऽपरिज्ञानमूलकम् , स्वमता-चार्यग्रन्थतात्पर्याऽवबोधनेऽसमर्थोऽयं परमतीयग्रन्थार्थनिष्कर्षे कथं कल्पते ।

शास्त्रं तावत् द्वैराशिकम् , उपासनाविधिपरम् , तदुपयोगिगुणबोधनपरं चेति । 'आध्यानाय प्रयोजनाभावात्, बुध्यर्थः पादवत्' इति तृतीये सूत्रयता बादरायणेन बोधितम् । भगवतो गुणोपदेशस्तद्द्वारेण ज्ञानाय, तथोपासनाय चेति तदर्थः । 'तदेवं विद्धी'त्यादीनां तु लक्षणया प्रतिपाद्यमिति नार्थः । अपितु भाष्योक्त-मर्थान्तरमेव । एतेन—पूर्वार्धस्य ब्रह्म साकल्येन न वाच्यमनन्तगुणत्वादित्येवार्थः । 'यतो वाच' इत्यादीनामपि साकल्येन वाङ्मनसाऽगोचरत्वमित्येव तात्पर्यम् । ततश्च—ब्रह्म लक्षणया बोध्यत इत्यर्थ इति मूर्खप्रलपनमेव । उक्तमानन्त्यं भगवद्गुणानां भागवते — (द्वितीये, सप्तमे ४१ श्लो)

नान्तं विदाम्यहममी मुनयः प्रजेशा मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन्गुणान्दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् ॥

एतेन—'अत एव यतो वाच' इत्याद्युक्तमपास्तम् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यस्य मनसा सहिता वाचः भगवतो गुणगणं ज्ञात्वा वक्तुं भगवन्तमेत्य साकल्येन विज्ञाय वक्तुमशक्ता निवर्तन्त इत्यर्थः । 'नैतद्यक्षमशकं शक्तवानहं विज्ञातुं, विशेषतो यदेतद्यक्षमिति, भवन्मतीयाचार्यव्याख्याने विशेषत इत्युक्त्या साकल्येन न जानीतोऽग्निवायू इत्यर्थप्रतीतेः । न हि राजादिनिष्ठधर्माणामस्मदीयमनोवागगोचरत्व-मात्रेण राजनि न सन्ति ते धर्माः, वाच्याश्च न ते भवन्तीति शक्यते वक्तुम् ॥

(कौ०) यच्च सर्वेषां पदानां ब्रह्मणि शक्तौ पर्यायत्वापत्त्या सहप्रयोगाऽयोगः, लक्षणायां तु स युज्यत इति। (कु०) स्वमात्रोत्प्रेक्षिता व्याप्तिरियं, न कापि तन्त्रे दृश्यते, अत्रोदाहृतान्यपि प्रमाणानि स्वव्यूहप्रविष्टपुरुषनिर्मितानि। न हि तथा जगदीश्वरः शास्ति। 'विश्वं विष्णुर्वषट्कार' इत्यादिसहस्रनामसु 'काकः काकः पिकः पिकः' इति लोके च सहप्रयोगदर्शनात्। नामानि च सर्वाणि शक्तान्येव। (छा० ७-प्र०) नामविदेवास्मीति ऋगादीनां सर्वेषां भगवन्नामत्वोक्तेः,

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः।
तावन्ति हरिनामानि कीर्तितानि न संशयः॥

इति शौनकीयऋग्विधानवचनाच्च, सर्वेषामाम्नायानां भगवन्नामत्वावगत्या शक्तानामेव नामत्वव्यवहारात्, भवदुक्तरीत्या पर्यायाणां सहप्रयोगायोगात्, वेदपदवाच्यवर्णराशेरेवाऽप्रसिद्ध्या वैदिकपदार्थसामान्याऽसिध्यापत्तेः। यस्य कस्यापि पदस्य वाच्यो हि अन्यस्य लक्ष्य इति हि तान्त्रिकाणां समयः।

न च—शक्यसंबन्धग्रहार्थमित्यादि त्वत्यन्तमपेशलम्। असङ्गे ब्रह्मणि शक्यसंबन्धस्यैव दुर्वचत्वात्। ब्रह्मणो लक्ष्यत्वे लक्ष्यतावच्छेदकं किमिति पर्यनुयोगे किं ब्रूयादुत्तरं भवान्। 'विशिष्टघटकस्य चिदंशस्यापि शक्त्यैवोपस्थितौ सत्यामि'त्यादि तु अपूर्वशास्त्राभ्याससंपादितपाण्डित्यमूलकं स्वीयगोष्ठ्यां शोभेत। गङ्गायां घोष इत्यादौ लक्षणास्थले गङ्गापदस्य प्रवाहविशिष्टे तीरे लक्षणा, शक्तिस्तीरमात्रे इति न वदति कोपि कोविदः। तत्र भागत्यागकल्पनमपि निर्मूलम्। 'सोऽयं देवदत्त' इत्यादावपि न भागत्यागलक्षणा, प्रपञ्चितं चैतत्तत्त्वोद्योते॥

किञ्च—एष दृष्टान्तोऽप्ययुक्तः, सृष्ट्यादिवाक्यानां ब्रह्मादिपदघटितानां प्रत्यभिज्ञावाक्यत्वाभावात्। विशिष्टशक्त्युपस्थितस्याऽर्थस्य पुनरुपस्थित्यपेक्षा नोदेतीति लक्षणा कुत आश्रयणीया। विशिष्टस्य मिथ्यात्वे प्रमाणं नोपलभ्यते शास्त्रे। 'नेह नाने' त्यादीनां तु तादृशार्थकत्वम्। विशिष्टशक्तिग्रहस्तु यूपाहवनीयादिशब्दतौल्यादित्याद्युक्तिरपि चिन्त्या, प्रकृताऽसङ्गतेः। जडभागविशिष्टे शक्तिग्रहः, तत्र भागत्याग इत्यादिभाषणं च, बालपांसुक्रीडामनुसरति। न तु शास्त्रनिशितधिषणानां मर्यादाम्। किंचेदं स्वमतग्रन्थादर्शनमूलकम्। तथाहि—जिज्ञासा-

धिकरणे एवं हि शांकरभाष्यादि दृश्यते—व्युत्पाद्यमानस्य ब्रह्मशब्दस्य नित्यशुद्ध-बुद्धमुक्तस्वभावं ब्रह्म अर्थः, बृहतेर्धातोरर्थानुगमात्, बृहतिर्वृद्धिकर्मा इहातिशायने वर्तते, अतिशायनमनवच्छिन्नं नित्यत्वादीति (भाम) तत्र जडविशिष्टमिति नोक्तम्। जडामिश्रनित्यत्वादिविशिष्टब्रह्मणो ब्रह्मपदमुपस्थापकं जिज्ञासासूत्रे, 'तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिश्रुतिषु च, इदं ब्रह्मबोधकात्मादिपदप्रयोगस्थलेष्वपि समानमिति शब्दार्थ-तत्त्वविद' इत्याद्युक्तम्, 'अतो जडावच्छिन्ने' त्याद्युक्तिरयुक्तैव ॥

किञ्च—नित्यत्वादिविशिष्टे शुद्धे ब्रह्मणि जडभूताविद्यासंबन्धो दुर्निरूपः, मिथ्यात्वबोधकतयाऽभिमत 'नेह नाने' (का० ४-११,बृ०६-४-१९) त्यादिवाक्यानां न तथार्थकत्वमित्यादि विस्तरेण निरूपितमस्मदीय श्रीव्यासपाणिनिभावनिर्णये। अन्यत्रा-न्यैश्च। अतः 'सविशेषणे हि विधिनिषेधा' विति न्यायसंचारस्य नाऽत्रावसरः।

भागत्यागपक्षे नित्यत्वादेरपि त्यागो वक्तव्यः, अन्यथा ब्रह्मणः शुद्धत्वं न सिध्येत्। धर्मसामान्याभावे हि शुद्धत्वं स्यात्। त्यागे हि—तस्य स्वरूपलक्षणत्वकथो-च्छेदः, यावद्द्रव्यभावी हि धर्मः स्वरूपधर्मः। अस्मदिच्छामात्रेण तत्त्यागः कथं शक्यः कर्तुम् ॥

(कौ) यच्चोक्तम्—अन्येत्यकारान्तः पाठस्सांप्रदायिकः न तु तान्तपाठः इति, (कु) दत्तोत्तरमिदम्। किञ्च — तान्तपाठेऽपि प्रतिषेधात्, अन्यत्—ब्रह्मणोऽन्य-द्वस्तु नेति सूत्रार्थे न अद्वैतिनामिष्टसिद्धिः, अकारान्तपाठे अन्येति लुप्तप्रथमान्तं भिन्नं पदं, ध्यानकाले चित्ते प्रतिभासितं वस्तु अन्यत् ब्रह्मभिन्नमित्यर्थो वर्णयितुं शक्य इति द्वैतिनां मनोरथसिद्धिरिति उभयोरपि न लाभहानी पाठभेदे। एवं जातीयानि चोद्यानि कालहरणसाधनानि, न मनोरथसाधकानि। एतेन— 'युक्तेश्चे'(२-३)ति सूत्रे कल्पितमित्यादिना, 'अन्तर्याम्यधिकरणा'दिषु ,शङ्कराचार्यादीनामभिमतपाठत्यागः, अनभिमतसूत्रकल्पनं, पाठभेद इत्यादिप्रलपनमित्यादि चे' त्याद्युक्तं परास्तम्।

ब्रह्मवादिनः सर्वे न शङ्कराचार्यस्य मतानुसारिणः, किन्तु—स्वतन्त्रा यथा-प्रमाणं शास्त्रार्थं निरूपयन्तो विष्णोः परदेवतात्वं व्यवस्थापयितारः। 'शङ्कराचार्यानभि-मत 'मिति तदीयवचनेनैव प्राचीनः पाठो न शङ्कराचार्याऽनभिमत इत्युक्तं भवति। तदनभिमतं न ग्राह्यमित्यत्र किं विनिगमकम्। सर्वेपि प्रतिपक्षिण एव, तस्य भाष्यं

तु प्रौढचेति वदन्तस्तदीयग्रन्थव्याख्यातारस्तदीया एव तस्य प्रतिभटाः। मतान्तरस्थापकाचार्याः प्रायेण पराभिमतमर्थं दूषयित्वा तदनभिमतार्थान्तरपरतयैवाऽधिकरणसूत्राणि योजयन्ति। तत्रैकमुदाहरामः—परमताधिकरणं ब्रह्मव्यतिरिक्तवस्त्वन्तराभावपरतया नीतं शङ्कराचार्यैः, श्रीरामानुजाचार्यैस्तु विष्णोरुत्तमं वस्तु नेत्यर्थपरतया समर्थितम्, विशिष्टं शास्त्रमद्वैतपरमिति (शाङ्करीयाः), शास्त्रं सर्वं द्वैतपरमिति (अन्ये) अतो नैतादृशदूषणोक्तिः पण्डितानां भूषणम् ॥

किञ्च — 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति ईश्वरं लक्षयित्वा 'तस्य वाचकः प्रणव' इति तस्य ओंशब्दवाच्यत्वमेव प्रवदन्ति पातञ्जलेयाः। ओंशब्दोऽन्तरङ्गोऽभिधानः प्रियं नामेश्वरस्येति असकृद्व्यवहारो दृश्यते शाङ्करग्रन्थेषु। अभिधाननामशब्दयोर्वाचकशब्दविषय एव प्रयोगो दृश्यते ॥

(कौ) यदुक्तं पूर्वमीमांसा मध्वादिभिर्न ज्ञायत इति कौस्तुभे।

(कु०) तदत्यन्तमसङ्गतम्। सुधाचन्द्रिकादिग्रन्थानवलोकनमूलकम्, श्रीमद्भगवत्पादाचार्यैर्निरूपितं सर्वं जैमिनीयन्यायानुसारेणैवेति प्रतिपादितं विवृतं च परिमलप्रकाशयोः। मीमांसकास्तावत् नेश्वरमभ्युपगच्छन्ति, श्रीबादरायणस्तु ईश्वरवादीति सकलभुवनविदितम्। ततश्च ईश्वरवादिनोऽनीश्वरवादिनां न्यायं कथमङ्गीकुर्युरिति न किञ्चिदपि समालोचितवान् दीक्षितः। अयमेव मीमांसामर्यादामज्ञात्वा नेत्रे निमील्य मीमांसाविरोध इति पौनःपुन्येनोद्घोषयतीति अवोचाम जिज्ञासाधिकरणान्ते। वक्ष्यते च 'शब्दादेव प्रमित' (१-३) इत्यत्र।

मीमांसां नाभिजानन्ति एते इति परान्प्रतिवदन्नयं भट्टोजिर्मीमांसामर्यादां दैवं मन्वानः 'असमस्तस्य नञो नामार्थेनान्वयो नेति निष्कर्षः कृतोऽस्माभिः शब्दकौस्तुभे' इति नामार्थेन नञोऽन्वयवादिनं दूषयिष्यति तृतीयस्य द्वितीये। इदं च मीमांसासिद्धान्तविरुद्धम्। ते हि — 'यजतिषु यजामहं कुर्यान्नानुयाजे' ष्वित्यादौ नञः स्वोत्तरानुयाजेष्विति नामार्थेनाऽन्वयं सिद्धान्तयन्तीति सुप्रसिद्धं, न्यायप्रकाशादिमीमांसाग्रन्थेषु तथोक्तेः। अत्र च नञ् असमस्तः। अतः कौस्तुभकृतनिष्कर्षो मीमांसामर्यादाविरुद्ध इति स्पष्टम्। ततश्च भट्टोजिनोक्तं सर्वमाग्रहमूलकमेवेति सिद्धं निराबाधं वाच्यत्वं ब्रह्मणः ॥

इति ईक्षत्यधिकरणविचारः

## कौस्तुभकृदुत्प्रेक्षितशब्ददोषोद्धारः

(कौ०) यदाह भट्टोजिः कौस्तुभे — ईक्षत्यधिकरणे 'ईक्षते'रिति सूत्रस्यावतरणे - मध्वभाष्ये 'न तच्छब्दगोचर'मिति प्रयुक्तं, गोचरशब्दस्य नपुंसकत्वं प्रामादिकं नित्यपुंस्त्वात्, तथाच पाणिनीयं लिङ्गानुशासनं 'घाजन्तश्चे' तिसूत्रितमिति। उदाहृतं च वृत्तिकृद्भिः गोचरो विषय इति। प्रयुक्तं च श्रीहर्षेण 'परिधावलयच्छलेन या न परेषां ग्रहणाय गोचर (नै० २-९५)इति। प्रसङ्गाच्चाऽन्ये च कतिचन प्रदर्श्यन्ते समर्थयित्वादय इति च।

(कु०) अत्र वदामः—यदत्रोक्तं नपुंसकत्वं प्रमादिकमिति, इत्थंभाषणमेव प्रामादिकम्। 'स्त्रिया' (पा० ४-१-३) मिति सूत्रमहाभाष्याद्यनवलोकननिबन्धनम्। तथाहि—तत्रभवान् भाष्यकारः सत्वरजस्तमसामपचयोपचयस्थितिरूपं पारिभाषिकं लिङ्गं शास्त्रकार्यनिर्वाहायाश्रणीयम्, इदं च विवक्षातः सर्ववस्तुवृत्ति। 'स्तनकेशवती स्त्री' ति लौकिकं लिङ्गन्तु नास्थेयं, वृक्षादिष्वदर्शनात्, तटीत्यादिलक्ष्याऽसिद्धेः। तच्च शिष्टप्रयोगगम्यम्। ते च—विवक्षातो लिङ्गं निर्दिशन्ति, 'तस्योक्तौ लोकतो नाम, लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य, एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वम्, 'अवयवान्यत्वाच्चे'ति अस्यार्थं कैयट आह। अत्र तस्योक्ताविति भाष्यकारवचनं, न चैतन्मन्तव्यं स्वमनीषिकयोच्यत इति, पठिष्यति ह्याचार्यः, लिङ्गमशिष्यमिति॥ उत्तरभाष्यादिति मन्तव्यम्। तस्येत्यादेरयमर्थः—तस्य लिङ्गस्य प्रतिपादने, लोकतो नाम लोकव्यवहारात्खलु व्यवस्था बोध्या। लोकव्यवहार एव प्रतिपादक इति। तत्राद्यं 'लिङ्गमि'ति वचनं 'विभाषावृक्षे'ति सूत्रे, एकार्थेति 'तस्यापत्य'मिति सूत्रे पठितं वार्तिककृता। शास्त्रोक्तलिङ्गानुशासनस्य व्यभिचारदर्शनादस्यारम्भ इत्युद्योते।

किञ्च — अनेनैव दीक्षितेन, स्त्र्यधिकारे 'सममुल्लासतपङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभि'रिति भारविरिति। नाभिशब्दः स्त्रीलिङ्ग इति कृत्वा कोमलैरिति सामान्ये नपुंसकमिति समाधाय, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति भाष्यात् नाभिशब्दस्य पुंस्त्वमपीति समाधन्तरमभाणि। 'शलाका स्त्रियां नित्य'मिति लिङ्गानुशासनसूत्रवृत्तौ नित्यग्रहणमन्येषां व्यभिचारं ज्ञापयतीति च।

ततश्च— लिङ्गमशिष्यमिति वचनेनैव 'पुंसीत्याद्युपाधिप्रदर्शनं, 'स नपुंसक' मिति लिङ्गप्रकरणं, लिङ्गानुशासनं च न कार्यमिति तदनुसारेणैव प्रयोगः कार्य इति न निर्बन्धः। अत एव - 'ऊकालोऽजि'ति सूत्रे 'ह्रस्वदीर्घप्लुत' इत्यत्र समाहारद्वन्द्वे सौत्रं पुंस्त्वमित्यभ्यधायि मनोरमायां, लिङ्गप्रकरणस्याऽकर्तव्यत्वबोधनादशास्त्रीयत्वात्तद्बाधनं वरमिति भावः। स्पष्टीकृतश्चाऽयमाशयः शब्दरत्ने - लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति तत्र तत्रेत्यादिना। 'ह्रस्वदीर्घे' ति समाहारद्वन्द्व इति पक्षे तत्र पुंस्त्वनिर्देशोऽपि लिङ्गप्रकरणसामान्यं न विवक्षितमित्यर्थज्ञापक इति शक्यं वदितुम्। सर्वं संक्षिप्योक्तं कैयटेन - 'लिङ्गव्यवस्थायां लोकः प्रमाणमित्यर्थ' इति। एवं च - यस्य शब्दस्य यल्लिङ्गं प्रयुञ्जते शिष्टास्तद्युक्तमेव, न तत्र चोद्यं कार्यमिति तद्भावः। हरिरप्याह—

'भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः।
यद्यद्धर्मेऽङ्गतामेति लिङ्गं तत्तत्प्रचक्षते'॥ इति॥

शब्दार्थतत्त्वं ये विदन्ति ये च लिप्सादिदोषगन्धरहिताः तेऽत्र शिष्टाः, ते च शब्दार्थेषु व्यवस्थिताः प्रमाणत्वेन प्रकल्पिताः, लिङ्गस्याप्यर्थेऽन्तर्भाव इति न तस्य पृथगुक्तिः, यद्यल्लिङ्गं धर्मेषु अङ्गतामेति धर्मोपकारकं भवति, तस्य तस्य शब्दस्य तत्तल्लिङ्गं प्रचक्षते इति कारिकार्थः। यल्लिङ्गं धर्मबुद्ध्या प्रयुञ्जते शिष्टास्तदेव शास्त्रसंमतमभ्युदयाय भवति। एवंच - लिङ्गनिर्णये कोशशास्त्रापेक्षया शिष्टप्रयोग एव प्रबलं प्रमाणमिति बोध्यम्। गोचरशब्दस्य नित्यपुंस्त्वाऽभिधानं महाभाष्याद्यनवलोकननिबन्धनं, आग्रहमूलं वा।

यद्ययं साहसिको नित्यपुंस्त्वाभिमानं न जहाति तर्हि स्वाचार्यप्रयोगानेव दूषयितुं प्रावर्ततेति निश्चिनुयुः सुधियः। लोकसिद्धत्वानङ्गीकारे लिङ्गस्य, 'स यो नामब्रह्मेत्युपास्ते' (छा० ७-१-५) इति वाक्यव्याख्यावसरे 'नाम्नो गतं = नाम्नो गोचरम्, बृहच्च तदि (मु० ५-७)ति मन्त्रकर्मफलं संसारगोचरमिति, फलाधिकरणे (३-२-३८), 'अव्यक्तोऽयं' (गी० २-२५), अक्षरं ब्रह्म परमं (८-३)ये त्वक्षरमनिर्देश्यं (गी० १२-३), 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा, (क. २-३-१२) न तत्र चक्षुर्गच्छति (के० उ० १-३) इत्येतेषां व्याख्याने शाङ्करभाष्ये—

यद्धीन्द्रियगोचरम्, यद्धि करणगोचरम्, अकरणगोचरम्, अशब्दगोचरम्, इति, 'संसारगोचर'मिति (तै० उ० १-१) 'ब्रह्मविदाप्नोति पर'मिति उपनिषद्भाष्य-व्याख्याने आनन्दगिरीये 'सर्वेन्द्रियगोचर' मिति 'एवं सततयुक्ता य' इति श्लोके शङ्करानन्दीये च नपुंसकप्रयोगं कथमयं समर्थयेत। न च समासान्तराश्रयणं तत्रेति वाच्यम् — परैरपि तस्य सुवचत्वात्। नाम्नो गोचरमिति व्यस्ते किं करोत्ययम्।

अत एव—श्रीरामानुजभाष्ये जिज्ञासानये - शब्दाऽगोचरं, योगयुञ्जनसो न गोचर'मिति प्रयोगो निर्णयमुद्राणालये मुद्रिते (१४३-पु०) (अत्र गोचर इति पाठान्तराश्रयणं चिन्त्यम्)। भागवतव्या. श्रीध. (१-२-७) श्लो० 'शुष्कतर्काद्य-गोचर'मिति, त्रयी न श्रुतिगोचरे (भा० १-४-२५) ति, 'तदेवेन्द्रिय गोचरमिति 'स्त्रिया' मिति सूत्रे, इन्द्रियाऽगोचरमिति, 'उपदेशेऽजनुनासिक इदि' ति सूत्रे च उद्योते नपुंसकादिप्रयोगश्चोपपद्यते। एतेषां प्रयोगे नपुंसकनिर्देशस्याऽप्रामाणिकत्व-कल्पनापेक्षया महाभाष्याद्युक्तरीतेराश्रयणं वरम्।

श्रीहर्षप्रयोगोपि न निर्णायकः, ग्रन्थाक्षरैर्देवनागरलिपिभिर्देशान्तरे मुद्रित-नैषधपुस्तके 'न परेषां ग्रहणाय गोचरे'ति पाठदर्शनात्, 'न गोचरा=अविषये'ति मल्लिनाथव्याख्यानदर्शनाच्च। पाठे साधुत्वासाधुत्वकोलाहलस्तु निरवधिको यावत्क-ल्पान्तम्। तत्त्वप्रकाशिकायां तु — 'गोचरे' ति बादरायणप्रयोगात् गोचरशब्दो विशेष्यलिङ्गः, अतो गोचरमिति साध्विति समाहितम्। तद्ग्रन्थार्थाऽनवबोधादित्थ-मभिहितवान्। इदं च स्पष्टीकरिष्यते। सुधाचन्द्रिकयोस्तु — प्रकारान्तरेण समाहितम्, गवां = शब्दानां ज्ञानानां च चरः = चरणं वृत्तिर्यस्मिन्निति व्यधि-करणबहुव्रीहिः, विशेष्यनिघ्नो गोचरशब्द इति नपुंसकत्वं युक्तमिति।

किञ्च — 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च(३-३-११९)' तिनिपातितस्य 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी। गोचरा इन्द्रियार्थाश्चे'ति रूपादिपञ्चक एव तस्य रूढेर्दर्शितत्वेन रूपाद्यतिरिक्ते विषयताश्रये (घटादौ) योगेन विना तस्य प्रयोगो दुष्करः। कौमुद्यामेव — विष्णोः पूः विष्णुपुरमिति क्लीबत्वं लोकात्। ककुद्दोषणी इति भाष्यप्रयोगाद्दोःशब्दस्य नपुंसकत्वमपि इति लिङ्गनिर्णये लोकः प्रमाणमिति दर्शितम्।

किञ्च—किराते- (४-२ श्लो०) ' उपसीमे 'ति अव्ययीभावे ; ' अप्यन्येषां कठिनवपुषां दुर्गमे ग्रामसीम्नी 'ति सीमशब्दस्य नपुंसकप्रयोगदर्शनात् , 'नपुंसकादन्यतरस्या 'मिति साधुरित्याहुरित्याह मल्लिनाथः। नेदं प्रतिबन्दिवचनं, किंतु–महतामेषां प्रमादकल्पनापेक्षयाऽस्यैकस्याविमृश्यवादिनः प्रमादकल्पनं वरमिति मनीषिणां बोधनायोपन्यस्तम् । असदाचार्यकृतनपुंसकनिर्देशे महाभाष्यमेकमेव पर्याप्तम् ॥

नन्वयं परान् शिक्षयन् कौमुद्यां — शेषं प्राग्वत्, शेषं रामवत्, शेषं सखिवत्, इत्यसकृत् घञन्तशेषशब्दस्य नपुंसकत्वं निरदिशत् । स च पुल्लिङ्गो ' घञजपः पुंसी ' ति लिङ्गानुशासनात्। प्रयुक्तश्च तथाऽऽचार्येण पाणिनिना ' हलादिः शेषः, शेषोध्यसखि ' इति । उच्यते - स्वभाव एष विदुषाम्, यदात्मनि सत्स्वपि दोषगणेषु परदोषोद्घाटनम्। उक्तंच भगवता बादरायणेन भारते शकुन्तलोपाख्याने-

राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥ इति ।

अन्यैश्च — परोपदेशवेलायां सर्वे व्यासपराशराः ।
स्वानुष्ठानस्य समये मुनयोपि न पण्डिताः ॥ इति ।

ननु— लिङ्गानुशासनवृत्तौ भट्टोजिः परिशेषात् ' घञबन्ता 'इति भावघञर्थविषयकमिति व्यवस्थाप्य तत्र प्रमाणतया प्रयोजनतया च ' संबन्धमनुवर्तिष्यते ' इति 'इकोगुणे'ति सूत्रभाष्यमुदाजहार, अतः शेषमिति निर्देशः साधुरिति चेत्, शृणु—

सत्यमुक्तं दुरुक्तं तत्, ' कर्मण्यणी ' ति सूत्रभाष्ये मांसं भक्षो यस्येति कर्मघञन्तपुल्लिङ्गभक्षशब्दस्य मांसशब्दसामानाधिकरण्येन प्रयोगादुक्तव्यवस्थाया अनुचितत्वात् । तत्र कर्मण्यचि ' घञजपः पुंसी ' ति पुंस्त्वं भक्षःशब्दस्येत्युद्योते । ' संबन्धमनुवर्तिष्यत ' इति भाष्यप्रयोगस्तु ' लिङ्गमशिष्यमिति वचनबलात् । ' घञजप ' इत्यस्याऽभावेन, तस्य प्रायिकत्वेन वा। संबन्धोऽस्यास्तीति ' अर्शआद्यज ' न्तत्वेन वा, भाष्यप्रयोगेण वा, साधुरिति शक्यं वक्तुम् ।

अथवा — भावप्रधानाद्गोचरशब्दाद्विषयतापरात् ' अर्शआद्य ' चि निष्पन्नगोचरशब्दो, विशेष्यलिङ्गः । घान्तस्य ' पुंसि संज्ञायां घः प्रायेणे ' त्यादिसूत्रैः

पुंस्त्वं सिद्धम्, अजन्तस्य च 'घञजप' इति बहुसंमतपाठेनैव तत्सिद्धम्। 'घाजन्त' इत्यानुपूर्वीकं सूत्रं तु न दृश्यते लिङ्गानुशासने। अस्तु नाम तदुपेक्षितं, अथापि तदपि 'लिङ्गमशिष्य' मिति न्यायेनाऽसत्प्रायमेव। अथवा—प्रायिकत्वं तस्योपेयम्। एवं च – 'घाजन्तश्चे'ति तत्त्वकौस्तुभधृतः पाठोऽसांप्रदायिकः। तस्मात्सिद्ध गोचरमिति निर्देशस्य साधुत्वम्॥

'न केवलमिहैवे' त्यादिभाषणं सर्वथाऽसंगतमित्युत्तरग्रन्थदूषणेनैव स्पष्टीभविष्यति॥

(कौ०) यदुक्तं — 'समर्थयित्वे' ति (तात्पर्यनिर्णये ३२ अध्याये) प्रयोगोऽसाधुरिति कौस्तुभे, (कु०) एतदपि न युक्तमिति वैयाकरणानां मर्यादयैव निरूपयामः 'धातुसंज्ञाप्रयोजके प्रत्यये विवक्षित उपसर्गसमानाकारं पूर्वपदं पृथक् क्रियत' इत्यस्य ज्ञापकसिद्धत्वात् 'ज्ञापकसिद्धं न सर्वत्रे' त्यनेन प्रकरणस्य काचित्कत्वेनात्र पृथक्करणाभावेन विशिष्टादेव क्त्वाप्रत्यये न पुनरत्र समासाभावात् ल्यपोऽप्रवृत्तेर्णिलोपाभावे समर्थयित्वेति रूपस्य साधुत्वात्। अत एव - अत्र 'अर्थवेदयोरापुग्वक्तव्य' इत्यापुक् न। अत एव च - 'प्रार्थयन्ती 'ति प्रयोगे करोतिण्यन्तात्परस्मैपदं साधितं धातुवृत्तौ माधवेन। 'ज्ञापकसिद्धं न सर्वत्रे'त्याश्रयणेन बहूनि लक्ष्याणि साधयन्ति वैयाकरणाः, यथा - ताच्छीलिकेऽणकृतानि भवन्ती' ति न्यायेन छात्रा स्त्रीत्यत्र अण्कार्ये ङीप् न, 'प्रातिपदिकग्रहण' इति न्यायेन द्विषतीतप इत्यत्र मुम् न, उभयोर्न्याययोर्ज्ञापकसिद्धत्वेन काचित्कत्वात्।

अत एव—'गुरोः कर्मातिशेषेणाऽभिसमावृत्त्ये' ति वाक्यव्याख्याने ब्रह्मजिज्ञासां समापयित्वेति शाङ्करभाष्यप्रयोगस्य साधुता सुवचा भवेत्॥

(कौ०) 'मिथ्यायाः साधकत्वं चे 'त्यत्र मिथ्येति वक्तव्ये 'मिथ्याया' इति सविभक्तिकनिर्देशोऽसाधुरिति यदुक्तम्,

(कु०) तदपि असमीक्ष्यकारितामात्मनः प्रकटयति। तथाहि—सुधायां द्वेधा समाधानमभिहितम्, कस्यांचिद्व्यक्तौ संकेतितस्य मिथ्याशब्दस्य षष्ठ्यन्तत्वसंभवेन तत्प्रतिरूपकशब्दान्तरस्य संभवात् तस्यापि मिथ्यात्ववाचकत्वमिति कृत्वा मिथ्याया इति प्रयुक्तम्।

अथवा — 'मिथ्या,या' इति पदविभागः या वाचो मिथ्या ब्रह्मातिरिक्तत्वात्, तासां साधकत्वं कथमिति योजना । अथवा - मिथ्यात्वपरान्मिथ्याशब्दात् 'अर्शआदिभ्यो 'ऽजित्यचि तदन्तात् षष्ठीति शिष्यैरूहनीयमिति सुधाकृद्भिर्नोक्तम् । अतोऽयं ग्रन्थाऽनवलोकनमूलकः प्रलापः ।

(कौ) यच्चोक्तं कौस्तुभे—अनुव्याख्याने 'अर्थत्वमर्यतैव स्या (२-१-२) दित्यत्राऽर्यतेति 'अर्यः स्वामिवैश्ययो' रिति व्याकरणविरुद्धमिति ।

(कु०) तदपि— चिन्त्यम् - तत्रत्यसुधाग्रन्थाऽनवलोकनमूलकत्वात्, तदर्थाऽपरिज्ञानमूलकत्वाद्वा । तत्र हि—उदाहृतपाणिनिसूत्रविरोधमाशंक्य 'अर्थे स्वामित्वोपचारादिति न विरोध इति समाहितम् । तत्र स्वामित्वं प्राधान्यम्, अर्थज्ञानयोर्मध्येऽर्थस्य प्रधानता, अर्थाधीनत्वाज्ज्ञानस्य । 'स्वामिन्नैश्वर्ये' इति सूत्रण प्राधान्ये स्वामिन्निति निपातनात् । लोके प्रधानःखलु पुरुषः स्वामी ईश्वर इत्युच्यते । अथवा - स्वामिशब्दार्थप्राधान्योपपादकं राज्याधिपत्यादिकमैश्वर्यं तद्वति जनाधिपे स्वामीति मुख्यः प्रयोगः, अन्यत्र तदीयमन्त्रिवर्गादावुपचारात्स प्रयुज्यते । सिंहो माणवको, रथो गच्छतीत्यादौ माणवकादौ सिंहादिप्रयोगवत् ॥

(कौ) यच्चोक्तं 'सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपी' त्यत्र दीर्घेकारं प्राश्नीकपदं प्रयुक्तं तत्र दीर्घेकारप्रयोगोऽसाधुरिति तद्भावः ।

(कु०) अत्रोच्यते - 'शब्ददर्दुरं करोती' (४-४-३४) तिसूत्रे करोतीति योगविभागेन प्रश्नशब्दात्करोत्यर्थे ठक्, तस्येकादेशे इकारस्य पृषोदरादित्वकल्पनया दीर्घे प्राश्नीक इति सिध्यति । एवमभिप्रायेणैव करोत्यर्थे ईकक्प्रत्यय इत्युक्तं सुधायाम् । ईक गिति सानुबन्धनिर्देशस्तूक्तार्थकप्रत्यत्योऽत्रेति ज्ञापनाय ।

अथवा—'तत्र साधु' रित्यधिकारे 'कथादिभ्यष्ठ 'गिति साध्वर्थकष्ठक्, प्रश्ने साधुरित्यर्थे प्रश्नशब्दात् ठक् । इगादेशादि पूर्ववत् । साधुत्वं चाऽत्र प्रष्टृत्वप्रयोजकसामर्थ्यविशेषः ।

यद्वा — प्रश्नं करोतीत्यर्थे पृषोदरादित्वादेवाऽपूर्वे ईकक्प्रत्ययः, पद्मनाभ इत्यादौ समसान्ताऽजादिप्रत्ययवत् । अत एवोक्तं—'अच्प्रत्यये 'ति सूत्रे 'अजिति

योगविभागस्य भाष्येऽदर्शनात् 'पृषोदरत्वा' दिनेदं सिद्धमिति कश्चिदिति । इदं = पद्मनाभादिकं, कश्चित्=भाष्यतत्त्ववित् (भैर) । न हि मन्तव्यं समासपदविषयं 'पृषोदरादि' सूत्रमिति; पुराणपुरातनशब्दयोः पृषोदरादौ पाठात् । पाक्षिकस्तलोप इति सर्वादिसूत्रकैयटात्, तद्धितविषये चेदं प्रवर्तते, उणादेः शास्त्रान्तरत्वेन हंसादिपदानां तेन साधुत्वकल्पनापेक्षया, एतच्छास्त्रेण साधुत्वकल्पनं वरमिति पृषोदरादिसूत्रशेखराच्च । यद्वा — 'शक्तियष्ट्योरीकक्, तीयादीकक् स्वार्थे' इत्यत्र श्रूयमाण ईकक् अर्थान्तरे प्रकृत्यन्तरादपि भवति, बहुवचनात्, तद्धि बहुलग्रहणसमानार्थकम् । यथा तत् आचार्याऽनुक्तप्रत्यानां सूचकम्, तथोक्तोऽपि प्रत्ययः प्रकृत्यन्तरादर्थान्तरेऽपीति सूचयति । तत्सिद्धं प्राश्नीकपदं पृषोदरादित्वादिना साध्विति । पृषोदरादित्वमाश्रित्य प्रयोगसमर्थने, न शब्दनियमो, नाप्यधिकारिनियमश्च ॥

(कौ०) यत्तु— 'साक्षादनुभवारूढं शक्यतेऽपोदितुं कचित्,' इति । अत्रापवदितुमिति वक्तव्येऽपोदितुमिति संप्रसारणविशिष्टप्रयोगोऽसाधुः तुमुनोऽकित्वादिति ।

(कु०) तत्तु न सांप्रतम्— आचार्यास्तावदपवदितुमिति असाध्विति मत्वाऽज्ञात्वा वा, तथा प्रयोगो न कार्य इति हठेन वाऽपोदितुमिति न प्रायुञ्जत । किन्तु— 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारये'दिति छन्दोविदभियुक्तोक्तवचनमनुसृत्य पृषोदरादित्वकल्पनया वकाराकारयोरुकारादेशमाश्रित्यैवं प्रायुञ्जत । एवं चोभयं साध्विति तदाशयः । अत एव 'शक्ताऽपवदितुं तस्मा'दिति व्यवहितोत्तरग्रन्थे प्रयुक्तमाचार्यैः । शब्दशास्त्रवच्छन्दश्शास्त्रमपि कविभिरनुसर्तव्यमिति तात्पर्यम् ।

'छान्दसं संप्रसारण'मिति सुधोक्तेः वैदिकमिति न तात्पर्यम् । किन्तु— छन्दसः तल्लक्षणस्यानुकूलमित्यर्थे । 'शेष' इति लक्षणेनाऽण् । आनुकूल्यं च छन्दश्शास्त्रसंपत्तिकृत्त्वं, तच्चात्र संप्रसारणमिति 'संप्रसारण'मित्युक्तम् ।

भट्टोजिना क्षुण्ण एव पन्था आस्थेयो निखिलैरिति किमस्ति नियतिशासनम् । 'कृष्णभूमं' इत्यादिसिद्धये 'कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यत' इत्यादिवाक्यद्वयं पठित्वा, 'अजि'ति योगविभागादन्यत्रापि पद्मनाभ इत्याह कौमुद्याम् । नागेशस्तु—'योगविभागसिद्धाऽभियुक्तोक्तिरिय'मिति वदन् 'नेयं भाष्यकारीयेष्टि'रित्यसूचयत् ।

कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥ (कृष्णभूमः)

अन्यत्रापि च दृश्यते पद्मनाभो दीर्घरात्र इत्याह वृत्तिकृत् । 'स्वस्य चे' ति पठित्वा स्वकीयमित्याह भट्टोजिः । भाष्येऽभावादस्य, स्वशब्दात् स्वार्थिक-कप्रत्ययान्ताच्छे स्वकीयमित्याह नागेशः शेखरे । त्रैस्वर्यमपि पृषोदरादित्वात्साधयन्ति सायणादयः । व्युत्पन्नाः शास्त्रमर्यादामनुसृत्य यथालक्ष्यं बुद्धिवैचित्र्यात् प्रयोगोपपत्तिं कुर्वन्तीति 'ग्रन्थपरिशीलनशालिनां सुस्पष्टम् ।

दृश्यते त्वेवंजातीयकः प्रयोगः शाङ्करे 'समान एवं चाऽभेदा'(३-३-१९.)दिति सूत्रभाष्ये 'तद्बलेन प्रत्यभिज्ञापोदितुं शक्यते' इति निर्णयसागरमुद्रालये ( १९२७, सं ) मुद्रिते पुस्तके । तत्र विवदन्ते तदीया विद्वांसः पाठान्तरकल्पनादिना ॥

(कौ) यदपि कौस्तुभे—'स्वनाशार्थं च को यते'दित्यत्र यतेतेति वक्तव्ये यतेदिति परस्मैपदमसाध्विति । (कु०) तदिदं वैयाकरणानां प्राचां, कौमुद्यादौ स्वकृतां च व्यवस्थां विस्मृत्य कृतः प्रलापः, पृथक्जनव्यामोहमात्रजनकः । यतो धातुवृत्तिकृन्माधवादयः — 'चक्षिङो ङित्करणादनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं' तेन 'प्रार्थयन्ति शयनोत्थितं प्रिया' इति सिध्यतीत्याहुः । कौमुद्यामपि 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणात् 'उदयति विततोर्ध्वे'त्यत्र उदयतीत्युक्तम ॥ वयमपि अनेनैव न्यायेन यतेदिति साधुरिति वदामः । अत एव हि 'स्फाय' न्तिति महाकविप्रयोगः साधुरिति वदन्ति । महावैयाकरणोऽयं शाब्दे तन्त्रे आत्माऽऽत्मीयव्यवस्थाविरुद्धमत्र कथं भाषत इति महदिदमाश्चर्यस्थानम् ।

(कौ०) यच्चोक्तम्—(२-२-६ अधि.) 'सदातनीति वक्तव्ये सदातनेत्यपशब्द' इति । आक्षेपाशयोऽयं - 'सायंचिरे' ति ट्युट्युलोरन्यतरप्रत्यये तस्य तुडागमे टिदन्तत्वात् ङीपा भाव्यमिति ।

(कु०) श्रीमज्जयार्यास्तु—'तद्धिता' इति बहुवचनाऽनुमिता'ऽऽद्यादिपश्चाड्डिमच्'प्रत्ययवत् भावार्थे सदाशब्दादपूर्वस्तनप्रत्यय इत्यभिप्रयन्ति । अस्य टित्वाभावान्न ङीप् । अथवा तनोतेरिति, तुष्यतु दुर्जनन्यायेनेदम् । सदाशब्दो-

पपदकञ्नोतेः पचाद्यचि सर्वकालव्याप्तमित्यर्थकोऽयं शब्द इति भावः । 'दक्षिणापश्चात्पुरसस्त्य'गिति सूत्रे मनोरमायां 'पश्चात्तनै'रिति काचित्कं प्रयोगमादाय एवमेव साधितं साधुत्वं भट्टोजिना । 'ये तु पश्चात्तना गुणा' इति शास्त्रदीपिका-(३-१-१३) प्रयोगोऽपि एवमेव साधनीयः ।

केचित्तु — ट्युट्युलन्तत्वेपि भावप्रधानात् सदातनशब्दादर्शआद्यचि 'यस्ये' ति सूत्रेण प्रकृत्यकारस्य लोपे टित्संबन्ध्यदन्तत्वाभावेन न ङीबित्याहुः । अजादेराकृतिगणत्वादत्र टाबिति शक्यं वक्तुमिति च ।

इदं ज्ञेयम्—इयं हि शैली दृश्यते श्रीजयार्याणाम्, यत् श्रीमदानन्दतीर्थ भगवत्पादप्रयोगेषु अपाणिनीयत्वशङ्कास्पदेषु क्वचिच्छङ्कामुद्भाव्य, क्वचिच्छङ्कां मनसिकृत्वा, द्वयोर्द्वयोः समाधानयोरभिधानमिति । तत्र शङ्कांशमात्रं प्रदर्शयन् शब्दोऽयमसाधुरित्युद्घोषयति स्वजनमोहकेन वाग्जालेन भट्टोजिः ।

तत्रेदमेकमुदाहरणम्—'यते'दित्यत्र 'बहुलमेतन्निदर्शन'मिति स्मरणाद्यतेदिति परस्मैपदम् । तथाचाह—'चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमि'ति । अनुदात्तेत्त्वपाठो बहुलमिति तदर्थः । एवंच - सर्वत्र पदव्यत्यासो भवति समाहितः । एवमर्थे वृद्धसंमतिमाह — तथाच चान्द्रादय इति । एतद्वृद्धवचनं अस्मदुक्तार्थकबहुलमेत'दिति वचनमूलकमिति भावः । एवंच - लौकिकवैदिकप्रयोगेषु पदव्यत्ययः पाणिनीय एव, न तत्र अपाणिनीयत्वशङ्का कार्येति ज्ञापितम् । अस्य वचनस्य एवमर्थेन परस्मैपदं साधु । चान्द्रादिव्याकरणान्तरेण वा साध्विति सूचनाय चान्द्रेत्यभिहितम् । 'अदन्तधातुनिदर्शनम्, दशगणीपाठो, नवगणीपाठो बहुलम्, चुरादिभ्य एव बहुलं णिजि'ति प्रयोगानुसारेण कृतव्याख्यानानीव अस्मद्दर्शितव्याख्यानं बहुप्रयोगानुसारि युक्तमेवेति तात्पर्यम् । उपरितनसमाधानग्रन्थमनवलोक्यैव परस्मैपदमसाध्वित्याह ।

'चक्षिङो ङित्करणा'दित्यादि तु धातुवृत्त्यादौ प्रसिद्धत्वात्, भाष्यानुक्तत्वेन बहुसंमतत्वात् श्रीजयार्यैर्नोक्तम् ॥

(कौ०) यत्तु — जयतीर्थेन, गोचरशब्दस्य क्लीबत्वमार्षमित्यारभ्य आवहतीत्यन्तेन श्रीजयार्यकृतसमाधानदूषणं,

(कु०) एतत्तस्यैव भ्रान्तत्वाद्यतिशयं द्योतयति । तथाहि - तत्त्वप्रकाशिकायां तावत् 'क्लीबत्वमार्ष' मिति, एतत्सजातीयपदान्तराणि वा न दृश्यन्ते । तत्रत्यग्रन्थस्य अन्यथाऽर्थं गृहीत्वा, दूषयत्ययम् । तत्र तु - 'त्रयी न श्रुतिगोचरे' ति गोचरशब्दस्य विशेष्यलिङ्गतया ऽऽर्षप्रयोगात् 'न तच्छब्दगोचरमि' ति युक्तमि' ति पंक्तिर्दृश्यते । वाक्यस्यास्य त्वयमर्थः - गोचरेति व्यासप्रयोगात् आर्षप्रयोगाद्विशेष्यलिङ्गतयेत्यन्वयेन त्रिलिङ्गत्वे आर्षप्रयोगो हेतुः । तेन - 'शब्दगोचर' मिति क्लीबत्वं युक्तमिति । बालोपि जानीयादिममर्थं गीर्वाणभाषाभ्यसनदशामापन्नः । भ्रान्तवचनं श्रुतवतोऽनिवृत्तभ्रमस्य कौस्तुभकृतोऽस्यार्थस्याऽपरिज्ञाने तु तदीयदौर्भाग्यमेव कारणम् ।

'कुशकाशावलम्बन' न्यायविषयता कौस्तुभकृन्मतीयानामेव, यतस्ते मुद्रापयितारः पुस्तकानां, प्राचीनपाठं विहाय अविद्यमानग्रन्थं प्रक्षिप्य, पाठव्यत्ययादिकं च कृत्वा इतिहासपुराणादिकं मुद्रापयन्ति नवंनवं ग्रन्थजातम् । तस्य तस्योपोद्घातलेखनच्छलेन स्वस्वमताऽनुगुणकथाश्चोत्प्रेक्ष्य लिखन्ति । इदं चाद्यत्वे नानामुद्रणालये मुद्रयित्वा प्रकाशितभारत-रामायण-भागवतादिग्रन्थद्रष्टॄणां सुस्पष्टम् । श्रीव्यासपाणिनिभावनिर्णये निरूपितं च विस्तरेणास्माभिः । चमसाधिकरणे (१-४-२) प्राचीनशाङ्करभाष्ये 'अजायां छागे' ति पाठ इति ज्ञायते । 'छागेति शाङ्करभाष्ये टाबन्तप्रयोगाच्छागशब्दोऽजादिष्विति केचिदिति' 'अजाद्यत' (४-१-४) इति सूत्रे शेखरोक्तेः । यद्यपि - छागशब्दो नात्र गणे पठ्यते । तथापि - शाङ्करादिप्रयोगाऽन्यथाऽनुपपत्त्या पाठः कार्य इति प्रतीयते । छागीति बहुलप्रयोगासिद्धेः प्रयोगस्य छान्दसत्वं शरणमिति शेखरव्याख्याने भैरवोक्तेश्च । आधुनिकास्तु 'अजायां छागी' ति शोधयित्वा शाङ्करभाष्यादिकं मुद्रापयन्ति । अतो जानन्तु 'कुशकाशे' ति न्यायविषयास्त एवेति । 'पुत्रार्थ' मिति न्यायप्रसरोपि न माध्वमतीयानां; तैः पाठान्तराद्यकल्पनात् । पाठान्तरादिकं कल्पयतां दीक्षितमतीयानामेव । तत्पक्षे बहुलं तादृशव्यापारोपलंभात् ।

प्रतारकत्वभ्रान्तत्वादिकमपि दीक्षितीयानामेव । यतस्ते प्रत्यक्षागमप्रमाणप्रमितपदार्थसामान्यस्य ब्रह्मातिरिक्तस्य मिथ्यात्वं, ब्रह्मस्वरूपसाधक 'यतोवे' त्यादिवेदस्य, तथा 'शास्त्रयोनित्वा' (१-१-२) दिति सूत्रनिचयस्य व्यवस्थापयतां समुद्र-

घोषसदृशेन वाग्जालेन परस्परं व्याघातेन परान्वञ्चयतामेव । न मध्वमतीयानां प्रमाणसिद्धप्रमेयस्य तात्विकत्वमभ्युपगच्छताम् ॥

(कौ) यत्तु — जयतीर्थोऽपि प्रायेणाऽपशब्दान्प्रयुङ्क्ते - तथाहि तृतीयश्लोके निकृन्तन इत्युक्तम्, 'निकर्तन' इति युक्तमिति ।

(कु) तदयुक्तम् । कृतिरिति ह्रस्वान्तं धात्वन्तरमपि स्वीक्रियते, ' बहुलमेतन्निदर्शन ' मित्युक्तेः । तेनापठितोऽपि धातुः प्रयोगानुसारात्सिध्यतीति वैयाकरणैरभिधानात् । इदित्वान्नुमि साधुरयं निकृन्तन इति । अतएव - ' विरहिनिकृन्तनकुन्तमुखाकृतिकेतके ' ति जयदेवप्रयोगः संगच्छते ( गी० गो० १-३-प्र० ६-प ) । ह्रस्वान्तोऽपि धातुरस्तीति केचिदिति रसिकरञ्जनीकृत् । रसिकप्रियाकृता तु चिन्त्यमित्युक्तम् । अस्य प्रयोगस्य साधुता शाब्दिकैः कल्पनीयेत्यर्थः । तत्र निकर्तनेत्येव पाठ इति वदतां ' कुशकाशावलंबन ' न्यायप्रसरः । अतएव - ' एकेन नखनिकृन्तनेने ' ति छान्दोग्यप्रयोगः सङ्गच्छते । छान्दसत्वकल्पनापेक्षयेदं समाधानं वरम् । छान्दसत्वकल्पनमगतिकगतिः ।

(कौ०) यच्चोक्तं - " रथ्याद्भिः, स्वहतगोनिर्मातृमात्रविषयत्वात्, द्वित्रिशाखानिर्णायकत्वा " दिति प्रयोगत्रयमसाधु । प्रथमे समासान्तेनाऽप्रत्ययेन, द्वितीये टचा, तृतीये डचा भाव्यम् । तथाच - रथ्यापाभिः, चित्रगवीनिर्मातृ, द्वित्रशाखे'ति प्रयोक्तव्यमिति ।

(कु०) ' समासान्तविधि ' रनित्य इति महाभाष्यादिसम्मतेन न्यायेन ' प्रराजा, सुपथी नगरी ' त्यादाविवाऽत्र प्रयोगत्रयेपि अप्रत्ययाद्यप्रवृत्तेः । कौमुदीकौस्तुभादौ एतन्न्यायस्य ज्ञापकप्रयोजनानि अनेन दीक्षितेनाभिहितानि । अतएव - ' परलोकपथ्यदन ' ( छा० बृ० ४-४-२० ) शाङ्करभाष्यप्रयोग उपपन्नो भवति । प्रकारान्तरेणात्र समाधानं तु क्लिष्टम् ॥

(कौ०) यत्तु - यदत्र विरोधैकाऽपोद्यत्वमिति, तदसाधु । अपवाद्यत्वादिति भाव्यमिति । अस्याऽयमाशयः - ' वदः सुपि क्यप्चे ' ( ३-१-१०६ ) त्यत्र भाव इत्यपकर्षात् अनुपसर्गग्रहणानुवृत्तेश्चोपसर्गे कर्मणि तत्सूत्राऽप्रवृत्तेरिति ।

(कु०) इदमयुक्तं - वदः सुपीत्यत्राऽनुपसर्गग्रहणानुवृत्तौ दृढतरमानाभावात् । ननु - 'वदः सुपीत्यनुपसर्गग्रहणं कर्तव्यं, न कर्तव्यम्, अनुपसर्गे इति वर्तते एवं तर्ह्याचष्टेऽनुपसर्गे इति, नैतदन्वाख्येयम्, अधिकारा अनुवर्तन्त इति, एष एव च न्यायः, अधिकारा अनुवर्तेरन्निति वार्तिकं भाष्यं च मानमिति चेत्, उच्यते — सति वार्तिके नोपसर्गभिन्ने सुपीत्यर्थः, किंतु - उपसर्गे सति न क्यबिति प्रसज्यप्रतिषेध-न्यायेन निषेधे तात्पर्यम् । ततश्च नञ्घटितत्वाद्वाक्यस्य 'नञ्घटितमनित्यमिति न्यायेन क्यप्प्रवृत्तिः सुवचा । भाष्यमते तु - यद्युपसर्गे सति नेष्यते क्यप् । मण्डूक-ानुवृत्त्या तत्सिद्धौ वार्तिकं न कर्तव्यमिति प्रत्याख्यान एव तात्पर्यम् । नोपसर्गग्रह-णाऽनुवृत्त्योपसर्गसंनिधाने क्यबभावे । नागेशः प्रकृतसूत्रशेखरे 'सत्सूद्विषद्रुहदुहयुज-विदभिदच्छिदजनीराजामुपसर्गेऽपि क्विप्'(३-२-६१) इति सूत्रे उपसर्गग्रहणेन सुब्ग्रहणे नोपसर्गग्रहणं इति ज्ञापनात् वदः सुपीत्यत्र नोपसर्गग्रहणम् । अतः प्रवाद्यमित्यत्र न क्यबित्याह । स्पष्टं चेदं सत्सूद्विषेति सूत्रे भाष्ये । हरदत्तोऽपि मञ्जर्यामित्थमेवाह ।

व्यक्तिपक्षे 'प्रतिलक्ष्यं लक्षणोपप्लव'इति अपवदेः क्यबर्थं कल्पिते 'वदः सुपी' त्यत्र ज्ञापकसिद्धत्वादुपसर्गाऽग्रहणाभावात् सोपसर्गापवदेः क्यपि संप्रसारणेऽपोद्येति सिध्यति । न च - 'वदः सुपी' ति सूत्रभाष्येऽनुपसर्गग्रहणप्रयोजनतयाऽपवाद्यमित्य-स्योक्तत्वेन तत्रैव प्रकारान्तरेण क्यप्साधनमयुक्तमिति वाच्यम् । क्वचित् भाष्यकोशे प्रवाद्यं संवाद्यमित्येव दर्शनात् । यद्वा - 'घञर्थे कविधान 'मिति अपवदेः कर्मणि के संप्रसारणे निष्पन्नाऽपोदशब्दात् 'शाखादिभ्यो य' इति स्वार्थे यप्रत्यये, तेनैव भावे प्रत्यये अपोदो बाधः, तमर्हतीत्यर्थे दण्डादिभ्यो य' इति यप्रत्यये अपोद्यमिति रूपम् । विरोधेनैव बाध्यमित्यर्थः । शाखादिर्दण्डादिश्चाकृतिगणः प्रयोगबलात् ।

किंच - भावपदापकर्षोऽयुक्तः, 'भुवो भाव' इतिसूत्रे भाव इत्युत्तरार्थमिति भाष्योक्तेः । किंच - वदेः सकर्मकत्वेन ततो भावे प्रत्ययानुपपत्तेः 'तयोरेव कृत्ये'ति सूत्रेणाऽकर्मकादेव भावे प्रत्ययाऽभ्यनुज्ञानात् । यद्वा - 'अनेकार्था हि धातवः' इत्युक्तेः अपपूर्वकादुन्दीधातोरपवादार्थकात् घञर्थे कर्मणि के 'अनिदितां हल' इति नलोपे स्वार्थे यप्रत्ययेऽपोद्येति रूपसिद्धिः ।

सूत्रस्य - भाष्यकृदाद्यनुक्तमर्थं वर्णयित्वा परेषु दोषाविष्करणेऽप्रामाणिकोऽयम-विश्वसनीयवचन इत्येव जानीयुर्विमर्शकाः ॥

(कौ०) यच्चोक्तं 'छन्दोऽभिधानान्नेति चेन्न --- तथा चेतोऽर्पणे'ति सूत्रे 'अवश्याऽपेक्षित' इत्यसाधुिति। तस्ययमाशयः - अपेक्षितशब्दस्य कृत्यप्रत्ययान्तत्वाभावेनाऽवश्यमो मस्य लोपाऽप्रवृत्तेः 'लुम्पेदवश्यमः कृत्य' इत्युक्तेरिति।

(कु०) इदमत्र वक्तव्यम् - नात्रावश्यंशब्दस्य समासः 'सुप्सुपे' ति, अपि तु - 'अवश्यश्चासावपेक्षितश्चे' ति कर्मधारयः, अवश्य इति हेतुगर्भविशेषणं, वशं गत इत्यर्थे 'वशंगत' इति सूत्रेण यति निष्पन्नो वश्यशब्दः परतन्त्र (पराधीन) वाची, ततो नञ्समासे अवश्यशब्द इतरानधीन इत्यर्थकः। प्रकृते तत्त्वमितरासाध्यत्वम्, ततश्च — 'पुरुषे ज्योति' रित्यत्रत्यज्योतिःशब्दार्थो न पूर्वाधिकरणन्यायेन शक्यो निर्णेतुम्। अतोऽपेक्षितः=प्रकारान्तरेण निर्णेयतया विवक्षितः इति प्रकृताऽवश्योपेक्षितपदार्थः। ततश्च तन्निर्णये आवश्यकत्वमर्थात्सिद्धमिति प्रकृतवाक्यार्थः। एवं च - अवश्यम्पदस्यैवाभावेन 'लुम्पेदवश्यम' इतिवचनोपन्यासपूर्वमसाधुत्वभाषणं न युज्यते।

एतेन - 'लिङ्गभूयस्त्वा' धिकरणे 'अवश्यापोदित' मिति तदुल्लिखितोपि पाठः समर्थितो वेदितव्यः। वस्तुतोऽनूदितोऽयं पाठो ग्रन्थे नोपलभ्यते। यत्र क्वचिदुपलब्धोऽपि प्रामादिकः स पाठः, 'अवश्यापेक्षित इत्येव पाठः सांप्रदायिकः, युज्यते चायमेव पाठः। तथाहि - तत्राह्यधिकरणे गुरुप्रसादस्य प्राबल्यं समर्थितं सूत्रकृता। अतस्तत्राऽवश्यशब्दो दर्शितव्युत्पत्त्या इतराधीनपरो दुर्बलार्थकः, लोके दुर्बलस्यैवेतराधीनत्वदर्शनात्। ततो नञ्समासेऽवश्यपदं प्रबलार्थकं हेतुगर्भविशेषणम्, विशेषणोभयपदकर्मधारयः पूर्ववत्। गुरुशिष्ययोः पुरुषत्वाविशेषात् प्रदानप्रयत्नयोरविशेषं मत्वा, कदाचित्कश्चिद्गुरुप्रदानमुपेक्षेत तथा माभूत्पुरुष इति, तदवश्यमपेक्षणीयं जिज्ञासुभिरित्यधिकारिवर्गस्य बोधनाय तदावश्यकतां समर्थयांचक्रे सूत्रकृदिति टीकार्थः। प्राकरिणिकमिममर्थमबुध्वा दूष्याऽदूष्यापरिज्ञानेनाऽदोषेऽत्र ग्रन्थे दोषमुद्घाटयन्नयं कृत्याऽकृत्यविवेकवैधुर्यमात्मनः प्रकटयतीति विदाङ्कुर्वन्तु। ग्रन्थकर्तुरस्य कृत्याऽकृत्याऽविवेकितामेव स्पुटीकरिष्यामोऽनुपदमुत्तरत्र॥

(कौ०) यदुक्तं बहुषु स्थलेषु 'समर्थय' दिति 'छन्दोऽभिधाना' दित्यत्र टीकायां, समर्थयत्सूत्रमिति प्रयोग इति, (कु०) तत्सूत्रानुवादः प्रामादिकः। तत्र तथा प्रयोगादर्शनात्। 'भूतादि-पादव्यपदेशोपपत्तेश्चैव' मिति, सूत्रे हि दृश्यते।

ननु - यत्र क्वापि भवतु प्रयोगोऽयमसाधुः, अर्थधातोरात्मनेपदित्वादिति चेत्, अत्रोच्यते — 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्य' मित्यर्थयतेरात्मनेपदस्य पाक्षिकत्वेन तदप्रवृत्तेः । न चायं धातुरनुदात्तेदिति धातुपाठे न पठित इति वाच्यम् — 'आगर्वादात्मनेपदिन' इति चुरादौ आगर्वीयेष्वस्य पाठात् । आत्मनेपदिन इत्यस्य च आत्मनेपदप्रयोजकाऽनुदात्तेत इत्यर्थात् । अतएव - धातुवृत्तौ चक्षिङो ङित्करणज्ञापिताऽनुदात्तेत्त्वलक्षणात्मनेपदाऽनित्यत्वस्योदाहरणं 'प्रार्थयन्ति शायनोत्स्थितं प्रिया' इति प्रादर्शि । 'आत्मनेभाषे' ति पदप्रयोगसद्भावेऽपि एवमेवार्थस्तस्येति ज्ञेयम् । अन्यथा तेभ्य आत्मनेपदाऽसिद्धिः 'नेर्विश' इत्यादिवत् आत्मनेपदविधायकवचनाऽदर्शनात् ॥

किंच — समर्थशब्दात्करोतिण्यन्तात्परस्मैपदमिति शक्यं वक्तुमिति निरूपित मधस्तात् । न च - 'धतुसंज्ञाप्रयोगजके' ति वचनेन समः पृथक्करणात् अर्थशब्दाण्णिजिति अर्थवेदयोरापुग्वक्तव्य'इति आपुगागमापत्तिरिति वाच्यम्, पृथक्करणस्य ज्ञापकसिद्धत्वेनाप्रवृत्तेः । पृथक्करणेऽपि 'आगमशास्त्रस्याऽनित्यत्व' मिति न्यायेन पुगागमाप्रवृत्तेः । एतेन - मनोरमाबोधिनीकाराभ्यां कृतं तदापादनमपास्तम् । यत्तु 'मनोरमायामागर्वादात्मनेपदिन' इति आत्मनेपदविधानादिति तादृशानां विधित्वसूचनमिति, तदसङ्गतम्, तादृशपदघटितानां बहूनां सद्भावेन, तेषामपाणिनीयत्वेन, तथाविधानामनार्षाणां विधायकत्वे गौरवादतिप्रसंगाच्च । धातुवृत्तौ च 'अथ क्रमप्राप्तान् चवर्गीयान्तानात्मनेपदिन आह' त्यस्य स्थाने, 'अथ चर्गीयान्ताः, तत्राऽनुदात्तेत एकविंशतिः, अथ द्विसप्ततिः परस्मैपदिनः' इति पठितम्, अनुदात्तेतः, आत्मनेपदिन इति चैकार्थकम् । परस्मैपदपदं तु आत्मनेपदनिमित्तहीनमित्यर्थकमिति वैयाकरणसमयः ।

किञ्च — कौमुद्यां हेतुमण्ण्यन्तप्रकरणान्ते 'प्रार्थयन्ति शयनोत्थितं प्रिया' इत्यत्र परस्मैपदमाशंक्य निवृत्तप्रेषणाद्धातोर्णिचि परस्मैपदं साध्वित्युक्तदिशा 'समर्थय'दिति परस्मैपदं सुवचमिति ।

अयंच दीक्षितः स्वमताचार्यमूर्धस्वेव प्रथममयं दूषणगणो निपतेदिति किञ्चिदप्यनालोच्यैव परमतं दूषयितुं प्रवृत्त इति ज्ञेयम । शाङ्करसूत्रभाष्ये विलक्षणत्वाधिकरणे (२-१-३) समर्थयन्तीति, तदीयगीताभाष्ये 'व्यामिश्रेणैव (३-२)कांक्षन्तः' (गी०-

४-१२)श्लोकव्याख्याने, 'प्रार्थयन्त' इति, तथाऽध्यासभाष्यव्याख्याने ऋजुविवरणे (१६३-पु.) समर्थयदिति, वार्तिके भाष्यव्याख्याने समर्थयतीति, 'न हि प्रमाणं प्रमाणान्तरेण बाध्यत' (बृ० ४-१) इति भाष्यावतरणग्रन्थे आनन्दगिरीये — 'ननु लौकिकं प्रमाणं लौकिकादविरुद्धमेव स्वार्थं समर्थयती' ति, बृहदारण्यक-शाङ्करभाष्ये (४-४-२२) प्रार्थयन्त इति, शाङ्करमतीयग्रन्थेषु प्रयोगा दृश्यन्ते। शास्त्रदीपिकाव्याख्याने सोमनाथीये (२०१-पु. २७ प.) समर्थयतीति, एवं सर्वतन्त्र-स्वतन्त्रेत्यादिविरुदालङ्कृतवेदान्तदेशिकाचार्यप्रणीतगीताभाष्यतात्पर्यचन्द्रिकायामवतरणे — (२-पु०) समर्थयन्निति, प्रार्थयन्तीति कविप्रयोगेषु च परस्मैपदप्रयोगो दृश्यते।

एवंच दुराग्रहेण विना नान्यन्निमित्तं पश्यामः भट्टोजेः परदूषणे प्रवृत्तौ।

केचित्तु— एवं परस्मैपदे प्रयोगबाहुल्यादस्याऽर्थधातोः आगर्वीयाद्बहिरेव पाठ उचित इति। अथवा—'आगर्वादात्मनेपदिन' इत्यनेन 'पदादय आत्मनेपदिन' इत्युक्तं भवति। एवंच - गणबोधितत्वात् 'गणकार्यमनित्य' मित्यात्मनेपदस्य प्रायिकत्वे परस्मैपदप्रयोगाणामुपपत्तिरिति मन्यन्ते॥

(कौ०) यदपि – सांख्याधिकरणे (२-२-१) सुधायां 'मे चैतन्यमिति वत्, अभ्युपगमेऽर्थाभावात्' (२-२-६) इति सूत्रतत्वप्रकाशिकायां 'मे माता वन्ध्येति च; प्रयोगोऽसाधुः, पदात्परत्वाभावेन मयादेशाऽप्राप्तेः, मम चैतन्यं, मम मातेति तु भाव्यमित्युक्तम्।

(कु०) अत्रोच्यते—'पदात्परयोर्युष्मदस्मदोस्तेमयावादेशौ भवत' इति 'तेमयावेकवचनस्ये' ति सूत्रार्थे वाक्यादौ विद्यमानयो नेति फलति, तस्य च नञ्घटितत्वेनाऽनित्यत्वेन क्वचिदप्रवृत्त्या प्रयोगद्वये मयादेशः सुवचः। अत एव - 'नृसिंहाश्रम ते ख्याति' रित्यत्र ते इति प्रयोगः साधुर्भवति, अन्यथा 'नृसिंहाश्रमेत्यस्यामन्त्रितत्वेन' आमन्त्रितं पूर्वमविद्यमानव' दित्यविद्यमानवद्भावेनाऽसत्त्वात्, पदात्परत्वाभावात् (वाक्यादिस्थत्वेन) तयादेशो न स्यात्। नन्वत्र 'ते' इति विभक्तिप्रतिरूपकमव्ययमिति चेत्, सुधादिप्रयोगेऽपि सममेतत्। अत एव — लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि, 'बाले ते कारणे उभे' इत्यादौ 'ते' इति साधु भवति,

अन्यथोभयत्र 'लक्ष्मीपते, बाले' इत्यनयोरामन्त्रितत्वादविद्यमानत्वेन पादादिस्थत्वात् 'ते' इत्यादेशाऽप्रवृत्तिः ।

परेतु—इदं द्वयं काचित्कवाक्यैकदेशानुवादः, 'भगःपद' मिति मनोरमास्थवाक्यवदिति न काचित्क्षतिरिति वदन्ति । सुधाद्युक्तसमाधिस्तु 'उपायस्योपायान्तरादूषकत्वादि' ति न्यायादिति ज्ञेयम् ॥

(कौ०) यदपि — 'आकाशोऽर्थान्तरत्वादिव्यपदेशा' (१ ४-४१)दिति सूत्रे निर्वहितृत्वमिति जयतीर्थप्रयोगे इडसाधुः 'एकाच उपदेश' इतीण्णिषेधादिति ।

(कु०) तदपि–कौमुद्यां 'छान्दसानामपि कचिल्लोकेपि प्रयोगः 'मासश्छन्दसी' ति वार्तिके छन्दोग्रहणसामर्थ्यादिति कैयटोक्तरीत्ये' ति स्वकृतव्यवस्थाविस्मरणमूलकम् ।

किञ्च — 'नञ्घटितमनित्य' मिति वैयाकरणानां न्यायं विस्मृत्योक्तम् । एतन्न्यायाश्रयणेनैव 'आकाशो हवै नाम नामरूपयोर्निर्वहिते' ति इट्प्रयोगस्य साधुता, छान्दसत्वाश्रयणं तु उपायान्तराऽभावस्थल एव । अत एव — न च कार्ये(४-३-१४) त्यत्र नामरूपयोर्निर्वहितुरिति ब्रह्मविद्याभरणकारस्य प्रयोगः साधुरिति वक्तुं शक्यम् तेन । अत एव— 'हा पितः कासि हे सुभ्रु' इति प्रयोगं 'नेयङुवङि' ति निषेधस्यानित्यत्वेन नदीत्वात्संबुद्धिह्रस्वप्रवृत्त्या साधुं मन्यन्ते वैयाकरणाः । न च — नायं न्यायो भाष्यारूढ इति वाच्यं — भाष्यानारूढयोगविभागादीनां भट्टोजिनागेशादिभिराश्रयणेन स्वाभिमतप्रयोगसाधुत्वकल्पनवत्, भाष्याऽविरोधात् एतन्न्यायाश्रयणेन साधुत्वकल्पनस्य युक्तत्वात् । न्यायस्य प्राचीनसंमतत्वाच्च ॥

केचित्तु—असाधुरेवायं सुभ्रु इति मन्यन्ते । अन्येतु — रामवाक्यानुवादोऽयं रसपोषकः काव्यस्य, अतोऽदोषः कवेरिति । इतरे पुनः — 'ऊकारादप्यूङ्' इति वामनसूत्रेण सुभ्रूशब्दादूङि तदन्तभ्रूत्वाभावेनोवङोऽभावेन नदीत्वनिषेधाऽप्रवृत्त्या सम्बुद्धिह्रस्वत्वे साधुरयमिति वदन्तीत्येतदन्यत् ॥

(कौ०) यदपि कौस्तुभे — 'अन्यत्राभावाच्च न तृणादिवत्' (१-४-४१) इति सूत्रानुव्याख्याने 'नियामयति नित्यं च नर्तै त्वदिति श्रुते' रिति श्लोके नियामयतीति दीर्घः प्रामादिकः, यमोऽमन्तत्वेन मित्त्वात् 'मितां ह्रस्व' इति ह्रस्वे नियमयतीति

भाव्यमित्यवदत्। (कु०) इदमपि—कौमुद्यां घटादौ स्वकृतामन्यन्त्रान्यैश्च कृतां व्यवस्थां विस्मृत्य अनालोच्यैव वेति सर्वे विदाङ्कुर्वन्तु । तथाहि – अयं ग्रन्थकृत् आयामयतीत्यस्य साधुत्वं 'यमोऽपरिवेषणे' इति घटाद्यन्तर्गणसूत्रे नेत्यनुवृत्त्या परिवेषणभिन्नेऽर्थे यमो मित्वं नेति व्याख्यानेन समर्थितवान् । तेनैवोपायेन अयमपि साधुर्भवतीति शक्यं वक्तुम्, परिवेषणभिन्नत्वान्नियमनस्य । यद्वा—'रजो विश्रामयन् राज्ञा' मिति प्रयोगे दीर्घस्य साधुत्वाय 'मितां ह्रस्व'इत्यत्र, वेत्यनुवृत्त्या ह्रस्वस्य वैकल्पिकत्वमवोचत्, अनेनाप्युपायेन नियामयतीत्यत्र दीर्घः साधुः । एवंच – दीर्घः प्रामादिक इत्युक्तिरेव प्रमादिकी ॥

(कौ०) यच्चोक्तं कौस्तुभे — 'महद्दीर्घवदिति सूत्रे षष्ठ्यर्थे वतिः, विभक्तिविपरिणामेन सकाशादित्यध्याहारेण वा, तस्मादिति भाष्यकारेणोक्तमिति सुधायामुक्त' मिति सुधाग्रन्थमनूद्य, तत्र षष्ठ्यर्थे इति तुच्छम्, इवार्थे षष्ठ्यन्ताद्विधानात् । विभक्तिविपरिणामेति सुतरां तुच्छं, यथाश्रुतार्थस्य चारितार्थ्यं विना तदयोगात् । अन्यथाऽतिप्रसङ्गात्, सकाशादित्यध्याहारस्त्वतितुच्छः, असामर्थ्येन तद्धितायोगात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकताव्युत्पत्तिभङ्गप्रसङ्गाच्चे' ति ॥

(कु०) एतच्च — बहुषु पूर्वजन्मसु सामाचरितदुष्कर्मपरीपाकसञ्जातसारस्वतशापजनिताऽव्युत्पत्तिदोषकलुषितचेतसः सुधाक्षरार्थापरिज्ञाननिबन्धनं प्रलपनम् । सुधापङ्क्त्यर्थस्त्वयम् – महद्दीर्घवदित्यत्र षष्ठ्यर्थे वर्तमानात् महद्दीर्घशब्दात् इवार्थे वतिः, ततश्च महच्च दीर्घश्चेति द्वन्द्वे तयोरिवेति विग्रह इति तद्भावः । दार्ष्टान्तिके पञ्चमीदर्शनात्, विशिष्टवाक्यार्थवर्णनावसरे महद्दीर्घादिति विपरिणामं, षष्ठ्यन्तस्यैव तत्सकाशादित्यर्थकत्वं वाऽभ्युपेत्य विशिष्टार्थो वर्णनीय इति बोद्धॄणां सूचनाय विपरिणामादिकमभ्यधुः श्रीमज्जयार्याः । एतेन – 'षष्ठ्यर्थे वतिरित्यादि भङ्गप्रसङ्गाच्चे' त्यन्तं सर्वं स्वाऽव्युत्पत्तिविलास एव, षष्ठ्यर्थे वतिर्भवतीति तात्पर्याभावात् ॥

(कौ०) 'न वियदधिकरणे—पञ्चमाऽहंकृतिर्मते' त्यनुव्याख्याने डटष्टित्त्वात् ङीपा भाव्यमित्याशयेन टाबसाधुरित्याह। (कु०) अत्र वदामः—भावप्रधानात्पञ्चमशब्दात् 'अर्शआदिभ्योऽजिति मत्वर्थेऽचि 'यस्येति चे'ति प्रकृत्यकारलोपे टित्संबन्ध्यकारान्तत्वात्समुदायस्य, ङीपोऽप्राप्तौ टाप् सुलभ इति । अर्शआदिः आकृतिगणः ॥

(कौ०) 'अनुबंधादिभ्य'(३-३)इति सूत्रीयाऽनुव्याख्याने 'मरेत्याक्षेपपूर्वक' मित्यत्र 'मरे' त्यपशब्द इत्यभणत् ।

(कु०) इदमपि 'मरे' ति प्रकृत्यन्तरमिति सुधोक्तसमाधानवाक्यमपश्यन्, तदर्थ-मजानन्वा वैयाकरणमर्यादाविरोधं, स्वोक्तिविरोधं चानालोचयन् अयमपशब्द इत्यवदत् । सुधार्थस्तु — मृङ्समानार्थो मरेति धात्वन्तरस्य भ्वादेराकृतिगणत्वात् दशगणीपाठस्य बाहुलकत्वाद्वा भ्वादौ पाठं स्वीकृत्य ततः शपि साधुरयं शब्दः ।

'राजपुत्र चिरं जीव मा जीव ऋषिपुत्रक ।
जीव वा मर वा साधो व्याध मा जीव मा मर ॥'

इति प्रयोगश्च सिध्यतीति । एतेन — 'शदेश्शित' इत्याद्युत्तरो ग्रन्थः प्रतिक्षिप्तः । शबनुपपत्तिश्च पराहता । इदमुपायद्वयमन्यदीयप्रयोगाणां साधुत्वसंपादनायाऽऽश्रितमेव सर्वैः । अन्येपि मादृशाः शास्त्रनिष्ठितधियः सन्ति स्युर्वेत्यालोच्यैव भाषितव्यम् बुद्धि-मता, नतु दुराग्रहेण । भ्वादिराकृतिगणः, अर्थनिर्देशः प्रायिक आधुनिकश्चेति प्रवादो वैयाकरणानामिति प्रसिद्धो विदुषां गोष्ठ्याम् । अत एव - यथाप्रयोगं धातुस्वरूपमर्थश्च कल्प्यते प्रयोगशरणैः कविलोकैः ॥

(कौ०) 'तदधिगमे' (४ १-८ अ०)तिसूत्रे 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' (छा० १-१) इत्यत्र नाऽऽतिशायिनिकतरप्, अपितु स्वार्थिकस्तरबिति मीमांसकमतमुपन्यस्य स्वार्थिकतरप् साधितो भट्टोजिना ।

(कु०) विद्यासंयुक्तं कर्म, विद्याविहीनात्कर्मणो विशिष्टं, विद्वानिव ब्राह्मणो विद्याविहीनात्, वीर्यवत्तरमिति शङ्कराचार्यैरेव व्याख्यातत्वेन तद्विरोधादुपेक्ष्यः सः । किञ्च—स्वार्थिकतरप् सिद्धिप्रकारश्च महाभाष्यानुक्तः । कैयटस्तु चिन्त्यः । 'अल्पा-च्तर 'मित्यत्रापि आतिशायनिक एवेति भाष्यम् । स्पष्टमित्थं शेखरादौ ॥

(कौ०) 'समनाचाऽमृत्युपक्रमादमृतत्वं चाऽनुपोष्ये' (४-२)ति सूत्रे 'समो ना परमपुरुषो यस्याः=समना' इत्यत्र 'नद्यृतश्चे'ति कपा भाव्यम्, स च नित्य इति यदुक्तम् ।

(कु०) तदतितुच्छम् — 'ऋतश्छन्दसी' ति निषेधादत्र न कप्, हता

वत्सूत्राणि भवन्ती 'ति महाभाष्यकाराणां सूक्तितो बादरायणसूत्राणां छन्दस्तुल्यत्वात् । अत्र, 'पाणिनीयसूत्राणामेवेति' कैयटोक्तिस्तु चिन्त्या, गृह्यसूत्राणामपि छन्दस्तुल्यत्वाभ्युपगमात् । 'ज्येष्ठ्या च शल्ये' ति गृह्यमित्यस्य व्याख्यानमनोरमादौ स्पष्टमिदम् ॥

इति ईक्षत्यधिकरणे शब्ददोषोद्धारः ।

---

## ( आनन्दमयाधिकरणविचारः )

ॐ आनन्दमयोऽभ्यासात् ॐ (६)

(कौ०) अध्यायशेषस्य प्रवृत्तिं पर इत्थमाह—'विष्णोःशास्त्रगम्यत्वे समन्वयो हेतुतयोक्तः, स चोपक्रमादितात्पर्यलिङ्गरूपः । तद्यावत्तत्तद्वाक्यविशेषानुदाहृत्य पूर्वोत्तरपक्षप्रथनेन विष्णोरेवोपक्रमादिति न्यायैर्न स्थाप्यते, तावत्समन्वयाऽसिध्द्या विष्णोः शास्त्रगम्यतापि न सिध्यति । अन्यथा शैवा अपि शिवपरत्वं समन्वयादित्युपन्यासमात्रेण कथं न ब्रूयुः । अतः समन्वयसिध्द्यर्थमध्यायशेष आरभ्यत इति – अधिकरणावतरणग्रन्थानुवादः ।

(कु०) अत्र ब्रूमः—'तमेव समन्वयं प्रकटयति आनन्दमयोऽभ्यासा' दित्यादिना समस्तेनाऽध्यायेन प्रायेणे'ति भाष्यम्, 'अथ ब्रह्मस्वरूपनिरूपणेऽनवशेषात्किमध्यायशेषेणेत्यतस्तत्कृत्यमाह—तमेवेति ॥ कृत्यान्तराभावेऽपि 'तत्तुसमन्वया' दित्युक्तमेवोपक्रमाद्यन्वयात् सम्यङ्निरूपणं शास्त्रीयशब्दानां प्रतिवाक्यग्रहणेन प्रकटयत्यनेनाऽध्यायेन सूत्रकारः, अन्यथा प्रतिज्ञामात्रस्यासाधकत्वेनाऽन्यदेव समन्वयादित्यपि वक्तुं शक्यत्वादिति भाव' इति टीका ।

अत्र— अयं तावदिदं प्रष्टव्यः, किं भवानवतरणग्रन्थं शब्दतोऽनुवदति, अथाऽर्थतः । नाद्यः, भाष्यटीकयोरीदृशानुपूर्व्या अदर्शनात् । न द्वितीयोपि युज्यते, तस्य ग्रन्थस्य साध्यसाधकभावेऽतात्पर्यात् । किं तूभयत्र प्रकटयतीति पदप्रयोगदर्शनेन तस्य च प्रकाशयति प्रपञ्चयतीत्यर्थेनोक्तसमन्वयस्याध्यायशेषस्य च प्रपंच्यप्रपञ्चकभावे तात्पर्यात् । प्रपञ्चनं च विशदीकरणं विवरणरूपं न हेतुः, 'प्रपञ्चार्थमिद 'मित्यादावेवमेवार्थवर्णनादभियुक्तैः ।

(कौ०) यदुक्तमुपरितनेषु सर्वेष्वप्यधिकरणेषु विष्णौ समन्वयप्रपञ्चनरूप-सिद्धान्तस्तावदसङ्गतः, सृष्ट्यादिवाक्यप्रतिपाद्यत्वं विष्णोर्न संभवतीति पञ्चमाधिकरणखण्डन एवोक्तत्वादिति । (कु) इदमपि निराकृतमस्माभिः श्रुतिस्मृतीनां सहेतुकं विष्णुपरत्वव्यवस्थापनेन ॥

(कौ०) यच्चोक्तं — गुणाः सर्वे इत्याद्यनपेक्षत्वाच्चेत्यन्तम् ।

(कु०) तदप्यतितुच्छम्—गुणनिरूपणं तावत् सर्वं 'ध्यानयोपासनाय चे'ति भगवान् सूत्रकार एवाह 'आध्यानाय, (३-३-१४) 'बुध्यर्थः पादवत्' (३-२) इति । भवदीयभाष्यकारश्च सूत्रमित्थमेव व्याख्यातवान् । गुणाश्च प्रतिपादिताः श्रुतिपुराणादिषु भगवतो बहवः, सूत्रकृता च सूत्रेषु, उक्तगुणविशिष्टतया हि भगवांनुपास्य इति तद्भावः । विशिष्टबुद्धिनियामकस्तु संयोगः समवायो वा अन्यत्रेव नात्र संभवति, द्रव्याणामेव संयोगो न तु गुणद्रव्ययोः । समवायश्च सूत्रकृतैव निराकृतः 'समवायाभ्युपगमा'(२-२-१५) दिति सूत्रेण । अतश्शास्त्रेषु कृतगुणगुणिव्यवहारनिर्वाहाय तादात्म्यापरपर्यायस्वरूपाख्यसंबन्ध आश्रयणीयः । स च, गुणगुणिनोर्धर्मधर्मिणोर्भेदाभावेपि विशिष्टबुद्धिनियामकः । तत्र तादात्म्यमेव तथाविधं संबन्धं मन्यन्ते । गुणादिकमेव तादृशसंबन्धरूपमपीति परे । उक्तंच मञ्जूषायां (११९ · पुटे) — एतेन अयुतसिद्धानां स्वरूमेव संबन्धः, स्वरूपविशेषे संबन्धत्वमपि धर्मः प्रत्येकरूपेण, संबन्धिता च प्रतीत्यनुसारात्....विशिष्टबुद्धि-नियामकत्वं चेति ।

ब्रह्म तद्धर्मयोर्भेददर्शनस्य अनर्थफलप्रदर्शनेन तयोरपृथक्भाव उक्तः काठके । तथाहि — 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवाऽनुविधावती' (का० ४-१४) ति । अयमर्थः — वल्लीयं भगवतो विविधमहिमातिशयप्रतिपादनपरा । परमात्मा चतुर्मुखादिप्राणिनां स्रष्टा नियन्ता सर्वान्तर्यामी सर्वत्र विद्यमान एकप्रकार एव, न भगवद्रूपाणां किञ्चिदपि वैलक्षण्यमिति पूर्वमन्त्रैः प्रतिपाद्य ब्रह्मणस्तद्धर्माणां च न परस्परं भेदः, भेदज्ञानिनामनर्थ इति । भेदो नास्ति धर्माणां ब्रह्मणा सह, यदि दुरुपदेशादिनाऽविद्यमानमपि भेदं पश्यन् नश्यतीत्यभिप्रायः । मन्त्रे—तानिति पञ्चम्यर्थे द्वितीया छान्दसी । भेद-

दर्शनादनु = तदुत्तरमित्यर्थः । एवं = दुर्गे वृष्टजलवत्, विधावति = विनश्यतीति भावः । श्रुत्यर्थे विवादस्तु ब्रह्मकल्पशतैरपि न विरमेत् । ततश्च श्रुतिसूत्रप्रामाण्यवादिभिः ब्रह्मतद्धर्माणां धर्मिधर्मभावे श्रौते स्मार्ते च, सौत्रे च धर्मतद्वतोरभेदे प्रामाणिकत्वधिया, विशिष्टबुद्धिनियामकत्वेनोक्तसंबन्धेन च परमेश्वर एव जगत्कर्तृत्वादिविशिष्ट इति सौत्रः सिद्धान्तो निर्दुष्ट इति शास्त्रार्थनिश्चयेन, विष्णुरनन्तकल्याणगुणपूर्ण इत्युपासीनैर्भवितव्यम् । एतेन — सिद्धान्तानां 'परस्परव्याघातस्योद्भटतया प्रतिपादनाऽनपेक्षत्वाच्चे' ति यदुक्तम्, तदपि श्रुतिसूत्रस्वाचार्यभाष्योक्तार्थापरिज्ञानमूलकम् । उक्तरीत्यनङ्गीकारे नित्यत्वादिविशिष्टब्रह्मोपस्थितिर्ब्रह्मपदेनेति तदीयानां, 'सुखविशिष्टाभिधानादेव चे' (१-२-१५) ति सूत्रकृतश्च व्यवहारोऽसङ्गतः स्यात् । नित्यबुद्धमुक्तत्वादीनां स्वरूपानतिरेकादुक्तप्रकारस्यावश्याश्रयणीयत्वात् । भवादृशानामेव दोषः प्रतिभायात् । नतु व्युत्पन्नलोकानां प्रामाणिकशिरोमणीनाम् ।

सर्वे दोषा आत्मैकत्ववादिनो भवत एव मते । त्वन्मते आत्मातिरिक्तवस्तुसामान्याभावेन अविद्यातत्संबन्धानामप्यभावात् शुद्धात्मनि अविद्यासंबन्धस्यैव दुर्वचतया आत्मभेदाद्यसिध्द्या शास्त्रस्य अधिकार्याद्यभावप्रसंगेन नृत्येयुर्गगनरङ्गे ॥

(कौ०) यदुक्तं — तत्तद्वाक्यानां तत्तदधिकरणपूर्वपक्षोपपादितदेवतान्तरत्वस्य सिद्धान्तिना क्रियमाणनिराकरणमत्यनुपपन्नं, विष्णुपराणामपि देवतान्तरपरत्वस्य त्वन्मते दुर्वारत्वात्, शिव एव सावकाशतायाः सुवचत्वाच्चेत्यन्तम् ।

(कु०) अत्र वदामः—देवतान्तरनिराकरणं सिद्धान्तिना क्रियमाणमनुपपन्नमित्येतत्तु—अनेकार्थत्वेपि दोषाऽनवकाशाय आचार्यकृतव्यवस्थाऽज्ञानमूलकम् । इदं हि अस्मदाचार्याणां सिद्धान्तभाषणम् — 'श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता, यत्र अन्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियम' इति—'एतेन शिष्टा अपरिग्रहा अपि व्याख्याता' (२-१-१२) इति सूत्रभाष्ये । अयमाशयः—ब्रह्मात्मादिपदानां नानार्थकत्वेऽपि 'तद्विजिज्ञासस्व तद्ब्रह्म, (तै० उ० ३-१) आत्मन आकाशः संभूत' (तै० उ० २-१)इत्यादिषु श्रूयमाणब्रह्मादिपदानि परमात्मपराणि, नान्यपराणि, अन्येषां शिवादीनामादिकारणतायाः

शास्त्रेष्वनुक्तेः । 'ब्रह्मविद् ब्रह्मैव भवती' त्यादौ फलवाक्ये च श्रूयमाणं ब्रह्मपदद्वयमपि परमात्मपरमेव, परब्रह्मविदः परब्रह्मप्राप्तिलक्षणमोक्षाभिधानात् । जीवस्य जीवान्तरप्राप्तेरमोक्षत्वात् । ब्रह्मैव सन् ब्रह्माप्ये' तीत्यत्राद्यं ब्रह्मपदं, 'तस्मा-देतद्ब्रह्म नामरूपमन्नं च जायते' इत्यादौ ब्रह्मपदं च, न परमात्मपरम् । क्वापि परमेश्वरस्यान्यप्राप्तिरूपफलाश्रवणात्, 'नात्माश्रुतेर्नित्यत्वा' (२-३)दिति तस्योत्पत्ति-निषेधाच्च । अवतारास्तु अभिव्यक्तिरूपा इति । एवञ्च कारणोपासनाफलपरवेदवाक्यानां विष्णुपरत्वमेव नान्यपरत्वमिति न कश्चिद्विरोधः । एतेनैवेदमपि निरस्तम्—'तत्रतत्रैकार्थ्यं त्यजतस्तत्र विष्णुलिङ्गैर्विष्णुपरत्वमात्रमेव स्यात्, नतु शिवादिपरत्वाऽभावोऽपी' ति ।

किञ्च यदुक्तम्— सर्वान्तर्यामित्वश्रीपतित्वाऽदृश्यत्वादिविष्णुलिङ्गानां तद-साधारणत्वस्य श्रुतितदनुसारिभारतादिस्मृतिषु निरूपितत्वेन तेषामेव देवतान्तर-लिङ्गापेक्षया प्राबल्यमिति अस्मदाचार्याभिप्रायात्, प्राबल्यदौर्बल्यविचारो मुधैवेत्युक्ति रविचारितरमणीया । विष्ण्वाद्यन्यतमस्य कारणत्वे प्रसक्ते असाधारणलिङ्गबलाद्विष्णोः कारणत्वादौ सिद्धान्तिते परिसंख्यान्यायेन शिवादेस्तदभावसिद्धेः । क्वाप्यधिकरणे साधारणलिङ्गैः सिद्धान्तो न कृतोऽस्मदाचार्यैः । अतः—किञ्चे'त्यादिना तथानु-वादो ग्रन्थाऽनवलोकनमूलकः । ब्रह्मलिङ्गानां शिवेऽपि संभादित्यादि तु मन्दमति-प्रियम्, एकव्यक्तिनिष्ठस्य धर्मस्यान्यत्र वृत्त्योगात् । परमेश्वरधर्माणां तदतिरिक्त-वस्तुन्यसंभवात् । इदंच सर्वैरंगीकार्यम् – अन्यथा हि ब्रह्मलक्षणमतिव्याप्तं स्यात् । लक्षणोक्तिश्च विफला स्यात् । उक्तंच आचार्यत्वेनाभिमतभवदाचार्यैः, प्रथमस्य द्वितीये अन्तरादिनयेषु - 'तस्मात्प्रकृतस्य ब्रह्मणोऽक्षिस्थानतां, तस्माद्भेदव्यपदेशा-त्परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते, 'न च ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्य' मिति जीवमुख्येति सूत्रे । अतः शिवादेः कारणत्वाप्रसक्तिः, तस्य कार्य-कोटिप्रविष्टत्वमेव । भारतादौ तेषां तथैव प्रतिपादनात्; शिवादिकर्तृत्वस्य बहुसंम-तत्वाच्च । त्वदीयैराचार्यैस्त्वदभिमतदेवतान्तरकर्तृत्वबोधकशिवादिपदघटितमेकमपि वचनं भाष्यत्रये नोदाहृतम् । अतो 'ब्रह्मलिङ्गानामित्यादि' भट्टोजिवचनं न समञ्जसम् ॥

(कौ०) यच्चोक्तं अद्यापि विष्णौ समन्वयाऽसिद्धेः, प्रथमाध्यायशेषस्य समन्वयसिध्यर्थत्वेनेत्युक्तत्वादिति ।

(कु०) एतदपि अधिकरणारंभ एव निरस्तम् । 'अधिकरणीयावतरणग्रन्थतात्पर्यानभिज्ञानमूलमेत' दित्यादिना । एतेन — उपक्रान्तसाधनीयार्थविस्मरणेन तस्यैव हेतुकरणमत्यन्तमयुक्तमित्युक्तिः पराहता । पूर्वोत्तरयोर्ग्रन्थयोः प्रपञ्च्यप्रपञ्चकभाव एवेत्यभिधानात् । बालनामपि स्पष्टमिदम् । किंच—त्वयेति युष्मच्छब्दप्रयोगः, आरब्धत्वादिति पदप्रयोगश्च भवतोऽव्युत्पन्नमतित्वं प्रकाशयति, यतो बादरायणो त्वध्यायशेषमकरोन्न श्रीमध्वाचार्याः । इदंतु विदितं त्रिजगत्याम् ॥

(कौ०) यदप्युक्तं—'स्यादेतत्, ब्रह्मशब्दो विष्णुपर एव, उक्तं ह्यनुव्याख्याने —

स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् ।
स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥

आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ।
मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ॥

अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत्' ॥ इति ।

टीकायां तु - 'स वष्णुराह हि, तं ब्रह्मेत्याचक्षत' इति निरन्तरसूत्रद्वयेत्यादिवर्णितमिति चे' दित्यन्तेन शङ्कामुद्भाव्य, न त्वत्कल्पितदेवशास्त्रस्य तदन्तर्गतसूत्रद्वयस्य च शिवहर्योरभेदपरतयाऽपि सुयोजत्वात् । श्वेताश्वतरानुरोधेन शिवो ब्रह्मेत्यस्य चतुर्थसूत्र एवोपपादितत्वादिति ।

(कु०) इदमसङ्गतम् - श्रीमध्वाचार्या वादकथाप्रसंगेन भवन्तं भवदीयांश्चोद्दिश्य नैवमभाषन्त, अपितु - अन्तरङ्गच्छात्रगणाननुजिघृक्षवस्तेषां निष्कल्मषचेतस्त्वं ज्ञात्वा वस्तुस्थितिमवोचन् । भवतोऽत्र कुत एतावानेष आग्रहः । क्षणं शान्तो भव । अस्मदाचार्यास्तु - ब्रह्मशब्दस्य विष्णुपरत्वे किं मानमिति पृच्छायां श्रुतिपुराणेतिहासादिवचनोदाहरणेन विष्णुपरत्वं व्यवस्थाप्यान्ते गोप्यमर्थमुपादिशन् शुद्धचेतोभ्योऽन्तेवासिजनेभ्यः । द्वैतवादिनो हि श्रीमध्वाचार्यादय इति सुप्रसिद्धं चतुर्दशभुवनेषु । तन्न्यायेन तद्दूषणं कुर्म इति तु संकल्पस्तवाद्वैतिनः । अतः कथं भवान् भवदीयमतप्रक्रियमास्थाय तन्मातं दूषयतीति विभावय । श्वेताश्वतरसंदर्भश्च न शैवः, शिवस्तु न ब्रह्म, भवदाचार्यास्तु जगत्कारणं ब्रह्म विष्णुरेवेति मन्यन्त

इति चाऽधस्तादसकृन्निवेदितं चतुर्थे च सूत्रे विस्तरेण । मुग्धोऽसि त्वं कस्यचिद्वचनं श्रुत्वा । न कश्चित्तवाऽस्ति लोके संशयस्य छेत्ता । अतो यद्यस्ति चेन्निश्चयो भवतो, भवदाचार्योऽमुक्तो जीवन् यत्र क्वापि भवेदिति, तदीयभाष्यमादाय आचार्यपादावुपसङ्गृह्य, तत्पुरतो निधाय तदीयं ग्रन्थं 'आदिकर्ता नारायणः, अन्तर्यामी नारायणः, ईश्वरः ईशनशीलो नारायणः' मम विष्णोः परं धाम (गी० भा०) इति व्यलिखन् भवन्तः कुतः कारणात् । किंच – स्मृत्यधिकरणे 'अतश्चे' ति वचनं नारायणपदघटितकारणबोधकमुदाहरन् श्रीमन्तः कुतः कारणादिति पृच्छ ॥

यच्चात्र - स्वकल्पितेत्यादिसोपहासवचनम् । तच्च शांकरगीताभाष्याद्यनवलोकननिबन्धनम् । तथाहि — श्रीकृष्णो भगवान् पार्थोपदेशमुखेन कर्मकाण्डस्य सर्वस्य वैष्णवत्वं तत्तद्देवतान्तर्यामी नारायणो देवतेति —

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्वेनाऽतश्च्यवन्ति ते ॥ (गी. ९-२४)

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥

इत्यादिभिर्निरनैषीत् । स्पष्टप्रतिपत्तये व्याख्यानानि संगृह्यन्ते ॥ अस्यायं पूर्वश्लोकः—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ ९-२३ ॥ इति ।

एषु श्लोकेषु अस्मच्छब्दा आदिकर्तृनारायणावतारकृष्णपराः । येऽप्यन्यदेवताभक्तास्सन्तो यजन्ते आस्तिक्यबुद्ध्याऽनुगताः, तेऽपि मामेव कौन्तेय यजन्ति, अथापि अविधिपूर्वकमज्ञानपूर्वं यजन्त इत्यर्थः ॥ २३ ॥

(शं० भा०) कस्मात्तेऽविधिपूर्वं यजन्त इत्युच्यते - यस्मात्—अहं हीति ॥

अहं हि सर्वयज्ञानां श्रौतस्मार्तानां यज्ञानां देवतात्वेन भोक्ता च, प्रभुरेव च, मत्स्वामिको हि यज्ञः 'अधियज्ञोऽहमेवात्रे' (गी० ८-४) ति ह्युक्तम् । तथा नतु मामभिजानन्ति तत्त्वेन यथावत्, अतश्चाऽविधिपूर्वमिष्ट्वा यागफलात् च्यवन्ति= प्रच्यवन्ते त' इति (२४) 'ये तु सर्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ति

ते तु नावर्तन्त इति श्रीधरः । 'ये तु तत्तद्देवतासु भगवन्तमेव सर्वान्तर्यामिणं पश्यन्तो यजन्ते, ते भगवदर्पितकर्माणस्तत्तद्विद्यासहितकर्मवशादर्चिरादिमार्गेण ब्रह्मलोकं गत्वा तत्रोत्पन्नसम्यग्दर्शनास्तद्भोगान्ते मुच्यन्त इति विवेक इति गूढार्थदीपिका ।

(शां० भा०) येऽप्यन्यदेवताभक्तिमत्त्वेनाऽविधिपूर्वकं यजन्ते तेषामपि यागफलमवश्यं भावि ; कथम् — यान्तीति ॥ देवव्रताः = देवेषु व्रतं = नियमो, भक्तिश्च येषां ते देवव्रताः, देवान् यान्ति, पितॄन् = अग्निष्वात्तादीन् यान्ति, पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः, भूतानि = विनायकमातृगणचतुर्भगिन्यादीनि, यान्ति, भूतेज्या = भूतपूजकाः, यान्ति मद्याजिनः = मद्यजनशीला वैष्णवा मामेव । समानेप्यायासे मामेव न भजन्तेऽज्ञानात्, तेन तेऽल्पफलभाजो भवन्तीत्यर्थः इति । 'मामेव यान्ति, परमानन्दरूपं नारायणं यान्ती' ति श्रीधरीये ।

'समानेप्यायासे भगवन्तमन्तर्यामिणमनन्तफलदमनाराध्य देवतान्तरमाराध्याऽन्तवत्फलं यान्तीत्यहो दुर्दैवमज्ञानामित्यभिप्राय' इति (गूढार्थदीपिका) ।

श्रीरामानुजाचार्यास्तु - 'तैरेव यज्ञैर्देवपितृभूतशरीरकं परमात्मानं भगवन्तं वासुदेवं यजामह' इति मां यजन्ते, ते मद्याजिनो मामेव यान्ती' त्यर्थं वर्णयन्ति ।

'कारणमाहाऽविधिपूर्वकत्व' इति 'अहं हि सर्वयज्ञाना' मिति श्लोकावतरणग्रन्थेनैव अन्तर्यामिभगवद्यजनत्वेन संकल्पपूर्वं देवतान्तरं यजेतेति शास्त्रार्थः । अयमेव वैष्णवयाग इति च सूचितं श्रीमध्वाचार्यैः । स्पष्टीकृतश्च विवृतौ । ततश्च— समग्रं कर्मकाण्डं वैष्णवमेवेति भगवदादीनामभिप्रायस्स्पष्टः ।

अयमत्र निष्कर्षः — देवतायायजूका द्विविधाः, ज्ञानिनो ऽज्ञानिनश्चेति, तत्र ज्ञानिनः सर्वत्र तत्तद्देवतान्तर्यामिभगवन्तं यजामह इति संकल्पवन्त आद्याः, श्रुताग्न्यादिदेवता एव यजामह इति कृतसंकल्पा द्वितीयाः । ज्ञानिनः सर्वं कर्मपरवाक्यं देवतान्तर्यामिभगवत्परतया योजयन्ति । अज्ञानिनस्तावत् देवतान्तरपरतयैव । तत्र तत्र श्रूयमाणानि च विशेषणानि तेते स्वस्वयोग्यतानुसारेण भगवत्परतयाऽन्यपरतया नयन्ति, ततश्च कर्मपरवाक्यजातमधिकारिभेदेनोभयार्थकम् । भगवद्याजिनस्तु वैष्णवाः 'मद्याजिनो मद्यजनशीला वैष्णवा' इति शांकरोक्तेः । अन्येषामप्याचार्याणां

नात्र विसंवादः। तत्र वैष्णवाः शास्त्रोक्तमार्गेण परमात्मानं प्राप्य अव्ययेऽपुनरावृत्तिस्थाने नित्यमनुभवन्ति परममानन्दम्। अज्ञानिनस्तु तत्तद्देवतामात्रयाजिनः,

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥ ९-२०॥

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥ २१॥

इत्युक्तरीत्या पुनरावृत्तिस्थानं स्वर्गं प्राप्य, यावत्पुण्यक्षयं तत्र स्थित्वा ततः प्रच्यवमाना गतागतं प्राप्नुवन्ति। इदमेव तेषां प्रच्यवनमल्पफलमित्युच्यते।

अतः कृत्स्नोपि कर्मकाण्डोऽन्तर्यामिभगवत्परदेवतान्तरपरोपीति अनेकार्थको वेद इत्यकामेनापि सर्वैरभ्युपेयम्, भट्टोजिस्तु अभ्युपैतु मा वा, तावता परेषां न किञ्चिदपि। स एव तु भगवता स्वाचार्यादिभिश्च कृतशास्त्रार्थनिर्णयं परित्यज्य वदन्न विश्वसनीयो भवति। ये त्वेवंविधं भगवन्निर्णयमविश्वस्यान्यथाऽनुतिष्ठन्ति, ते अनन्तफलदमन्तर्यामिणं भगवन्तमनाराध्य, देवतान्तराण्याराध्यान्तवत्फलं यान्ति, अहो अज्ञानां दुर्दैव' मिति मधुसूदनसरस्वती अनुतपति। उक्तं च भगवतैव गीतायां —

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तो ऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥ ३-३१॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः"॥ ३-३२॥ इति॥

अथापि यत्पादनखाऽवसृष्टं जगद्विरिञ्चोपहृताऽर्हणाम्भः।
सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः॥ भाग० १-१८-२१

इति भागवते मुकुन्दशब्दवाच्यो नारायण एवेति व्याख्यातः। एष च लक्ष्मीपतिरिति पूर्वश्लोकेन विवृतः। सेशम् = सशिवम्। विष्णुपादोदकं रुद्रादिसर्वं जगत्परिशोधयतीति भावः।

एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य।
हित्वेतरान्प्रार्थयतो विभूतिर्यस्यांघ्रिरेणुं जुषतेऽनभीप्सोः॥ २०॥ इति।

अत्र विभूतिः लक्ष्मीरिति श्रीधरीये। एतेन — 'हरिहरयोरभेदपरतयापि सुयोजत्वा' दित्युक्तिः (७४ पु.) परास्ता। किञ्च — शौनकः -

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः।
तावन्ति हरिनामानि कीर्तितानि न संशयः॥

इति ऋग्विधाने वदन् कृत्स्नस्य वेदस्य वैष्णवत्त्वमनेकार्थत्वं चानुमन्यते।

सायणोपि — 'तदिति वा एतस्य महतो भूतस्य नाम भवति, योऽस्यैतदेव नाम वेद, ब्रह्म भवति ब्रह्म भवती' (५-२) त्यैतरेयारण्यकान्तिमवाक्यम्, 'इतिवै = पूर्वोक्तनियमेनाऽधीतं, तत्=समस्तवेदवाक्यम्, एतस्य = समस्तवेदप्रतिपाद्यस्य, महतः = व्याप्तस्य, भूतस्य = नित्यसिद्धस्य, सदातनस्य भगवतः, नाम भवति, यः एतत्=सर्वो वेदः, एवमुक्तरीत्या, अस्य भगवतो नामेति वेद, स ब्रह्म भवति। 'सर्वे वेदा यत्पदमामनन्ती'ति वेदस्य सर्वस्य ब्रह्मप्रतिपादकत्वाद्ब्रह्मनामत्वं ध्येयमिति व्याचक्षाणः, समस्तवेदस्य भगन्नामपरत्वमभिप्रैति। कर्मपरतामविहायैवेदमिति मन्तव्यम्। अत्र ब्रह्म भवतीत्यस्य ब्रह्म प्राप्नोतीत्यर्थः तत्सदृशो भवतीत्यर्थो वा॥

किञ्च — स एव — 'य एतदुपयन्ति, ये चैनं प्राहुः, येभ्यश्चैनत्प्राहुः, ओं' इति यजुषि काठकान्ते श्रूयमाणं वाक्यं 'यदेतद्दर्शपूर्णमासादिसहस्रसंवत्सरान्तं कर्मजातमुक्तं, तस्य सर्वस्य वैकल्यपरिहारार्थत्वं पुरुषार्थपर्यवसनार्थत्वं च दर्शयितुं परतत्वप्रतिपादकं प्रणवमन्ते पठति — ओं इति॥ अतएव महर्षय आहुः —

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥
ब्रह्मार्पणं ब्रह्महवि र्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥ गी० ४-२४॥ इति -

विवृण्वानः कर्मजातस्य सर्वस्य पालकत्वरूपभोक्तृत्वं हरेरेवेत्यवोचत्। 'भुज = पालनाऽभ्यवहारयो' रिति धातुपाठात्। अहं हि सर्वयज्ञानां भोक्ते' त्यत्रोभयविधभोक्तृत्वं विवक्ष्यते। अत एवोक्तमृषिभिः—

प्रमादात्कुर्वतां कर्म प्रच्यवेताऽध्वरेषु यत्।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुति' रिति॥

इदं ज्ञेयं—स्मरणादिमात्रेण रक्षको हरिः, तैरेव क्रतुभिरिज्यश्च तस्मादवश्यं रक्षत्येव यज्ञं, फलं चाऽनन्तं ददातीत्यत्र किमु वक्तव्यमिति । एवंच— स्मरणादिना, तदर्पणेन वा, तस्यान्तर्यामितयाऽनुसन्धानेन वा, कर्मणां वैष्णवत्वं संपादनीयम् । अन्यथा कर्म निष्फलमिति भावः ।

किञ्च — 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि । ओं इत्येतत् ।। (का० १-२-१५) 'वेदैश्च सर्वैरहमेव वेद्य' (गी० १५-१६) इति कठोपनिषत् गीता च भगवतो नारायणस्य समस्ताम्नायप्रतिपाद्यतामाह, संकोचे कारणाभावात्कर्मकाण्ड-स्याप्युक्तरीत्या भगवद्विषयकता ज्ञेया । ततश्चाम्नायस्यानेकार्थतामन्तरा भगव-द्वचनादीनामनुपपत्तेः साऽभ्युपेयेति सिद्धम् । एतेन—कर्मकाण्डस्य ब्रह्मपरत्वकल्पनम्, अग्न्यादिमन्त्राणां तदुत्तमदेवतापरत्वयोजनं चासङ्गतमित्यभिधानं दुराग्रहमूलकम् ।

किञ्च—कल्पसूत्रकारा अपि एकं मन्त्रमनेकेषु कर्मसु विनियुञ्जाना अने-कार्थत्वं वेदस्याऽभिप्रयन्ति । तत्र बोधायनः — 'अद्भ्यः संभूतः पृथिव्यै रसाच्चे' त्युत्तरनारायणानुवाकं ब्रह्ममेधसंस्कारे प्रेतोपस्थाने विन्ययुङ्क्त । महाभाष्यकाराः — 'चत्वारि शृङ्गाः, चत्वारि वाक्परिमिता पदानि, उतत्वः पश्यन्, सक्तुमिवे' त्यादय ऋचः शब्दशास्त्राध्ययनफलपरतया योजयामासुः । यास्को निरुक्तकारः — 'ऋचो अक्षर' इति ऋचं त्रिधाऽयोजयत् । एता ऋचोऽन्यत्रान्यपरतया योजिताः । भगवान् बादरायणोपि — 'चत्वारि शृङ्गेति, चत्वारि वाक्' इति च ऋचं भगवत्परां मन्वानः भागवते तथार्थकश्लोकानररचत् ।

तथाच—भगवान्सूत्रकारः गीतायां भगवता श्रीकृष्णेन निर्णीतार्थकं सूत्रद्वयं विरच्य कर्मयोगिनां शास्त्रतत्त्वार्थं बुबोधयिषुः देवताकाण्डान्ते योजयामासेति स्थितम् । अतो युक्तं 'स्वयं भगवते' त्यादि श्रीमध्वाचार्यवचनमिति विदांकुर्वन्तु सूरयः । अतोऽत्र 'स्वत्कल्पिते' त्यादिप्रलपनं गीता-तद्भाष्यादिस्वाचार्यग्रन्थ - भागवततात्पर्या-ऽपरिज्ञानमूलकम् ।

ननु—नाद्यत्वे तत्र एतद्वचनद्वयं दृश्यत इति चेत्, शृणु—यद्यपि ब्रह्मवादि-मतसाधारणमिदं वचनद्वयं, तथापि - विष्णुशब्ददर्शनमात्रेण मतान्तरसाधकमिदमिति

मत्वा विष्णौ द्वेषाच्च कुतर्कपण्डितैस्तद्वचनद्वयं त्याजयित्वा लेखयन्ति, लिखन्ति; मुद्रापयन्ति चाद्यत्वे । एवमेव बहवो ग्रन्था मुद्राप्य प्रकाशिता वर्तन्तेऽधुना । अतएव—पाठभेदः कथाभेदः सर्गभेदोऽध्यायभेदश्च ग्रन्थेषु दृश्यते । सर्वेश्वरो देव एवाऽत्र प्रमाणमिति । विस्तृतमेतद्विमर्शनं श्रीव्यासपाणिनिभावनिर्णयेऽस्माभिः ।

'पत्युरसामञ्जस्या'(२·२)दिति सूत्रेण सूत्रकृतैव पशुपते रुद्रस्य जगत्कारणत्वनिषेधात् हरिहरयोरभेदात् शिवस्य कारणत्वशङ्कापि गळहस्तिता बोध्या ।

क्वचित्तु तस्य कारणत्वश्रवणं - अस्वातन्त्र्येणैव । स्वातन्त्र्येण विष्णुरेव जगत्कारणमिति अधस्तादुक्तमेव । अभेदविवक्षया ब्रह्मधर्माणामन्यत्र सद्भाववादो न युक्तः, ब्रह्माभेदेन तद्धर्माणामन्यत्र सत्ता तु वेदविदां न संमता, सूत्रकृतो 'भेदव्यपदेशा' दित्यादिसूत्ररचनाप्रयासवैफल्यप्रसंगात् ॥

(कौ०) यदत्र - 'तदिह सिद्धान्तबाधः, पूर्वपक्षस्य दुरुद्धरत्वं, विष्णुपरत्वे साध्ये ब्रह्मलिङ्गानां व्याप्यत्वाऽद्धिश्चे' ति दूषणत्रयमुत्तराधिकरणेषु प्रायेण योज्यम्, विशेषस्तु तत्रतत्र वक्ष्यत इति ।

(कु०) एतदपि पूर्वोक्तदूषणखण्डनेनैव दूषितप्रायमेव। अथापि किंचिद्वदामः-कौस्तुभवाक्ये तत्पदं पूर्वोक्तदूषणगणादित्यर्थकम् । इहेति मध्वभाष्यादावित्यर्थकम् ।

परमेश्वरे विष्णाववर्तमानं जगत्कर्तृत्वं देशान्तरादानीय न स्थाप्यते, किंतु स्वाभाविकं हि तत् 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे' (श्वे० ६-८) ति श्रुत्या ब्रह्मज्ञानादीनां स्वतस्सिद्धत्वोक्तेः । स्वाभाविकीति, शक्तिरित्यत्राप्यन्वेति । सा च शक्तिर्विविधविचित्रजगत्कर्तृत्वरूपा तदनुकूलं ज्ञानादीति श्रुत्यर्थः । अन्यत्स्पष्टम् । एतन्मंत्रार्थस्यैव पोषका 'न तस्य कश्चि' दित्याद्युत्तरमन्त्राः । अतो जगत्कर्तृत्वं विष्णुनिष्ठमिति हि सिद्धान्तो मध्वाचार्याणाम् । तस्य जगत्कर्तृत्वादेः पक्षे विष्णावयुतसिद्धतया सदा सत्त्वात् पक्षे साध्याभावरूपबाधो न संभवति । स्वभावसिद्धस्यैव कर्तृत्वादेः श्रुत्यादिभिः विष्णुनिष्ठत्वं ज्ञापितमाचार्यैरिति न प्रमाणबाधोऽपि शक्यो वक्तुम् ।

प्रमाणेषु च—विष्णोर्जगत्कारणत्वज्ञापकान्येव प्रमाणानि निरवकाशत्वादिना प्रबलानि, न त्वन्यकर्तृत्वपराणीति ' आदिकर्ता नारायण 'इत्यादिभवदीयाचार्यवचनजातेनैव सिद्धमिति परेषां वैष्णवानां नातिप्रयासस्तेषां प्राबल्यसाधने । त्वं तु न जानीषे भवदाचार्यवचनं, न विश्वसिषि च । अतएव हि त्वदीयभाष्यकारः, शिवहिरण्यगर्भयोर्जगत्कर्तृत्ववचनं नैकमपि लिखति स्म । अतः सिद्धान्तहेतोः शिवादावसंभवात्सुकरः पूर्वपक्षोद्धारः । व्याप्यत्वाऽसिद्धि 'रित्यपि न युक्तम् , अत्रायमुपाधिरित्यनुपन्यस्य वाङ्मात्रस्याप्रयोजकत्वात् । किञ्च — श्रुत्यादिसिद्धे ब्रह्मलिङ्गानां विष्णुनिष्ठत्वे, तत्साधकतदनुसार्यनुमाने चोपाध्युद्भावनं दुष्करं, साध्यव्यापकत्वभङ्गस्य सुवचत्वात् । अनुमानमात्रेण जगत्कर्तृत्वं साधयन्तं प्रति यद्यपि तदुद्भावनं शक्यं वक्तुम् , न तु श्रुतितदनुसारिस्मृतिभिर्हरेर्जगत्कर्तृतां प्रतिपादयतो मध्वाचार्यान् प्रति । जगत्कर्तृत्वं हरेरागमैकवेद्यमिति हि ब्रह्मवादिनां सर्वेषां सिद्धान्तः । तस्मात् असंगतमिदं भट्टोजिवचनमिति काप्यधिकरणे नेदं दूषणं लगतीति सुधियो विभावयन्तु ॥

एतेन — कौस्तुभे — ' इति दूषणत्रयमुत्तराधिकरणेषु प्रायेण योज्य ' मित्यत्रोक्तं, ' अत्र दोषत्रयं तूक्तमेव, सामान्यदूषणमुक्त ' मित्यादि वक्ष्यमाणं च प्रतिक्षिप्तं वेदितव्यम् । शब्दप्रमाणकेऽर्थे बाधादिदोषानवकाश इति निरूपितत्वात् ॥

(कौ०) ब्रह्मशब्दस्य विष्णावेव विद्वद्रूढिरित्यपि - न, ' तदेव ब्रह्म परमं कवीना ( ना -१-२ ) मिति श्रुतेरेव विष्ण्वेकनिष्ठत्वाऽसिद्धेः । ' यमन्तः समुद्रे कवयो वयन्ती ' ( नारा० १-१ ) ति प्रसिद्धतल्लिङ्गाचत्सिद्धिरिति चेत् , न - ' प्रजापतिश्चरति गर्भे अन्तः, ( ४-१ ) हिरण्यगर्भ इत्यष्टौ ' इति प्रजापतिहिरण्यगर्भश्रुतिभ्यां विरिञ्चैकपरत्वस्य सुवचत्वात् । तथा 'हिरण्यगर्भ इत्यष्टा' ( ना० उ० १-१३ ) वित्यनेना ( नु ) गृहीतात् ' य ईशे अस्य द्विपदश्चतुष्पद ' ( तै० सं ४-१-८ ) इति ( ऋग्वेदेपि ८-७-३ ) पशुपतित्वलिङ्गात् , ' पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमही ' ( नारा० ५ - वा ) त्युपसंहाराच्च शिवपरा साऽस्तु । तस्मात् श्रुतीनामनेकार्थत्वं ब्रुवता त्वयापि तथैव वाच्यम् , तर्हि - ' तदेव ब्रह्मेत्यवधारणं कथं योज्यमिति चेत् , त्वन्मते भूमशब्दरीत्या पुरुषभेदेन नानाऽर्थव्यवस्थासंभवादिति ।

(कु०) इदमत्यन्तमसमंजसम् , श्रीमदानन्दतीर्थभगवत्पादमतीयग्रन्थे नारायणो-

पनिषद्वाक्यसन्दर्भाभिप्रायाऽनभिज्ञानमूलकत्वात् । तथाहि - अयमनुवाकः परमात्मपर इति सायणभास्करभाष्योक्तदिशाऽवसीयते । 'अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टा' विति वाक्यव्याख्यावसरे - (सा०) 'उक्तार्थदार्ढ्याय प्रदेशान्तरपठितमन्त्रानुदाहरति - अद्भ्य इति ॥ 'अद्भ्य' इति अनुवाकस्य प्रतीकधारणम् । तत्र 'तमेवं विद्वानमृत इह भवती' ति पठितम्, 'हिरण्यगर्भ' इत्याद्या ऋचोऽष्टौ उक्ताः, ता अपि वेद्यस्य परमात्मन उपलक्षका ग्राह्याः' काश्चिदृचो ब्रह्मतत्वं प्रतिपादयन्ति, इति । अनुवाकारंभेच भास्करे - 'अद्भ्यः संभूत' इत्यनुवाको व्याख्यातः परमात्मपरत्वेन, हिरण्यगर्भ इत्यष्टौ ऋचो व्याख्याता अस्मिन्नेवार्थे, ऊर्ध्वा अस्ये (तै० सं ४-१-८) त्यादौ । एषां चात्मतत्वप्रतिपादनमन्त्राणा' मित्युक्तम् ।

एतेन - 'अद्भ्य इत्यनुवाकः, अम्भस्यपार इत्यनुवाकः, हिरण्यगर्भ' इत्यादिमन्त्राष्टकं चेति त्रयं, परमात्मपरमित्युक्तं भवति । स परमात्मा नारायणः, पुरुषसूक्तव्याख्यानारंभे 'अयमुत्तरोऽनुवाकश्चे' त्युभौ नारायणाख्यऋषिणा दृष्टत्वात्, जगत्कारणस्य नारायणाख्यस्य पुरुषस्य प्रतिपादकत्वाच्च' नारायणसंज्ञाविति सायणोक्तेः, 'आभ्यां च पुरुषाख्यो नारायणः प्रतिपाद्यते' इति भट्टभास्करोक्तेश्च । एवंच - एतदनुवाकत्रयं प्रलयार्णवशायित्वव्यापित्वकारणत्वादिबोधकं, अत्रानुवाके मन्त्रान्तरे च श्रूयमाणप्रजापतिहिरण्यगर्भशब्दौ, यतोवा इत्यादिकारणवाक्यजातं, वैयासिकं 'जन्माद्यस्य यत' इत्यादिब्रह्ममीमांसाशास्त्रं चेति सर्वं नारायणपरमेव । अतः - 'यमन्तःसमुद्र' इति वाक्यप्रतिपाद्यो नारायण एवेति सिद्धम् ।

'तदेवर्त' मिति वाक्यन्तु, तच्छब्देन तमनूद्य तस्य परब्रह्मत्वादि श्रावयति । तदिति नपुंसकनिर्देश 'ऋत' मित्यादिविधेयानुरोधेन । तच्छब्दः — पूर्वोक्तपरामर्शकत्वस्वाभाव्येन पूर्वप्रसक्तं समुद्रशायित्वविशिष्टविष्णुमेव परामृशति । बहुसंमतत्वसूचनाय कवयः कवीनामिति बहुवचनम् । 'हिरण्यगर्भ' इति प्रथममन्त्रस्य व्याख्याने परमात्मैव हिरण्यगर्भ इत्युक्तेः आदिकर्ता नारायण एव तत्पदवाच्य इति ज्ञायते । तत्र प्रतिपादितसर्वधर्माणां तत्रैव संभवात् ।

यद्वा - हिरण्यगर्भः = चतुर्मुखः, सिसृक्षोः परमात्मनः सकाशात्, समवर्तत= अग्रे प्रथमं अजायत । जातमात्रस्सः, सर्वेषां भूतानां मुख्याधिपतिरासीत्, स परमात्मा पृथिव्यन्तरिक्षलोकौ दधार । उक्तं हि - (तै० आ० १-८) 'विष्णुना विधृते

भूमी ' इति । अयमर्थः — भगवता अनादिसृष्टिकर्त्रा विष्णुना परमेश्वरेण समस्त-प्रपञ्चाधारभूतद्यावापृथिव्यौ विधृते इति । स च विष्णुः सूत्रनामकवायुं सृष्ट्वा तद्द्वारा सर्वं प्रपञ्चं नियमयतीति निरूपितं मन्त्रपञ्चकेन । सूत्रनामकवायुसृष्टिर्वाजस-नेयके - ' वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेण अयंच लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ती (बृ० ५-८) ति । अयमेव सूत्रनामकवायु-श्चतुर्मुखस्य रूपान्तरम् । अत्र तैत्तिरीये ' वाताद्विष्णोर्बलमाहु ' (तै० आ० १-८) रिति मन्त्रभागेनोक्तमिदम् । ' तदेवर्त ' मित्यादेरयमर्थः - तत् = समुद्रशायित्वधर्म-युतं नारायणाख्यं वस्तु, ऋतं = यथार्थविज्ञानरूपम् , सत्यं = यथार्थज्ञानपूर्वकव्यापार-वत् , 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृति'रिति वचनात् । तदेव=उक्तमेव वस्तु, परंब्रह्म = शास्त्रेषु प्रतिपादितं परब्रह्म, शास्त्रं च श्रुतीतिहासपुराणादि । अत्रोक्तसमस्त-चराऽचरप्रपञ्चं, बिभर्ति =धारणपोषणे अत्र भरणम् । किं बहुना, भुवनस्य नाभिः = सर्वस्य लोकस्याश्रयः । कवीनामिति सर्वत्रान्वेति, सर्वमिदं ब्रह्मविदां संमतम् ।

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
' य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥

इति ऋगष्टकान्तर्गत (तृ) द्वितीयऋचोऽयमर्थः - यः प्रजापतिः, महित्वा स्वमहिम्ना, यः प्रजापतिः, अस्य=परिदृश्यमानस्य द्विपदादेः, ईशे=नियमनाय, यः, समर्थ इति शेषः । बह्वृचभाष्ये तु — ईशे = ईष्टे, ईश - ऐश्वर्ये, आदादिक इति व्याख्यातम् । ' लोपस्त आत्मनेपदे ' ष्विति प्रत्ययतस्य लोपः । सायणः कुतो व्याख्यातवान् प्रकारभेदेनेति स एव प्रष्टव्यः । अत्रैश्वर्यं नियमनमेव । ' यः पृथिव्यां तिष्ठन् , ईश्वरः सर्वभूताना' मित्यादिना प्रमाणनिकुरंबेण, सर्वं नियमनं भगवा-न्नारायण एव करोतीति प्रतिपाद्यते । अन्ये तु कुर्वन्ति जगन्नियमनं तदाज्ञयेति हरेः प्रेरकत्वेन कर्तृत्वं भारतादौ स्पष्टमिति वदन्ति । किंच - पशुपतित्वलिङ्गश्रवणात् 'हिरण्यगर्भ 'इति मन्त्राष्टकं शैवं भवेत् , न त्वयमनुवाकः । किंच - 'अंभसी'ति प्रथममन्त्रे ' प्रजापतिश्चरतीत्यत्रत्यं प्रजापतिपदं विराड्रूपो भगवानिति व्याख्यातं, (सा०) ' अद्भ्य ' इत्यनुवाके ब्रह्माण्डमध्ये प्रजापतिः विग्रहवान् चरतीति च । तत्रैव विराड्रूपो न चतुर्मुख इति व्याख्यातारः । ' अंभस्यपार ' इत्यादिब्रह्मविद्योपसंहारवाक्ये —

'परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च ।
प्रजापतिः प्रथमजा ऋतस्याऽऽत्मनाऽऽत्मानमभिसंबभूव ॥'

इति मन्त्रव्याख्याने - ऋतस्य = सत्यस्य ब्रह्मणः प्रथमकार्यभूतः प्रजापतिर्हिरण्यगर्भ इति सायणे (व्या०)। एवं च - प्रजापतेः कार्यत्वमेव न तु कारणत्वमिति प्रजापति-हिरण्यगर्भश्रुतिर्नेष्टसाधिका दीक्षितस्य ।

ततश्च —'अम्भस्यपार' इत्याऽऽद्यमन्त्रस्याऽयमर्थः — अंभसि अपारे इति छेदः । प्रजापतिः परमात्मा, अपारे अम्भसि = वेलारहिते जले, प्रलयार्णव इति यावत् । महतः = लोके महत्त्वेन प्रमितवस्तुनः, शुक्रेण = शुद्धेन रूपेण, ज्योतिरुपलक्षितसर्वपदार्थान् समनुप्रविष्टः, गर्भे अन्तः ब्रह्माण्डस्य अन्तः । सृष्टेःपूर्वं प्रलयार्णवचरणम्, सृष्टेरनन्तरं सर्वदेशसर्ववस्तुव्याप्तिः, पूज्या-त्पूज्यतमत्वं, महापरिमाणत्वं चोच्यते । महत इत्यस्य पूज्यात्, महापरिमाणादित्यर्थात् । अत्र प्रजापतिशब्दो न हिरण्यगर्भपरः, तस्य 'प्रजापतिः प्रथमजा' इति मन्त्रेण आदिकर्तुर्नारायणस्य प्रथमकार्यरूपत्वेन वक्ष्यमाणत्वात्, प्रलयार्णवचारित्वाभावात्, अत्रोक्तेतरगुणभावाच्च । अतएव रुद्रोपि न तत्पदवाच्योऽत्र, एतद्धर्माभावात्तस्य ।

किंच - 'यमन्तः समुद्र' इति समुद्रान्तर्वर्तित्वं हि भगवल्लिंगं श्रूयत इत्या-चार्याणामाशयो, न तु यस्य कस्यचिदन्तर्वर्तित्वम् । तत्तु न क्वापि शिवस्य हिरण्यगर्भस्य वा श्रुतम् । तस्मा 'त्प्रजापतिश्चरती' ति वाक्योपन्यासेन प्रजापतिश्रुतिप्रदर्शनमसंगतम् । 'नारायणाय विद्महे' इति नारायणगायत्रीव्याख्याने- 'आपो नारा 'इति स्मृत्युपन्यास-पूर्वं नारायणः समुद्रजलशायीत्यर्थ इत्युक्तम् (सायणे)। सहस्रनामसु च 'महोदधि-शयोऽन्तक' इति 'महोदधिशय' इति विष्णुनामोक्त्या नारायणस्यैव समुद्रमध्य-वर्तित्वं प्रसिद्धमिति विद्धि ।

श्रीनारायणस्यैव समुद्रशायित्वे विलसन्तीमानि प्रमाणानि — (भार०. शां०.)

'स आदिः स मध्यः स चान्तः स प्रजानां स धाता स ध्येयः स कर्ता स कार्यम् ।
युगान्ते प्रसुप्तः संक्षिप्य लोकान्युगादौ प्रबुद्धो जगद्ध्युत्ससर्ज ॥ ९८ ॥

'तस्मै नमध्वं देवाय,
समुद्रशायिने नित्यं हरये मञ्जुकेशिने । शान्ताय सर्वभूतानां मोक्षधर्मानुभाषिणे ॥ १०२

अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः ।
स सर्गकाले च करोति सर्वं प्रयाणकाले च तदत्ति भूयः ॥ ११४ ॥

संहृत्य सर्वं निजदेहसंस्थं कृत्वाऽप्सु शेते जगदन्तरात्मा ॥ शां ११५ ॥

पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं
त्वमेवाद्यस्तस्मिन्सलिल उरगेन्द्राऽधिशयने ।
पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः
स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः (भा० श्री० ४-७-४२)

'मम योनिरप्स्वन्तः समुद्रे' (ऋ) लक्ष्मीवाक्यमेतत् । योनिः = कारणं (आश्रयः)

हे गोदावरि देवि तावकतटोद्देशे कलिङ्गः कविः
वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः ।
एनामर्णवमध्यसुप्तमुरभिन्नाभीसरोजासनं
ब्रह्माणं गमय क्षितौ कथमसावेकाकिनी स्थास्यति ॥

अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोपि शेते
सिन्धोः सोप्येकदेशे तमपि चुलकयां कुम्भयोनिश्चकार ।
धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंहक्षितीश
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ इति ।

'तदेवाग्नि' रित्यादिसामानाधिकरण्येन व्यपदेशस्तु 'राजा राष्ट्रमित्यादाविव तदधीनन्यायेन । प्रजापतिपदं प्रजानां पतिः पालको विष्णुरिति व्याख्यातमभियुक्तैः कैश्चित् । हिरण्यगर्भपदं हिरण्ये ब्रह्माण्डे गर्भरूपेण स्थित इति व्याख्यातम । इदमपि पुरुषाख्यनारयणस्यैव । उक्तं हि भागवते —

'जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
संभूतं षोडशकलमादौ लोकसिसृक्षया' (१-३-१) इति ।

अत्र भगवान् लक्ष्मीपतिः । भगवच्छब्दो लक्ष्मीपतिपर इति 'एतावताऽलं, अथापी'ति (भा० १-१८.२०,२१) श्लोकाभ्यां व्यासेनैव निरूपितत्वात् । सायणे 'वेद्यस

परमात्मन उपलक्षका अष्टौ मन्त्रा ' इत्याद्युक्तेः तेषां मन्त्राणामेतदर्थकत्वमेव न्याय्यम् । ' यईश ' इति मन्त्रबोधितद्विपदादिनियमनमपि हिरण्यगर्भोत्पादकपरमात्मनिष्ठमेव, न तु शिवनिष्ठं, हरस्य तदुत्पादकत्वनियामकत्वाभावात् । एतेन - पशुपतित्वलिङ्गाच्चेति शिवपरा सेति दीक्षितोक्तमपि तदीयपूर्वाचार्यकृतश्रुत्याद्यर्थविरुद्धम् । यद्वा - ' प्राणादिव्यापारस्यापि परमात्मायत्ततया', परमात्मनि उपचरितुं शक्यत्वा 'दिति ' जीवमुख्ये' (१-१-३१) ति सूत्रशाङ्करभाष्योक्तदिशा, हिरण्यगर्भादिपदं जगत्कारणपरमात्मपरम्, अन्तर्यामि परं, अन्तर्यामिनारायणप्रेरितहिरण्यगर्भपरं वाऽभ्युपेयम् । अन्यथा - सायणादिभाष्याऽसङ्गतिः, ' आदिकर्ता नारायण ' इति शाङ्करोक्त्यसङ्गतिश्च ।

' कस्मै देवाय हविषा विधेमे ' त्यस्यायमर्थः - हिरण्यगर्भान्तर्यामिणे विष्णवे, हविषा पुरोडाशादिना, सपर्यां कुर्यामेति । अत्र कस्मै इत्येतत् अनेकधा निरुक्तम् (सायणे), एवमनुसन्धानपूर्वं याग एव संपूर्णफलमिति गीतायां नवमे भगवतोक्तं, विवृतं चास्माभिरधस्तात् । एवमङ्गीकारेपि नास्या उपनिषदः शास्त्रस्य च नारायणविषयता हीयते ।

इदन्त्ववधेयम् — श्रुतीतिहासपुराणादौ प्रतिपाद्यमानो देवतान्तरमहिमा परमात्माधीन एव, ' देवतान्तराणां परमेश्वराधीनैश्वर्यवत्त्वाच्चे ' ति शाङ्करभाष्याद्युक्तेरिति ॥

' पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमही ' (नारा० ५) त्युपसंहाराच्चे ' त्यपि मन्दम्, प्रकरणोपसंहारोत्तरमस्य वाक्यस्य श्रवणात्, ' पशूंश्च मह्य ' मित्यादिफलश्रुत्यन्त—'अविभ्रदम्र आगहि श्रिया मापरिपातये '(ना० ५) ति वाक्येनैव प्रकरणोपसंहारात् । एवमेव सायणोक्तेश्च । इदंतु अनेकदेवतागायत्रीमन्त्रनिरूपणपरप्रकरणान्तरस्थं, पुंसूक्तप्रतिपादितपुरुषाख्यभगवन्मूर्तिगायत्रीप्रतिपादकम्; देवतान्तरनिरवकाशसहस्राक्षत्वलिङ्गश्रवणात्, ' पुरुषो हवै नारायण ' इति विष्णौ प्रसिद्धपुरुषश्रुतेश्च, जगत्कारणनारायणाख्यपुरुषप्रतिपादकत्वात् । ' अव्यक्तमहदादिविलक्षणो यश्चेतनः पुरुष ' इति यजुरारण्यके (३-१०) ऋग्वेदाष्टमाष्टके (४-७-१६) पुरुषसूक्तव्याख्यानावसरे विद्यारण्योक्तेः, ' आभ्यां च पुरुषाख्यो नारायणः प्रतिपाद्यत' इति भट्टभास्करोक्तेश्च । तत्र पुरुषपदं नारायणपरम् । महादेवपदं महतां देवः, महांश्चासौ देवश्चेति वा योगेन सर्वोत्तमः, साधुजनसंरक्षक इत्यर्थकं, पुरुषस्य विशेष-

णम्। षष्ठीसमासपक्षे महच्छब्दस्याऽऽत्वं छान्दसम् । रुद्रपदं तु-तदन्तर्यामिपुरुषाख्य-नारायणपरं, योगेन वा तत्परम्, न शिवपरम् । योगश्च पूर्वं दर्शितः । सायणे तु — रुद्रो विराड्रूप इति व्याख्यातम् । रुद्रगायत्रीमन्त्रस्तु - 'तत्पुरुषाय विद्महे' इत्युत्तर-वाक्येन वक्ष्यते। अत 'स्तदेवे' त्यवधारणं सुयोजमित्यवधारणं कथमिति न कोपि प्रष्टा । अत्र भगवद्गुणानां जगत्कारणत्वादीनामुपलंभान्नान्यपरत्वमस्य सन्दर्भस्य ।

'यत्र त्वविरोधस्तत्राऽन्यपरत्वमपि, यत्र तु विरोधस्तत्र भगवत्परत्वमेवेति नियम' इति नात्राऽनेकार्थतासंभव इति भूमादिदृष्टान्तेनाभिहितदूषणं गळहस्तितम् । भगवतः अन्तर्यामिरूपाणामवताररूपाणां च भेदाभावस्य, जीवब्रह्मभेदस्य च शास्त्र-सिद्धत्वाच्च एकव्यक्तावप्रसक्त्या 'ते ये शत' मित्याद्युक्तं परास्तम् । उभयोर्भेद-स्यैव प्रमाणप्रमितत्वेन शङ्काया एवानुत्थानात् ।

एतेन — यच्चोक्तं कौस्तुभकृता — 'ननु - ब्रह्मप्रजापत्योरानन्दे उत्कर्षाप-कर्षौ कथं स्यातामित्याशङ्क्य ब्रह्मानन्दमययोरवयवावयविभाववदिति समाधाय, एकत्वेऽपि स्वस्य स्वस्मादुत्कर्षापकर्षौ माध्वैरवश्यमङ्गीकार्यौ, त्वन्मते स्वस्मा-त्स्वस्योत्कर्षाऽपकर्षाविष्टावेवेति सुधोक्ते' रिति । तन्न एतदर्थाऽपरिज्ञानमूल-कम् । 'अणोरणीया' निति श्रुत्यादिबलेन नारायणस्याणीयस्त्वमहीयस्त्वे प्रमिते, तत्र आत्मन एकस्यैव निरुक्तधर्माधिकरणत्वप्रयुक्तः स्वस्य स्वस्मादुत्कर्षादिः प्रामाणि-कत्वादभ्युपगतः । किंच देशानन्त्यं तावत्तत्र नारायणस्य विवक्षितं, तच्च स्वस्य स्वाधि-कोत्कर्षापकर्षावन्तरा श्रौतं तन्नारायणस्य न निर्वहतीति, तौ तस्याऽभ्युपगतौ । प्रकृतेच, ब्रह्मप्रजापत्योरभेदस्तावन्नाद्यापि सिद्धः, तदर्थमेव हि भवतोऽद्य महान् यत्नः, स च न सिध्यति प्रयत्नशतैरपि । अपि च - गुणविषये ब्रह्मप्रजापत्योरुत्कर्षापकर्षौ श्रुतिबोधितौ, तौच, प्रायपाठानुसारेण, लोकन्यायेन च, भिन्नयोरेव स्वीकर्तव्याविति ।

किंचैवं भाषणमपसिद्धान्तोऽस्य, नारायणस्य जगत्कर्तृत्वमिति शाङ्करसूत्र-भाष्याद्युक्तेः, ननु - परमतदूषणाय परमयमाक्षेपो न तु तत्रादर इति चेत्, तर्हि - जितं प्रतिवादिना, तस्य समीहितसिद्धेः, नार्थवान् प्रयत्नो दीक्षितवराकस्य ।

अस्तु नामाऽऽवयोर्विवादो निरवधिको यावत्कल्पम्। भारतादिप्रणेता सूत्रकार-स्तावत् सूत्रादौ जीवेश्वरयोर्भेदमेव प्रतिपादयतीति सूत्रादितोऽवगम्यते । तथाहि —

सूत्रेषु तावत् 'अथातो ब्रह्म जिज्ञासे' ति प्रथमसूत्रेण ब्रह्मविचारं विधाय, जिज्ञास्यं च ब्रह्म कीदृशमिति जिज्ञासायां, लक्षणमुखेन वेदितव्यं तदिति 'जन्माद्यस्य यत' इति जगत्कर्तृत्वं तस्य लक्षणमभिधाय, तच्च लक्षणं श्रुतीतिहासादिशास्त्रवेद्यमिति 'शास्त्रयोनित्वा' दिति सूत्रेण कथयित्वा, शास्त्रं चोपक्रमादिलिङ्गैर्विचारितमेव विवक्षितमर्थं प्रकाशयति, तथाविधेन शास्त्रेण सिद्धो ब्रह्मात्मादिपदबोधितो नारायण एवेति तुर्येण 'तत्तुसमन्वया' दिति सूत्रेण समर्थ्य, स च 'ज्ञेयत्वादिना शास्त्रप्रतिपाद्यत्वात् ब्रह्मात्मादिशब्दवाच्य इति ईक्षत्यधिकरणेन पञ्चमेन सहेतुकं निर्णीय, 'आनन्दमये' त्यादिना समन्वयप्रकारप्रपञ्चनमुखेन ब्रह्मणो बहुगुणवैशिष्ट्यं निरूप्य, अत्रार्थे विरोधशङ्कां परिहृत्य, समस्तगुणविशिष्टब्रह्मोपासनेन प्रसन्नेन भगवता अनुगृहीतः शाश्वतं सुखं प्राप्य, नित्यानन्दमनुभवन् भगवन्तं स्तुवन् समास्ते, इति प्रतिपादितम्। ततो भेद एव शास्त्रसंमत इति सिद्धम् ॥

## श्रीब्रह्मसूत्रादौ ब्रह्मजीवयोर्भेदापादका धर्मा बहवो निरूपिताः

### तत्र केचन प्रधानधर्माः ।

| ब्रह्मधर्माः | जीवधर्माः |
|---|---|
| जिज्ञास्यत्वम् | जिज्ञासुत्वम् |
| अजायमानत्वम् | जायमानत्वम् |
| सर्वज्ञत्वम् । | असर्वज्ञत्वम् |
| ज्ञेयत्वम् | ज्ञातृत्वम् । |
| शास्त्रमुख्यविषयत्वम् | शास्त्रमुख्याविषयत्वम् |
| उपास्यत्वम् | उपासकत्वम् |
| फलदातृत्वम् | फलग्रहीतृत्वम् |
| नियामकत्वम् | नियम्यत्वम् |
| ईश्वरत्वम् । | दासत्वम् । |
| सर्वव्यापित्वम् | अव्यापित्वम् |
| प्राप्यत्वम् । | प्राप्तृत्वम् । |

एतेन -- भेदस्तावद्दुस्साध इत्युक्तिः प्रत्युक्ता वेदितव्या । निपुणं निराकृतोऽस्माभिर्जिज्ञासाधिकरणविचारे, श्रीव्यासपाणिनिभावनिर्णये च विशेषेण । अन्यत्र श्रीभगवत्पादैस्तत्कलैराचार्यैश्च, अन्यैश्च विद्वद्वरैः ॥

किं बहुना भाषणेन — नास्माकमायासो भेदसाधने, भगवान् सूत्रकार एव तदात्वे तत्रतत्र प्रसक्तामभेदशङ्कां 'आनन्दमया - ऽन्तः - सर्वत्रा - ऽन्तर्याम्य - दृश्यत्व - द्युभ्वाद्यायतना, ऽधिकं तु भेदे' त्यादिनयेषु 'नेतरः, भेदव्यपदेशात्, भेदव्यपदेशाच्चान्य' इति न्यासेन, क्वचिद्भेदकधर्मव्यपदेशेन च निराकुर्वन् शास्त्रं सर्वं भेदपरमिति प्रसाधितवान् । 'स आदिः स मध्यः स चान्तः ....' ( भार० शान्ति० १४९-९८ ) इत्यादि पूर्वोदाहृतवचनघटिताध्याये भगवतो नारायणस्य जगत्कर्तृत्वादिप्रपञ्चविलक्षणधर्मवत्त्वं निरूप्य सर्वोत्तमत्त्वं प्रत्यपीपदच्च । वयं च तदनुभाषिण एव । श्रीमत्सूत्रकृत्संमतमर्थं निराकुर्वाणाः भवादृशाः कथं व्याससिद्धान्तवादिनो भवेयुः । तथा ज्ञानेनाऽनुष्ठानं परमस्मदायत्तम् । पुरातनपुण्यपरिपाकवन्तः साधवस्तु सूत्रकृता प्रदर्शितेन पथा हरिमाराधयन्तो निरतिशयानन्दमनुभवन्ति । 'जनाः सुकृतिनोऽर्जुन' (गी० ७-१६) मामेवानुत्तमां गतिम्' (गी० ७-१८) इति भगवद्वचनात् । ये तु मां विद्विषन्ति नाश्रयन्ति च मदुक्तं पन्थानं पूर्वदुष्कर्मपरिपाकवशाद्दुश्चेतनाः, न ते गच्छन्ति सद्गतिम् । उक्तं च भगवता - 'न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः' (गी०-७-१५) इति ॥

किंच — प्रकृतानुवाकस्थस्य 'अब्ध्य' इत्यादेरयमर्थः - अब्ध्य इति पदं अप्सुशयनारायणपरं, मञ्चाः क्रोशन्तीत्यत्रेव । अब्ध्यो नारायणात्, हिरण्यगर्भः = चतुर्मुखः, संभूतः - उत्पन्नः, नाभीपद्मद्वारा जातः, अष्टौ - अष्टदिक्पालाश्च तदुपलक्षितं सर्वं जगत् जातम् । चकाराभावेपि समुच्चयो दृश्यतेऽनेकस्थले 'मणिना वलयेन विभाति कर' इत्यादौ । यद्वा - अष्टौ = अष्टधा विभिन्ना प्रकृतिः संभूता, 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा (गी० ७ - ४) अपरेय' (५) मिति विभागः कृतः । 'प्रजापतिश्चरती' ति प्रथममन्त्रश्रुतप्रजापतिपदं चतुर्मुखपरमिति शंकावारणायाऽत्र हिरण्यगर्भस्योत्पत्तिरुक्ता । अत एव वक्ष्यते 'प्रजापतिः प्रथमजा ऋतस्ये' ति मन्त्रे हिरण्यगर्भस्य नारायणसृष्टेषु प्राथम्यम् ।

अपां सृष्टिः प्रथमं, ततोऽन्येषां यथाकालमिति मनौ भारतादौ च व्यक्तम्, 'अप एव ससर्जादा' वित्यादिना। तत्र मनौ (१-अ०) अप्सृष्टेः परम्। आदिस्रष्टा नारायण आदावण्डं चतुर्मुखमसृजत्, तद्द्वारा भूतानि सर्वाणीत्यादिसृष्टिक्रम उक्तः॥

यदत्रोक्तं कौस्तुभे - सोऽश्नुते सर्वानित्यत्र ब्रह्मणा सह साहित्यं मोक्षेप्युक्तमिति, तन्न, तस्य जीवन्मुक्तपरत्वादित्यादि। (कु०) तदसांप्रतम् जीवतो मुक्तत्वयोगात्, मुक्तस्य जीवत्वायोगात्, भोगावच्छेदकैतच्छरीरपातानन्तरमेव मुक्त्युपदेशात्, जीवन्मुक्तिदशायां जीवस्य ब्रह्मणा ऐक्याभावेन, ब्रह्मत्वाऽप्राप्तेर्ब्रह्मरूपेणेति कथनाऽयोगात्। यदि तस्यां दशायां ब्रह्मभावः स्वीक्रियते, तर्हि निर्विशेषत्वस्याप्यभ्युपेयत्वापत्त्या आनन्दानुभवोक्तिरसङ्गता, प्रत्यक्षबाधश्च। परममोक्षे च ब्रह्मभूतस्य निर्धर्मकत्वात् कामनाभावेन तदनुभवः सुतरां न संभवतीति फलश्रुतिर्निरर्थिका।

सर्वकामानुभव एकस्य एकक्षणावच्छेदेनाऽसंभावितो बहुरूपेण विना, अतो युगपदित्यर्थस्वीकारोऽपि निरर्थक एव। एवंच - एषापि श्रुतिर्भेदमाह मोक्षेपीति युक्तम्। यच्चोदाहृतं स्वोक्तेऽर्थे वचनमुपबृंहणं, तदपि न साधकं तस्य, तद्वचनस्थब्रह्मरूपेणेत्यस्य ब्रह्मरूपसदृशरूपेणेत्यर्थेन सारूप्यमुक्तिपरत्वेन सुयोजत्वात्।

तिलैस्सह माषान् वपति, देवदत्तेन सह यज्ञदत्तो भुङ्क्ते इत्यादौ यथा एकस्मिन् काले तिलान् माषान् वपति, एकस्मिन् काले देवदत्तो यज्ञदत्तश्च भुङ्क्ते इत्यर्थः, तथा ब्रह्म मुक्तजीवश्च युगपत् कामानश्नुते इत्येवार्थस्स्यात्। अतएव भागवते —

गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात्।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः॥ (८-४-६)॥ इति।

एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन युक्तः।
गन्धर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतं स्वभवनं गरुडासनोऽगात्॥ (८-४ १३)

इति भगवद्भक्तितदुपासनाजन्याऽपरोक्षस्य सारूप्यप्राप्तिपूर्वं स्वयोग्यपार्षदपदप्राप्तिः फलमुक्ता। इदं बोध्यम्-पदप्राप्तेरभिधानात् मुक्तावपि परिचरन्ति मुक्तजना भगवन्तमिति।

किंच — 'ब्रह्मविदाप्नोति पर' (तै० उ० २-१-) मिति सूत्रितोऽर्थः 'सत्यं ज्ञान' (तै० उ-२-) मिति मन्त्रेण विवृतः, स एवार्थो वल्लीद्वयेन विशदीक्रियत

इति सर्वेषां व्याख्यातॄणामभिप्रायः । तत्र-सूत्रस्थानीयेन वाक्येन ब्रह्मविदां ब्रह्मप्राप्तिरेवाभिहिता । न तु ब्रह्मभावः । 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते' ति विवरणवाक्येपि श्रूयमाणशब्दस्वारस्यात् ब्रह्मप्राप्त्या कामाऽनुभाव इत्येव लभ्यते, न ब्रह्मभावः । एतन्मन्त्रगतफलवाक्यविवरणपरं 'स य एवंवित्, अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादि सामगायन्नास्त' इत्यन्तमिति व्याख्या कृता । तत्रापि आत्मानमुपसंक्रम्य कामानुभव एवोक्तो न ब्रह्मभावः । एवं च शाब्दमर्थं परित्यज्य अशाब्दार्थग्रहणमयुक्तम् । ननु तत्त्वमसीत्यादिना मुक्तावभेदसिद्धिरिति तु न युक्तम्, तैत्तिरीयानुसारेण तत्सदृशोऽसीत्येव तदर्थवर्णनस्यौचित्येन भेदपरत्वमेवेत्यन्यत्र विस्तरः । लोकेपि मुखं चन्द्र इत्यादौ सामानाधिकरण्यस्थले सादृश्यार्थस्यैव सर्वानुभवात् ।

किञ्च—आनन्दमयस्य कोशत्वोक्तिरत्यन्तमसमञ्जसा । पञ्चस्वपि पर्यायेषु आत्मपदश्रवणात्, वल्लीद्वयफलबोधक 'एतमन्नमयमात्मनमुपसंक्रामति, (उपसंक्रम्य) इत्यादिवाक्यपञ्चके च आत्मपदश्रवणात्, 'प्राणं देवा अनुप्राणन्ति इत्यनुवाकीयपञ्चकोशादिगतेन सर्वात्मना आत्मवन्त' इति शाङ्करभाष्यतद्व्याख्यानाभ्याम्, कारणत्वाधिकरणे (१-४-५) 'आकाशाद्वायु'रित्यत्रापि आकाशादिशब्दैराकाशाद्यवच्छिन्नं ब्रह्मण एव कारणत्वमुच्यत इति न विरोधः, आकाशादिशब्दैरपि आकाशाद्यवच्छिन्नब्रह्मण एव लक्षणया प्रतिपादनात्' इति सुरेश्वराचार्यकृतसूत्रवृत्तिग्रन्थाच्च, अन्नमयादीनां पञ्चानामपि शब्दानां तत्तत्कोशाधिष्ठितात्मपरस्यैवाऽभ्युपेयत्वात् ।

किञ्च—आनन्दमयस्य कोशत्वे 'प्राचुर्ये मय'डिति सूत्रकृत्सिद्धान्तव्याकोपः । नचार्थान्तरपरत्वं सूत्रखण्डस्य, तस्य शेखरे मंजूषायां च दूषितत्वात् । अत्र विकारे मयडिति मनोरमाकारसिद्धान्तस्तु अयुक्त इति 'श्रीव्यासपाणिनिभावनिर्णये' मयडर्थविचारे विस्तरः । न चात्र बह्वचो विकारे मयटो दुर्लभात् पूर्वपक्ष एवाऽसङ्गत इति वाच्यम्—तत्साङ्गत्यस्य असत्तातपादकृत 'सूत्रभाष्यार्थमणिमञ्जर्यां' स्पष्टत्वात् । 'द्व्यचश्छन्दसी'ति पाणिनिसूत्राऽपरिज्ञानात्, 'अन्नरसमय' इत्यत्र बह्वचोऽपि विकारे मयटो दर्शनात् काचित्कं पाणिनीयं सूत्रमिति निश्चयाद्वा पूर्वपक्षकरणात् । एतेन-त्वदभिमतः पुच्छब्रह्मवादोपि निरस्तः, तत्र मयटोऽदर्शनेन 'विकारशब्दे'ति

सूत्रस्यैव वैयर्थ्यापत्तेः । तस्मादयं भट्टोजिः सर्वकारणत्वेन निखिलनिगमवेद्ये सर्वागमप्रतिपाद्यकल्याणगुणरत्नरत्नाकरे परब्रह्मणि श्रीमन्नारायणे परदेवतायां समस्तजगत्कर्तृत्वं प्रवदति स्वाचार्ये वा प्रादर्शयत्प्रद्वेषं प्रबन्धेनाऽनेनेति सुमतिसुमणयः । जगत्कारणनारायणद्वेषस्य फलमाह भगवान्बादरायणो भारते – ( शां० प० )

नैव तस्यापरो लोको नायं पार्थिवसत्तम ।
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ॥ ३५६-५ ॥

मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ ६ ॥ इति ।

इति आनन्दमयाधिकरणविचारः

---

## अन्तरधिकरणविचारः

(कौ०) यदुक्तं — समुद्रशायित्वादिविष्णुलिङ्गेन विष्णुरेवाऽन्तस्थ इति,

(कु०) तदयुक्तम् । अष्टमूर्तेः शिवस्यापि लिङ्गमस्ति, 'प्रजापतिश्चरति गर्भे अन्त' इति प्रजापतिशब्दरूपा श्रुतिश्च हिरण्यगर्भपराऽस्तीत्यदि पूर्ववत् । अस्य वाक्यस्य 'यत' इति वाक्यादौ शेषः । अत्रोच्यते—चन्द्रादित्ययोर्मनसा सञ्चरणमात्रेण तच्छरीरकत्वं न भवेत् , यतो लोके कश्चित्पुरुष एकत्र स्थितोऽहं सर्वदेशे चरामीति सङ्कल्पमात्रेण न हि सर्वदेशचारी, सर्वदेशशरीरको भवति । नचैवं विष्णुपरत्वेऽपि समानमिति, अनुवाकस्यास्य कथं विष्णुपरतेति वाच्यम् - तेजस्वित्वं संपादयामीति संकल्पेन, नियमयामीति संकल्पेन वा, चन्द्रादित्ययोरन्तस्सञ्चारो हरेरित्यर्थात् । न च शिवेपि समानमिदमिति वाच्यम् - बृहदारण्यकादौ त्वदीयाचार्यैरन्तर्यामी नारायण इत्युक्तत्वेन भवदाचार्यवचनरीत्या त्वया येन केनापि वा शिवस्यान्तर्यामित्वं न सुवचम् । शैवपक्षमवलंब्योच्यत इति तु न समीचीनम्—'शाङ्करादपि भाष्याढ्ये' रिति प्रतिज्ञाभङ्गात् । नारयणस्यान्तर्यामित्वकर्तृत्वादिकं वदता तद्भाष्यकृतैव शैवपक्षस्य निराकृतत्वात् । दशहोतृमन्त्रहृदयप्रतिपादकप्राथमिकमन्त्रगता 'ऽन्तस्समुद्रे मनसा चरन्त'

मिति मन्त्रेण समुद्रमध्ये इदं सृजेयमिति संकल्पेन चरतो देवस्यैव सर्वहृदयस्थत्वेन सर्वनियामकमूर्तिविशेषस्य अत्रानुवाके सर्वान्तर्यामित्वकथनेन, तस्यैव चन्द्रादित्यान्तर्यामित्वकथनं न्याय्यम् । समुद्रशायित्वं तु न शिवविरिञ्चयोः प्रसिद्धम् । अतः प्रजापतिश्रुतिरपि प्रत्याख्याता । 'ब्रह्माऽन्वविन्द' दिति चतुर्मुखः समुद्र आविर्भूतं दशहोतृमन्त्रप्रतिपाद्यं लभते इत्यभिधानाच्च । तन्मन्त्रप्रतिपाद्य ईश्वर इति 'ईश्वरस्सर्वभूताना'मिति भगवद्वचनोदाहरणेन सायणेनोक्तम् । भगवद्वचने ईश्वरपदं 'ईशनशीलो नारायण' इति भवदाचार्या व्याख्यान् । प्राचां ग्रन्थाननवलोक्यैव, प्रवृत्तोऽयं ग्रन्थरचनायामिति विभातीति विमर्शका आशेरते । अत्राऽनुवाके (११) 'प्रजापतिश्चरति गर्भेऽन्त' इति वाक्यमेव न । यद्वाक्यं यत्परतया नेतव्यमितीष्यते तत्साधकश्रुतिलिङ्गाभ्यां तद्वाक्यगताभ्यां भवितव्यमिति हि वाक्यविदां मर्यादा । अत एव — 'तद्वाक्यगतं लिङ्गं बलव' दित्युक्तमभियुक्तैः । श्रुत्यर्थस्तु पूर्वाधिकरण उक्तः । 'य आदित्ये, यश्चन्द्रमसी' ति अन्तर्यामिब्राह्मणे वर्णनात् , तदन्तस्थत्वमपि नारायणस्यैव । तत्र 'पृथिव्यां तिष्ठन्निति प्रथमवाक्ये नारायणोऽन्तर्या' मीति भवदाचार्योक्तेः ।

एतेन — 'आत्मन आकाशः (तै० उ०) आत्मा वा अरे (बृ. उ.) स आत्मा तत्त्वमसी (छा० ६) त्यादिस्था औपनिषदा आत्मशब्दा नारायणपरा इति घण्टाघोषेण शक्यं वक्तुम् । तस्माद्भट्टोजिदर्शिते देवतान्तरश्रुतिलिङ्गे न तदभिमतार्थसाधके । अतः श्रीमध्वाचार्यप्रदर्शितसमुद्रशायित्वादिलिङ्गमन्यत्र निरवकाशं श्रुतिसूत्रयोर्विष्णुविषयकत्वसाधकं भवत्येवेति विदाङ्कुर्वन्तु ॥

इत्यन्तरधिकरणम् ॥

उपरितनेषु (५) अधिकरणेषु दोषत्रयन्तूक्तमित्येवावदत् । बाधः, पूर्वपक्षस्य दुरुद्धरत्वं, व्याप्यत्वासिद्धिरिति आनन्दनयाधिकरणावतरणखण्डनावसर उक्तदोषत्रयमिति तदर्थः । आगमैकवेद्ये विष्णुकर्तृकत्वरूपेऽर्थे बाधाद्यसंभवस्य निरूपितत्वेनाऽसंगतमिदमिति ज्ञेयम् ॥



## अन्तिमप्राणाधिकरणविचारः

प्राणस्तथानुगमात् (१२. अ.)

(कौ०) यदुक्तमन्तिमप्राणाधिकरणे 'जीवमुख्यप्राणे (१-१-३१)' ति सूत्रे 'शास्त्रदृष्ट्ये' ति सूत्रं जीवब्रह्मणोरभेदमेवाऽऽह, बाधकाभावस्तूक्तः, लाघवसहकृताः श्रुतिस्मृतयश्च साधिका इति ।

(कु०) तदत्यन्तमसङ्गतम् । तथा हि— नेदं सूत्रं जीवब्रह्मणोरभेदमाह किंतु सर्वान्तर्यामिभगवद्रूपाणामभेदम् । 'यः पृथिव्या' (बृ. ५ - ७) मित्यादिभिरेकविंशतिपर्यायैर्भगवतोऽन्तर्यामित्वमुक्तम् । 'ईश्वरस्सर्वभूताना' मिति सर्वान्तर्यामित्वं च । तत्राऽधिष्ठानभेददर्शनेनाधिष्ठितभगवद्रूपभेदशङ्का व्युदासिता । सूत्रस्यायमर्थः—वक्तु=बृहतीसहस्रवक्तुर्विश्वामित्रस्य तमुद्दिश्येति यावत्, आत्मनः= उपदेशकर्तुरिन्द्रस्य, उपदेशात् = प्राणत्वेनोपदेशात् । इन्द्र एव प्राणो न तु विष्णुरिति चेन्न — 'अहं मनुरभवं सूर्यश्चे (बृ. ४ - १०) त्यत्राऽहमादिपदानां, तत्तदन्तर्यामिपरत्ववत् 'प्राणो वाऽहमस्मि ऋषे' (ऐ. आ. १-२-३) 'प्राणस्त्वं, त्वां विजानीया' मित्यादावपि अहमादिपदानां तत्तदन्तर्यामिपरत्वम् । अध्यात्मसंबन्धात् । 'प्राणस्त्वं, प्राणस्सर्वाणी' त्यादिना बहुदेहसंबन्धाभिधानादैतरेये इति । 'ईश्वरस्सर्वे' ति स्मृतौ एकस्यैवेश्वरस्य सर्वान्तर्यामित्वोक्तेः, परमात्मेतरजीवस्य एकस्य एकस्मिन् क्षणे अनेकदेहसंबन्धाभावात्, यथा मनुसूर्याद्यन्तर्यामी एक एव न तु भिन्नः, तथा त्वदन्तर्यामी सर्वान्तर्यामीच एक एव, नतु भिन्न इति भावः ।

किञ्च – अध्यात्मसंबन्धादित्यस्यावृत्त्या अधिकश्चासावात्मा च (परमात्मा) तस्य संबन्धभूमा=सम्बन्धाधिक्यम् । इन्द्रः स्वस्मिन् भगवत्सन्निधानाधिक्यात् (स्वं) आत्मानं प्राणशब्दवाच्यपरमात्मत्वेनाहेत्यपि बोध्यम् । 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा । तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसंभवम्' इत्युक्तेः ॥ यत्र वस्तुनि सजातीयेतरवस्तुवैलक्षण्यं श्रैष्ठ्यादि तत्र परमात्मानुग्रहविशेषो विलसतीति भावः । अत एवोक्तं 'देवानामस्मि वासवः' (गी. १०-२१) इति । 'शास्त्रदृष्ट्ये' ति सूत्रं जीवब्रह्मणोरभेदमाहेति तु भवन्मतं, नास्मन्मतम् । ततस्तन्मतीयन्यायेन तन्मतं दूष्यत इति

भवदीयनीतिभङ्गः । पूर्वमखिलं श्रुतिसूत्रादिकं भेदपरमेवेति सूत्रकारवचनजातेनैव निरूपितम् , तेनैव खण्डितमिदमपि । अतः श्रीमध्वभाष्यटीकादावुक्तमेव साधु ॥

किंच भवन्मते तावदस्याधिकरणस्य 'मामेव विजानीहि, स होवाच, प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्वे' (३-१-२) ति कौषीतिकि वाक्यं विषयवाक्यम् । इन्द्रप्रतर्दनसंवादस्तत्र, 'मां विजानीहि, मामुपास्वे' ति वाक्यस्य इन्द्रः केवलं स्वात्मानं विद्धि स्वात्मानमुपास्वेति स्वविषयकज्ञानोपासनमुपादिशदिति नार्थः । तथात्वे, हिरण्यकशिपुरिवासुरोऽयमिन्द्रः, स्वास्मिन्नीश्वरत्वधीमान् , अज्ञानी भ्रान्त एव च स्यात् । 'ईश्वरोऽहमहं भोगी, .... पतन्ति नरकेऽशुचौ' इति भगवदुक्तेः इन्द्रस्तु विवेकी कथं तथोपदिशेत् । अतः उपसंहारे - प्राणे सत्येव देहे सर्वेषां सर्वव्यापारदर्शनात् स एव साध्वसाधुकर्मकारयिता, लोकपालो, लोकाधिपः, सर्वेश्वर इति, तन्महिमवर्णनपूर्वं 'सम आत्मेति विद्यात्सम आत्मेति विद्या' दिति स्वस्य परमात्मनोऽन्तर्यामिणः प्राणस्य च, भेदं दर्शयित्वा, प्राणं परमात्मनो भेदेन जानीयात् उपासीत चेत्युपादिशदित्यर्थावगमात् । तदनुसारेणोपक्रमस्थ 'मां विजानीही' त्यादेरयमर्थो वाच्यः । मामेव=मदन्तर्यामिणमेव, विजानीहि=विद्धि, अहं=प्राणो मदन्तर्यामी, अस्मीति=अस्तीत्यर्थकं, व्यत्ययेन प्रथमस्थान उत्तम इति । अथवा - अन्तर्यामिप्राणनियमितोऽस्मि, तं मामायुरित्यादेस्तु - मां = मदन्तर्यामिणं, तं प्राणम् , आयुष्यप्रदत्वादिनोपास्वेत्यर्थः । ततश्चोपक्रमोपसंहारयोरेकविषयकत्वेनैकवाक्यता भवति । अहमपि प्राणस्योपासनयाऽन्तार्यामिणोऽनुग्रहेणैव त्वाष्ट्रवधादिपापकर्माणि कृतवानपि पापलेशलेपाभाववान् सुखमासे इति स्ववृत्तान्तकथनपूर्वं 'आयुः प्राण' इत्यादिना आध्यायसमाप्तेः प्राणमहिमातिशयमुपदिशति ।

इदमत्रावधेयम् — श्रुतीतिहासपुराणादिषु देवतासार्वभौमस्य श्रीहरेः समोऽधिकश्च कश्चन न, 'न तत्समश्चाभ्यधिकश्च दृश्यते, (श्वे. उ. ६-८) न त्वत्समोऽभ्यधिकः कुतोऽन्यः' (गी० ११-४३) इति श्रुतिस्मृत्यादिभिस्समाधिकचेतननिषेधात्, न देवतान्तराणां रुद्रादीनां श्रीहरिणा सहाऽभेदश्च न कदाप्यनुसन्धेयः, चेतनानां विभिन्नधर्माणामभेदस्य शास्त्रेऽनुक्तेरसंभवाच्च ।

ननु - 'तत्त्वमसि, अहं ब्रह्माऽस्मी' त्यादौ सामानाधिकरण्यनिर्देशेनाऽभेदसिद्धिरिति चेत्, न - 'मुखं चन्द्रः, सिंहो माणवकः, अग्निर्माणवकः, यजमानः प्रस्तरः' इत्यादाविव सादृश्यादिनाऽभेदनिर्देशोपपत्तेः चेतनैक्ये तात्पर्याभावात् अन्तर्यामिपरतया वा सुयोजः सामानाधिकरण्यव्यपदेश इति पूर्वमुक्तत्वाच्च । किंच — 'तत्त्वमसी' त्यादिवाक्यं हि फलपरं मुक्तिविषयकम् । मुक्तौ तावदस्तु अभेदः, संसारे तु भेद एवांगीकार्यस्त्वयापि । अतः - पदेपदे शिवादेर्जगत्कारणवस्तुनाऽभेदात्, हरहिरण्यगर्भयोः कारणत्वमिति भवतो वादः, 'अभेदात् जगत्कारणत्वादिधर्मा नान्यत्र संभवन्ति' इति भवदाचार्योक्तिविरुद्धः । जगत्कारणत्वलक्षणं चातिप्रसक्तं भवेत् ।

किंच - मुक्तावपि नाभेदः, यतः - 'सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिते' (तै० उ० २-१) ति ब्रह्मणा सह कामभोग उक्तो न त्वैक्यमित्युक्तमधस्तात् । तदनुसारेण 'तत्त्वमसी' त्यपि भेदमेवाह मुक्तौ ; अपहतपाप्मत्वादिना तत्सदृशोऽसीत्यर्थाच्छ्रुतेः ।

किंच - तत्, तु, अमसी' ति पदविभागः, अमसीति 'अमगत्यादि' ष्विति भ्वादौ पठितस्याऽमधातोर्लटि मध्यमपुरुषः । तद्बलात्त्वमिति लभ्यते तदिति द्वितीयैकवचनान्तं कर्मवाचकं, तुरवधारणे । अयमर्थः - हे श्वेतकेतो, त्वम्, तत् तु=सच्छब्दवाच्यं ब्रह्मैव, अमसि = प्राप्नोषीति । एतेन - मोक्षे अभेदशङ्कैव नोदेति । 'सर्व एकी भवन्ती' (मु० २-७) त्यस्य च्विप्रत्ययबलेन भेदपरत्वमेवेति प्राचार्याः स्म प्राहुः । अस्माभिश्च श्रीव्यासपाणिनिभावनिर्णये प्रपञ्चितमेतद्विस्तरेण । भाष्यकारैरितरैश्च भेदपरतयैव विवृतमधिकरणमिदम् ।

किं बहुना - उत्तरमीमांसा तावत् जीवेशयोर्भेदमेवाहेति भेरीताडनपूर्वं प्रकटयितुं पारयन्ति जनाः, यतो भवद्भाष्यकृता—'सूत्रं तु अविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्य'मिति 'त्रयाणामेवोपन्यासः प्रश्नश्च' (१-४-६ ब्र) ति सूत्रे वदन्ता शास्त्रं तावद्भेदपरमिति सूचितम् ।

किंच - तत्र तत्राऽविद्याप्रत्युपस्थापितकार्यकारणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशः, जीवेशभेदव्यपदेशोऽविद्यानिमित्तक इत्यादिशङ्कराचार्यभाषणं

श्रुत्यादौ सूत्रे च भेद एव चकास्तीति गमयति । अभेदबुद्धिर्ह्यज्ञानमनर्थहेतुरिति 'ईश्वरोऽह' (गी० १६-१४) मित्यादिनोपादिशत् भगवान्वासुदेवः, इति सुविदितं सुधियाम् ।। 'वासुदेवः सर्व' मिति गीतायास्तु सर्वं जगत, वासुदेवः, तद्धेतुकः 'आयुर्घृत' मित्यादौ हेतुकार्ययोरभेदव्यपदेशवत्, सामानाधिकरण्यनिर्देशः । 'सर्वं खल्विदं ब्रह्म' (छा. ३-१४-१.) त्यादावपि ब्रह्म सर्वमित्यस्य ब्रह्मकार्यत्वात्सर्वस्य आयुर्घृतमितिवन्निर्देशः ।

अभेदनिर्देशे हेतुमाह - तज्जलानिति, तज्जत्वात्तल्लीनत्वात् तदनत्वादिति तदर्थः । ब्रह्मत्वेन व्यपदेशे तज्जत्वादिकं हेतुरित्युक्त्वा कार्यकारणयोः सामानाधिकरण्यनिर्देश ऋषिसंप्रदायसिद्ध इति दर्शयति तद्वाक्यम् । यद्वा - सर्वं खल्विति वाक्ये खलुशब्दो निषेधार्थे, 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वे' (पा०३-४-१८.) ति सूत्र इव । 'खलुकृत्वे'त्यत्र कृतिर्नेतिवत् सर्वं ब्रह्म न, ब्रह्म सर्वं नेति वेत्यर्थः । एवंच ब्रह्मसर्वयोर्नैक्यं किंतु भेद एवेति भावः । तज्जलानित्यस्य, अर्थः पूर्ववत् । संबन्धसामान्यषष्ठ्यन्ततच्छब्दस्य जलानित्यनेन समासः, जंच लंच अन्चेति द्वन्द्वः । तस्माज्जातं, तस्मिन् लीनं, तेन चेष्टमानमिति संबन्धेनोक्तार्थलाभः । ततश्च सर्वं तज्जत्वादिविशिष्टं भिन्नमेव, न तु ब्रह्माभिन्नमिति श्रुतिहृदयम् । 'शान्त उपासीते'त्यादेः, शमदमादियुतः सन् जगत्कारणं ब्रह्मोपासीतेत्यादिरर्थः । 'यो यो देवानामित्यादे' स्त्वयमर्थः - देवादिषु योऽधिकारी तत् - ब्रह्म अहेयं गुणपूर्णं ब्रह्म प्रत्यबुध्यत, अजानात्, सः=तज्ज्ञानवान्, तदेव=तद्ब्रह्मैव अभवत् = प्राप्नोत् । छान्दसत्वात्परस्मैपदम् । सृष्टेः पूर्वं विद्यमानं गुणपूर्णमेव ब्रह्मेति ज्ञानिनः ब्रह्मप्राप्तिः फलमित्याशयः ।

'अहं मनुरभवं सूर्यश्चे'त्यपि अन्तर्यामिपरमिति टीकादौ व्याख्यातं तत एव तदर्थो ज्ञेयः । 'तदिदमप्येतर्हि य एवं वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवति' इति वाक्यस्य चाऽयमर्थः – इदनीन्तनोपि योऽधिकारी तदिदं ब्रह्म, अहेयं, ब्रह्म परिपूर्णम्, अस्तित्वेन ज्ञेयमिति वेद=जानाति, तथा आत्मानं, अहं ब्रह्मासीति = अहं ब्रह्माधीनोऽस्मीति वेद, स, इदं सर्वं भवति = स्वयोग्ययावत्फलभाक्त्वेन, पूर्णो भवतीति ।

ननु - सूत्रमिदमन्यैरन्यथा व्याख्यातमिति चेत्, व्याख्यायतां नाम यथेच्छं, किं तावता, परैरपि तदेवादर्तव्यं, नान्यथा व्याख्येयमिति किमस्ति शासिता भुवनतले ।

किं श्रीशङ्कराचार्येण वृत्तिकृन्मतं सन्दूष्याऽऽनन्दनयसूत्राणि प्रकारान्तरेण न योजितानि ?। किं श्रीरामानुजाचार्येण शाङ्करयोजनातो रीत्यन्तरेण योजना न दर्शिता ?। किं विज्ञानभिक्षुणा शाङ्करपद्धतिं परित्यज्य भङ्ग्यन्तरेण सूत्राक्षराणि न योजितानि ?। किं बहुना। भिन्नभिन्नामेव योजनां दर्शयन्ति सर्वे। सूत्राणां भेदपरतैव सूत्रकृत्संमतेति कृत्वा तथा नयनं न्याय्यमिति यथाप्रमाणं भेदपरतया नयन्ति साधवः सूत्राणीति सन्तोष्टव्यं नासूया कार्या ॥

(कौ०) यदुक्तं — 'लाघवसहकृताः श्रुतिस्मृतयः साधिका इति।

(कु०) नैतत्सहन्ते पृथक्जना अपि लोकविरुद्धत्वादिति 'अद्वैतकालानलादौ' निरूपितम्।

किंचेदमात्मनोऽत्यन्तं नास्तिकतां प्रख्यापयति, तथाहि - एवं वदता हि 'सर्वधर्मान्परित्यज्ये' (गी० १८-) ति भगवद्वचनस्य लाघवात् प्रतीयमानसर्वधर्म-परित्यागे तात्पर्यं गृहीत्वा तत्सहकृतश्रौतस्मार्तविहितनित्यनैमित्तिककर्माणि अननुष्ठाय यथेच्छं वर्तितव्यं सर्वैरित्युपदिष्टं भवति। ततश्च - 'अहरहः सन्ध्यामुपासीत,' 'विहितस्याऽननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छती' (या० स्मृ) ति श्रुतिस्मृतीतिहासपुराणादिशास्त्रेषूत्पन्नां प्राणिनां प्रामाण्यबुद्धिम्, तदुक्तधर्माऽननुष्ठाने जायेत पातित्यमिति जायमानां भीतिं च नाशयित्वा, तानन्धे तमसि पातयन्नयं ग्रन्थकृत्स्वयं चार्वाकमतप्रविष्टः, परानपि तत्र प्रवेशयति -

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ (गी० १६-९)

इति भगवदुक्तेरिति जानीयुः प्रमाणशरणा विद्वज्जनाः। अतोऽयं कौस्तुभः, कर्ता चाऽस्य, शास्त्रप्रामाण्यवित्साधुजनसद्गतिसाधनसन्मार्गपरिपन्थीति दूरतः परिहर्तव्यः कृष्णसर्प इवेति, शास्त्रतत्त्वविदः ॥

इत्यन्तिमप्राणाधिकरणम्।

इति प्रथमाध्याय–प्रथमपाद–दोषनिरासः समाप्तः।

इति प्रथमः पादः।

## सर्वत्र प्रसिद्धोपदेशात् ( १-२-१ )

(कौ०) अत्र पादे सर्वेष्वधिकरणेषु खण्डनं तु प्राग्व ' दिति वाक्येन उक्तमेव दूषणत्रयं स्मारितम् ।

(कु०) अत्रेदं प्रतिवचनम् - बाधादिदूषणत्रयमुक्तम्, हरविरिञ्चयोर्वा कर्तृत्वं युक्तमिति वाऽभिप्रायोऽस्य । आगमैकवेद्ये विष्णुकर्तृत्वे बाधादिदोषाऽसंभवः, स्वाचार्यकृतविष्णुकर्तृत्वसिद्धान्तविरुद्धं चेतीदमयुक्तं दीक्षितवचनमिति ॥

इति प्रथमाध्याय-द्वितीयपाद-दोषनिरासः समाप्तः ।

---

## द्युभ्वाद्यधिकरणविचारः

### द्युभ्वाद्यायतनं स्वशब्दात् ( १-३-१. )

' खण्डनं तु प्राग्वदि ' ति यद्दूषणं कौस्तुभे — तत्प्राक् दूषितमेव । किंचैतद्विष्णु-स्वाचार्यद्वेषमूलकमेवेति निरूपितं विस्तरेण, अतोऽसङ्गतमिति बोध्यम् ।

' अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ' (२-४)

इत्याथर्वणीयमन्त्रव्याख्याने अक्षरात्सर्वभावानामुत्पत्तिं निरूपयन् ' एष सर्वभूतान्तरात्मे ' ति मन्त्रशेषस्य ' एष देवो विष्णुरनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्वेषां भूतानामन्तरात्मे ' त्याह शङ्कराचार्योऽक्षरार्थम् । एतेन - विष्णोरेव कर्तृत्वमन्तर्यामित्वं चेति तदभिप्रायोऽवसीयते ।

एतेन - ' यत्तु सोन्तकः स रुद्र ' इत्यादिवचनमुदाहृतं, तदद्वैताऽभिप्रायकमेव । तथाचे ' त्यादिस्मृतिजातं सङ्गच्छत ' इत्यन्तो दूषणग्रन्थोऽपि खण्डितो वेदितव्यः । शङ्करकृतनारायणकारणत्वसिद्धान्तविरुद्धत्वात्, आनन्दगिरिवाचस्पतिप्रभृतिभिः एतदुदाहृतवचनेषु एकस्याप्यनुदाहरणात् । ' अद्वैताभिप्रायक ' मिति स्वमतप्रक्रियावलंबेन दूषणं तु ' परमतेनैव दूष्यत ' इति स्वोक्तिविरुद्धम् ॥

(कौ०) यदत्र शिवोत्कर्षप्रतिपादकभागवतवचनोदाहरणं,

(कु०) तदपि समाहितमेव । नृलोकमवतीर्णस्य भगवतो विष्णोर्मानवाचारं

विडंबयतः पशुपत्यादेर्यशोभिवृद्धय आचार्यवन्दनादिवत् अभिनयमात्रं भवाद्यर्चनमिति ब्रह्मवादिनामभिप्रायात् । अत एवोक्तं भागवते — ७-१०-७१

' एवं विधान्यस्य हरेः स्वमायया विडंबमानस्य नृलोकमात्मनः ।
वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदाम किम् ॥ इति ।

(कौ०) यच्चोदाहृतं (भाग० ४-६-७) एतत् ब्रह्मवाक्यं—

' नाहं न यज्ञो नच यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ।
विदुः प्रमाणं बलवीर्ययोर्वा यस्यात्मतन्त्रस्य क उपायं विधित्सेत् ॥

(कु०) इतीदं भागवतवचनोदाहरणं तत्प्रकरणाभिप्रायाऽनवबोधमूलकम्, प्रलोभार्थं वा । दक्षापराधजातकोपस्य शिवस्य कोपशामकप्रशंसाप्रकरणस्थं श्लोकद्वयम् । तत्र स्वपित्रा दक्षेण करिष्यमाणाश्वमेधदिदृक्षया पितृगेहं गतायाः सत्यास्तत्र स्वभर्तुश्शिवस्य हविर्भागाऽदानेन, स्वपितृकृतभर्तृपरिभवमसहमानाया अग्निप्रवेशवार्तां श्रुत्वा जातकोपो रुद्रः तदध्वरं नाशयन्नपि, अशान्तकोपोऽगमत्स्वावासं कैलासम् । ततो जातखेदैः सुरगणैस्तं शमयितुमसमर्थैः प्रार्थितो ब्रह्मा साकं तैः, कैलासशिखरे समाधौ स्थितं रुद्रं सान्त्वयितुं जगाम । ब्रह्मणा सह समागताः सर्वे देवाः समाधिस्थं रुद्रं प्रणेमुः । ततस्सुरबृन्दवन्दितचरणो रुद्रः सहसोत्थाय सन्निहितं तातपादं चतुर्मुखं संप्रणम्य तदनुज्ञयोपविष्टः पित्रा मञ्जुभाषणैः सान्त्वितः प्रसन्नचेताः, तेन सहाऽऽगत्याध्वरदेशं, दक्षादीनुज्जीव्य, दक्षाध्वरं साङ्गं कारयित्वा, दक्षकृतवैष्णवयागेन मध्येसभं प्रादुर्भूतं प्रसन्नं सपरिवारं हरिं प्रणम्य,

' तव वरद वराङ्घ्रावाशिषेहाऽखिलार्थे
ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ।
यदि रचितधियं माऽविद्यलोकोऽपविद्धं
जपति न गणये तत्त्वत्पराऽनुग्रहेण ॥ (भाग० ४-७-२९)

इति तुष्टाव । अस्यायमर्थः — अविवेकिनो जना मां यथेच्छं निन्दन्तु न तानहं क्रोशामि, मम जातमिदं सहनमपि भवदनुग्रहेणैवेति मन्ये, इति ।

एवञ्च — परोदाहृतश्लोकघटितभागवतसन्दर्भो रुद्रस्तुतिपरो, न तस्य सर्वातिशयं बोधयति । यतस्तत्प्रकरण एव मदपेक्षयोत्तमं वस्तु नारायणाख्यं जगत्कारणभूतमस्तीत्यभिप्रायेण हरिनमनमकरोच्छिव इति प्रकरणार्थः । अतस्स सन्दर्भो हरेः श्रीपतेरेव सर्वोत्कर्षं बोधयन् शिवस्य तद्दासतां द्रढयति ॥

(कौ०) यदपि भागवतश्लोकोदाहरणं शिवोत्कर्षे —(८-७ ३१)

न ते गिरित्राखिललोकपाल विरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्वं न यद्ब्रह्म निरस्तभेदम् ॥ इति—

(कु०) तदपि न तस्याभीष्टसाधकम् । यतः प्रजानां स्वस्तये कर्म कुर्वतां प्राणिनां विषये सर्वेश्वरो भगवान् हरिः प्रसन्नो भवति । तस्मिंश्च हरौ प्रसन्ने समस्तः प्रपञ्चोऽहं च प्रीतिमन्तौ भवावः । हरेरनुग्रहलाभायैवाहमिमं हलाहलं पिबामीति गिरिजां प्रति शिववचनात्, हरेः सर्वेश्वरत्वं स्वस्य तद्दासवर्गीयत्वं च द्रढयति तत्प्रकरणम् । 'न ते' इति वचनं तु शिवगतसामर्थ्यं सर्वविदितमित्येव तात्पर्यकम् । 'त्वमेकः सर्वजगत' (८-७-२२) इत्यादि तु स्तुतिपरं, हर्यायत्तेश्वरत्वादिकं शिवेऽस्तीत्येव प्रकरणाभिप्रायः । तत्रैते श्लोकाः —

'पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥
तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥ ८-७-४० ॥

एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ।
तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥

परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥ इति ॥

इयं विषपानक्रिया प्रजाक्षेमहेतुत्वात् भगवतो महापुरुषस्याऽऽराधनरूपैवेति शिवस्यानुसन्धानं, शिव आराधको विष्णुराराध्यः, विष्णुरेवोत्कृष्टः, अहं तदवर इति सर्वैरनुसन्धेयमिति शिवाभिप्रायः । इत्यष्टमस्कन्धप्रघट्टकार्थः ।

एतेनैव शिववचनेन 'काशीखण्डे चतुर्भुजाऽभिषेकाध्याये स्पष्ट एव शिवोत्कर्ष इत्यादिः, कर्मविपाकस्मृतिजातं सङ्गच्छत' इत्यन्तशिशवोत्कर्षपर उपरितनो ग्रन्थः प्रत्युक्तः । शिवोत्कर्षवचनानां सर्वेषां परमेश्वराधीनोत्कर्षपरत्वं 'प्राणव्यापारस्य परमेश्वरायत्तत्व' मिति शङ्कराचार्यदर्शितरीत्येति वक्तुं शक्यत्वात् । अत एव नारायणस्यैव कर्तृत्वसिद्धान्तः शङ्कराचार्यकृतो न व्याकुप्यति । आनुशासनिकपर्वगतोपमन्यूपाख्यानमपि लोके शिवस्य पूज्यतासंपादकं, न तु हर्यपेक्षया शिवोत्कर्षतात्पर्यकम् ॥

(कौ०) यदुक्तं — यत्तु 'अन्यमीशमिति भेदे प्रमाणमुपन्यस्तं, तत्र — त्वद्रीत्या अन्योन्तर इतिवदुपपत्तेः, अस्माकं तु व्यावहारिकं प्रामाण्यं भेदे । तत्त्वावेदनरूपं तु ब्रह्मण्येवेत्यभ्युपगमात् इति —

(कु०) तदतीव तुच्छम्—अन्नमयादीनां पञ्चानामपि ब्रह्मत्वाभ्युपगमात्, तत्र परस्परं भेदोक्तेरचिन्त्यशक्त्या निर्वाह इत्युक्तम् । अत्र तु जीवेशयोर्भेदनिरूपणाय प्रवृत्तेषु 'द्वा सुपर्णा सयुजे' (मु० ३ २) त्यादिष्वाद्येन 'द्वा सुपर्णे'-त्यनेन जीवस्य कर्मफलभोक्तृत्वं, परस्य जीवप्रेरकत्वं च प्रतिपाद्य, 'समाने वृक्ष', 'यदा पश्य' इति द्वाभ्यां स्वप्रेरकेशमहिमज्ञानवतो जीवस्य मोक्षप्राप्तिमाह वेदपुरुषः । अत्र 'साम्यमुपैती' त्युक्तेः,

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' (गी० १४-२)

इति सारूप्यलक्षणो मोक्षः, मुक्तावपि जीवब्रह्मणोर्भेदश्च शास्त्रसंमतः पारमार्थिक इति बोध्यते । निरूपितमिदमप्यधस्तात् ।

अतोऽत्राऽन्यत्वनिर्वाहस्सुकरः । तस्मात् 'अन्योन्तर आत्मेत्यादिव'-दित्युक्तिः प्रकरणद्वयाविमर्शमूलिका । 'अन्योऽन्तर आत्मे' त्यादिपञ्चस्वपि वाक्येषु श्रुतात्मशब्देन 'आत्मन आकाश' इत्यत्रात्मपदपरामृष्टब्रह्मपरामर्शस्य न्याय्यत्वात्, वल्लीद्वयान्तश्श्रुतोपसंक्रमवाक्येऽन्नमयादीनामात्मशब्दसामानाधिकरण्योक्तेः, 'प्राणं देवा अनुप्राणन्ति', 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते' (ब्र १-४-१५) रिति श्रुतिसूत्रभाष्ये भवदाचार्यैः आकाशादिपरंपरया वाय्वादावपि

आत्मनोऽनुप्रवेशोक्तेः, अवश्यं तत्राऽन्नमयादिवाक्यपञ्चकं ब्रह्मपरमपि। अन्यथा सर्वेषां ब्रह्मकारणकत्वाभावेन कर्तरि विगानं स्यात्। सर्वगस्य तु ब्रह्मणोऽनन्यत्वं तावत्—'सर्वभूतेषु येनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विक' (गी० १८·२०)मित्यादिप्रमाणसिद्धम्। अतस्तत्राऽन्यत्वोक्तिरचिन्त्यशक्त्या निर्वाह्या। निर्णीतोऽयमर्थो भगवता बादरायणेन—

अनन्योप्यन्यशब्देन तथैको बहुरूपवान्।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः ॥ इति ॥

ऐश्वर्योपलक्षिताऽचिन्त्याद्भुतशक्त्या अनन्यत्वेपि अन्यत्वादिकमुपपद्यत इति वचनार्थः।

अत्रापि ब्रह्ममीमांसायां समर्थितोऽयमर्थस्सूत्रकृता—"श्रुतेस्तु शब्दमूलत्वात्, आत्मनि चैवं विचित्राश्च हि, सर्वोपेता च तद्दर्शनात्, सर्वधर्मोपपत्तेश्चे"ति सूत्रैः। लोकेऽसामानाधिकरण्येन प्रतीयमानानामणुत्वमहत्वादीनां संभवति समावेशे अचिन्त्यशक्त्यानिर्वाह इत्येषामर्थः। भवदीयभाष्यकारादिभिः स्पष्टीकृतोऽयमर्थस्सहेतुकं तत्रैव। तेन च शब्दप्रमाणकेषु भावेषु तत्रापि परस्मिन् ब्रह्मणि यथाप्रमाणं सर्वमङ्गीकार्यं, न तत्र चोदनीयमिति सिद्धम्। सर्वेषामप्याचार्याणां सिद्धान्तोऽप्येवमेव। जीवेशभेदनिरूपणप्रकरणगत-'जुष्टं यदा पश्यत्यन्यमीश' मित्यत्र, जीवेशभेदस्य स्पष्टं प्रतीतेः। स्वपरभाष्याद्यपर्यालोचनयैव प्रलपन्ति यथेच्छं दीक्षितादयः॥

(कौ०) अस्माकं तु व्यावहारिके भेदे प्रामाण्यं, तत्त्वावेदनरूपं तु ब्रह्मण्येवेति यदुक्तम्—(कु १) तदिदमत्यन्तमयुक्तमिति पदार्थेषु व्यावहारिकत्वादिकल्पनमेवाऽप्रामाणिकमिति निरूपितमधस्तात्। स्वमतनिरूपणमत्र, 'माध्वमतदूषणमात्रार्थं प्रवृत्तेऽत्र शङ्करकृतयोजना न प्रदर्श्यत'इति आनन्दमयाधिकरणान्तोक्तस्ववचनविरुद्धम्।

किञ्च अत्र नये—'प्राणभृच्च'(१·३-४)त्यनेन विज्ञानात्मनो (जीवस्य) द्युभ्वाद्यायतनत्वं प्रतिषिध्य तत्र हेतुत्वाकांक्षायां 'भेदव्यपदेशात्' (१·३-५) इत्यनेन जीवेशयोर्भेदो हेतुरुक्तः। सूत्रकृता, तत्र 'तमेवैकं जानथ आत्मानं, जुष्टं यदा पश्यत्यन्यमीश' मित्यादिश्रुतिवाक्येषु च भेदबोधकेषु व्यावहारिकपदाश्रवणात्

भेदस्याऽस्य श्रौतस्य व्यावहारिकत्वं कथं शक्यं वक्तुम्। ततश्च श्रुतिसूत्राद्यनभिमतमेव जीवेशैक्यं वदन्त्यद्वैतिन इति सुधियो विभावयन्तु ॥

( इति द्युभ्वाद्यधिकरणविचारः )

यच्च—भूमाधिकरणमारभ्य, अनुकृत्यधिकरणान्ते 'खण्डनन्तुपूर्ववदि'त्युक्तम्,—तत् पूर्वोक्तरीत्या खण्डितं बोध्यम् ॥

## वामनाधिकरणविचारः

शब्दादेव प्रमितः (१-३-२४)

यत्तूक्तं 'गर्भस्रावेण गत' इत्यनूद्य, श्रुत्याद्यपरिशीलनप्रयुक्तमिदं, खण्डितं समन्वयाधिकरणद्युभ्वाद्यधिकरणयोरिति—एतत्तत्रैव दूषितमस्माभिः ॥

(कौ०) यच्चात्र—'कुविदङ्गे'ति मन्त्रस्य रुद्रपरतया व्याख्यानं—

(कु०) तदपि न—भवता भवदीयैश्चोक्त एव वेदार्थो न्याय्य इत्यत्र विनिगमकाभावात्। किञ्च—वायोर्हविर्दाने वायुमेव नमस्कारादिनाऽस्तुवन्निति व्याख्यातेयमृक् सायणे। वेदवेदान्तपरिशीलनमकृत्वा स्वेच्छामात्रेणोत्प्रेक्षितोऽयमर्थो भवता ॥ 'तृतीया कर्मणी' (पा० ६-२ ४६)ति स्वराऽऽपादनमयुक्तम्, 'छन्दसि सर्वे विधयो विकल्प्यन्त' इतिन्यायेन तदप्रवृत्तेः। पृषोदरादित्वेनेष्टस्वरसिद्धेः। सायणेन बहुषु स्थलेषु पृषोदरादिसूत्रेण स्वरसाधनात्। सीमन्तः, मनीषेत्यादाविव 'शकन्ध्वादित्वात् पररूपप्रवृत्तेः सवर्णदीर्घाप्रसङ्गात् ॥

(कौ०) यत्तूपक्रमस्थेशानश्रुतेर्वामनश्रुत्यपेक्षया प्राबल्यादित्यभिधाय प्रमाणतया 'असञ्जातविरोधित्वादि'ति भट्टपादकारिकोदाहरणम्, (कु०) तदप्ययुक्तं, तद्वचनस्य प्रामाण्य एव सन्देहात्। यतो भवतां खलु भट्टपादचरणौ शरणं, न परेषाम्। वैयाकरणैर्बहुषु स्थलेषु 'सूत्रभाष्ये शेषे एवमभिधानात्तदनुसारेण एवं व्यवस्था बोध्या, भाष्यशेषस्य व्याख्यानरूपत्वेन प्राबल्यात्' इत्यादिवदद्भिरुपसंहारस्यैव बलवत्त्वाऽङ्गीकारात्। उपक्रमोपसंहारयोः समानविषयकत्वौचित्येन वामनशब्दस्य भगवन्नारायणपञ्चमावतारपरतया सुप्रसिद्धत्वेन, प्रकृतवाक्ये तत्पदवाच्यस्य सन्निहितदेवोपास्यत्वकथनेन च, ईशानशब्दस्य योगेनेशनकर्त्रर्थकस्य, वामनविशेषणत्वकल्पनस्यैव युक्तत्वात् ॥

ननु— चतुर्थवल्ल्यां श्रुतेशानश्रुते रुद्र एव जगत्कारणमिति चेत्, ' आदिकर्ता नारायण ' इत्यादिशाङ्करवचनानुसारेण, तुर्यकठवल्ल्यां श्रुतेशानपदस्येशनशीलार्थकत्वेन शाङ्करभाष्ये व्याख्यानेन, (बृ० ५) अन्तर्यामिब्राह्मणे शाङ्करभाष्येऽन्तर्यामी नारायण इत्याभिहितत्वेन, च ' ईशानो भूतभव्यस्ये '(क० ४-१२-१३)ति मन्त्रद्वयगतस्याऽपीशानपदस्य रुद्रपरत्वाभावात् । ' ईशानश्रुतेर्बलवत्वा ' दित्ययुक्तम् । अत्र शाङ्करे तथाऽनुक्तेश्च । अतः पामरव्यामोहकं शब्दजालमात्रम् । शङ्कराचार्यैरपि तत्र तत्र उपसंहारस्य बलवत्त्वमाश्रित्य प्रमेयव्यवस्था कृता । तथाहि—

' प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्ते ' (३-१-५) रित्यत्र - ' वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' (छा० ५-३-३) इत्युक्तिः कथं समर्थयितुं पार्यते, प्रथमाग्नौ हूयमानायाः श्रद्धाया अप्त्वाभावादित्याशंक्य ' इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती ' (छा० ५-१-९-१) ति चोपसंहरन्, एतदेव दर्शयति श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवदब्बहुलं लक्ष्यते । सा च श्रद्धाया अप्त्वे युक्तिः ; ' वाक्यान्वया ' (१-४-४) दित्यधिकरण उपक्रमसामर्थ्याद्विज्ञानमयोपदेश इत्याक्षिप्य, ' आत्मनस्तु कामाय सर्वं प्रियं भवति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि, आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित ' (बृ० ४-५-६) मित्यादिना मैत्रेय्या अमृतत्वायोपदेशात् परमात्मोपदेश एव । ' ब्रह्म तं परादा ' (-७) दित्याद्युत्तरेणैतमेवार्थं प्रतिपादयति, ' उभयव्यामोहात्तत्सिद्धि ' (४-३-५) रिति सूत्रे ॥ अपि चोपक्रमे—' तेऽर्चिरभिसंभवन्ति ' (बृ० ६-२-१५) इति संबन्धमात्रमुक्तं न संबन्धविशेषः कश्चित् । उपसंहारे तु— स एतान् ब्रह्म गमयती (छा० ४-१५-६) ति संबन्धविशेषोऽतिवाह्याऽतिवाहकत्वलक्षण उक्तः । तेन स एवोपक्रमेपीति निर्धार्यत ' इति वदता, उपक्रमोपसंहारयोस्समावेशे प्रथमस्य दौर्बल्यमुपसंहारस्य प्राबल्यं दर्शितम् ।

' अधिकोपदेशात्तु बादरायणस्यैव तद्दर्शनात ' इति सूत्रे—' य एषोऽन्तरक्षिणि पुरुषो दृश्यते ' (छा० १-७-५) इत्युपक्रम्य ' एतं त्वेव ते भूयोऽनुव्याख्यास्यामी ' (छा० ८-९-३)ति चैवमादि, तदपि— ........' परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः ' (छा० ८-१२-३) इत्येवमादिभिर्वाक्यशेषैः ' इत्यादिना

वाक्यशेषभूतोपसंहारस्यैव बलवत्त्वमुक्तम् । एतेन—मीमांसकंमन्यमानानामभिमतं सर्वमन्यैः शरणीकर्तव्यमिति न नियम इति सूचितम् ।

अर्वाचीनास्त्वद्वैतिनः केचन स्वाचार्याभिप्रायमज्ञात्वैवोपक्रमपराक्रमादिकं ग्रन्थाभासं रचयन्त आत्मानं मीमांसकंमन्या विद्वद्गोष्ठीषु विजृम्भन्ते । अतोऽस्मदाचार्योक्तमुपक्रमादिषु परबलीयस्त्वं युक्तमेव । निरूपितं चैतत् समन्वय - वामननयाधिकरणयोश्चन्द्रिकादिषु, तर्कताण्डवे द्वितीयपरिच्छेदान्ते च, मीमांसकोक्तोपक्रमप्राबल्यभङ्गादारभ्य (७९) आपरिच्छेदसमाप्तेर्विस्तरेण । तत्रैवाभ्यासादीनां, श्रुत्यादीनां च, स्वरूपोदाहरणानि च अस्मदाचार्योक्तान्येव साधूनि, मीमांसकैरप्यङ्गीकर्तव्यानि, जैमिन्याचार्याणां हार्दं भावं सम्यगविदित्वैव भट्टपादप्रभृतिभिर्जैमिनीया न्याया अन्यथा व्याख्याता इति निरूपितम् । विस्तरभिया नेह प्रतन्यते ।

एतेन - यत् ' माध्वमते ' त्वित्यादिना ' मीमांसादर्शिना ' मित्यन्तेन उपसंहारादीनामुत्तरोत्तरबलीयस्त्वं श्रुत्यादिलक्षणस्वरूपं भगवत्पादोक्तमनूद्य दूषणं, तत्परास्तम् ।

न्यायवैशेषिकादिमतन्तु ' महद्दीर्घवद्वे ' (ब्र० २-२-११) त्यादिना सूत्रकृतैव निराकृतमिति स्पष्टं सर्वेषाम् । निराकारि च विस्तरेण मीमांसकादिमतं सोपन्यासं शङ्कराचार्यप्रभृतिभिर्ब्रह्ममीमांसकैः । सर्वथा नादर्तव्यं पूर्वमीमांसकादिमतं श्रौतसिद्धान्तविरुद्धत्वादिति प्रतिपादनाय खलु ब्रह्ममीमांसा प्रवर्तिता भगवता सूत्रकृता । सूत्रकृदभिप्रायमाविष्कुर्वतामाचार्याणां सूत्रकृत्पराहतमतविरोधः प्रतिपदं कथमापाद्यते भट्टोजिनेति चिन्त्यताम् । एतेन—स्वाचार्या एव दूषिता भवेयुरित्यबुध्वा मतान्तरदूषणे प्रवृत्तोऽनभिज्ञशिखामणिरिति शास्त्रमर्मवेदिनः ॥

(कौ०) यदुक्तं—'न केवलमिहैवेत्थं, किन्तु - स्वद्भाष्याऽनुव्याख्यानतत्वप्रकाशिकासुधासु, प्रायेण मीमांसकमर्यादोल्लङ्घनेन व्यवहारः ' तन्मत ' मिति अन्यथाऽनुवादश्च दृश्यते । तथाहि -' द्वादशाहवदुभयविधं बादरायणोऽत '(ब्र० ४-४-१२) इत्यादिना, ' मीमांसाऽनवबोधमूलकं बहु मध्वाचार्यादिभिर्व्यवहृत ' मित्यन्तेन दूषणजातम् ।

(कु०) इदमप्पय्यदीक्षितकृत्यक्षरानुभाषणं तद्दीक्षितकृतिखण्डनाद्वैतकालानलादिभिरक्षरशो दूषितं भवतीति न पृथग्यत्न आस्थितः । किञ्च—पूर्वतन्त्रसिद्धान्त-

निराकरणपरसूत्रप्रणेतुर्भगवतो बादरायणस्य सूत्रकाराशयानुसारेण व्याकुर्वतां भाष्यकृतां चाभिप्रायमजानतो भाषणम् । यतः तत्सिद्धान्तदूषणेनैव तदनुकूला तन्मर्यादापि सूत्रकारादिभिरेव दूषिता भवति । विनियुक्तविनियोगोऽस्तीति मीमांसकाः । स नेति केचिद्वेदान्तिनः ।

किंच - ' पुरुषार्थोऽत ' (३-४-१) इत्यधिकरणीयाद्यसूत्रेण ब्रह्मविद्यायाः स्वातन्त्र्येण मोक्षलक्षणपुरुषार्थफलकत्वं सिद्धान्तयित्वा, तस्याः कर्माङ्गत्वमिति जैमिनीयानां मतमाशङ्क्य, सविस्तरं निराकृतं शेषत्वा ' (३-४-२) दिसूत्रैः सूत्रकृता । भाष्यकारा अपि विद्यायाः कर्माङ्गत्वमतनिराकरणपरतयैव सूत्राणि व्याकुर्वन् ॥

(कौ०) ईशानशब्दो योगेनेशितृपरो न तु शिवे रूढिमानिति वैष्णवीयशङ्कामनूद्य, वामनशब्दोऽपि ह्रस्वत्वपरो न तु विष्णौ रूढिमानिति त्वदभिमतश्रुतेरपि हानिप्रसङ्गादिति यदुक्तम्—

(कु०) समाहितमेतत्पूर्वमेव । ईशानशब्दस्येशनशीलत्वार्थकत्वेनैव त्वदीयैर्व्याख्यातत्वेन शिवपरत्वस्य वक्तुमशक्यत्वादित्यादिना । ' आदिकर्ता नारायण ' इति भवदाचार्यभाष्यविरुद्धं च तथा कल्पनमिति जानीहि ॥

(कौ०) यच्चोक्तं – ' अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती ' त्यत्र महावाक्यभेद एव दूषणं, न तु अवान्तरवाक्यभेद इति तदस्माकमपि समानम् । न च प्रसिद्धमीमांसकमतेऽत्रावान्तरवाक्यभेदोऽस्ति, क्रयभावनाया एव विधेयत्वेन ' अप्राप्ते तु विधीयेरन् (विधीयन्ते) बहवोऽप्येकयत्नत ' इत्युक्तरीत्या, आरुण्यादिविशिष्टक्रयभावनारूपक्रियैक्येन पदैकवाक्यताया एव तैस्स्वीकारादिति दूषणम् —

(कु०) अत्र वदामः – ' प्रसिद्धमीमांसके ' त्युक्तिरसङ्गता, जैमिनेरेकस्यैव मीमांसकत्वेन प्रसिद्धेस्तत्र प्रसिद्ध्यप्रसिद्ध्ययोगात् । न च—तेन व्याख्यातारो विवक्षिता इति वाच्यम्—तथा विवक्षाया दुःशकत्वात्, तेष्वयं प्रसिद्धोऽयमप्रसिद्ध इति विवक्षितुं निर्णेतुं को वा समर्थो भवेत् । एकेन प्रसिद्धत्वेन विवक्षितोऽन्यस्याऽप्रसिद्ध एव स्यात् ।

किंच - प्रसिद्ध्यप्रसिद्धिप्रयोजको धर्मः कः, तत्र कः पक्षः सूत्रकृदभिमत इति पर्यनुयोगे कः समाधाता । मीमांसकमतप्रक्रियां सम्यगनालोच्याऽभिहितमनेनेदं

दूषणम् । तथाहि - सर्वेषां कारकाणां क्रियायामन्वयस्तन्मते, 'क्रियान्वयित्वं कारकत्व' मिति तत्सिद्धान्तात् । अरुणयेत्यादितृतीयान्तत्रयं क्रयभावनायां करणत्वेनाऽन्वेतीति परमसिद्धान्तस्तेषां, अतोऽरुणादिपदेभ्यस्तृतीयोत्पत्तिः । न तत्र विप्रतिपत्तिः ।

तत्र पार्थसारथिमिश्रादिभिः संशयपूर्वपक्षनिरूपणावसरे, आरुण्यस्यान्वयस्थलप्रदर्शने विवदमानैरतिक्लेशेन एकहायनीपदलभ्येऽर्थेऽन्वयो निर्णीतः, तथा निर्णयश्चाऽवान्तरवाक्यभेदमन्तरा न शक्यः । स्पष्टमिदं शास्त्रदीपिकादिग्रन्थदर्शिनाम् ।

तन्त्रवार्तिकेऽपि — अरुणाधिकरणे 'कांस्यभोजि' न्यायेन वाऽमुख्योप्यनियमं वारयेत्, किमुत मुख्य एव सन्, न वाऽश्रुतकल्पनया विनाऽनुपपत्तिः, श्रुतयोरेव परस्परसंबन्धेन परिपूर्णत्वात् । एवंच स्ववाक्यगतमपि सामानाधिकरण्यं समर्थितं भविष्यतीत्यनेन स्फुटीकृतोऽयमर्थः । यत् श्रुतमहावाक्य एवाऽवान्तरवाक्यभेद इति । अथवा - पश्चात्तनावान्तरवाक्यभेदाऽभिप्रायेणेदम् । तत्प्रकारश्च खण्डदेवकृतभाट्टदीपिकायां (जै० ३-१-६-अ०) स्पष्टं निरूपितः । स एव ग्रन्थो लिख्यते सुबोधाय "न योग्यताज्ञानं शाब्दबोधहेतुः, किंतु - अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम्", अतः - प्रतिबन्धकाभावसत्त्वे । यद्वा - निरुक्तवार्तिकसोमनाथीयरीत्याऽभ्युच्चयमात्रपरत्वाऽभ्युपगमेऽपि प्राभाकरमतेऽन्वितपदात्मकं हि वाक्यं, तच्च कथं नाऽन्वये भिन्ने भिद्येते' त्यादि तद्ग्रन्थपर्यालोचनयाऽन्वये भिन्ने वाक्यं भिद्यत इति नियमस्याऽङ्गीकृतत्वात्, तन्मताभिप्रायेणेदम् ।

अथवा — विशिष्टविधिपक्षे भामत्युक्तप्रकारेण वाक्यभेदलक्षणदोषस्य दुर्वारतया मीमांसकैरपि अवान्तरवाक्यभेदस्याऽदूषणत्वस्याऽभ्युपगम्यत्वात् । तथाहि— भामत्यां देवताधिकरणे (ब्र० सू० १-३-३) 'तथा सति अनधिगतविग्रहादिप्रतिपादयद्वाक्यं भिद्येतेति चेत्, अद्धा - भिन्नमेवैतद्वाक्यम्, तथा सति तात्पर्यभेदोऽपीति चेत्, न - द्वारतोऽपि तदवगतौ तात्पर्यान्तरकल्पनाऽयोगादित्यादि ।

आरुण्यस्यापि क्रियान्वयबोधोपपत्तेः, पश्चाच्च योग्यतागवेषणायामारुण्यस्य पार्ष्टिकद्रव्यसम्बन्धबोधोपपत्तेर्न ततो विच्छेदाऽऽशङ्का । अत एव — प्रथमतः सोमक्रयारुण्यादिसकलकारकविशिष्टभावनाविधानोत्तरं क्रयस्य सोमसंबन्धवेलायामा-

रुण्यादित्रिकस्य मत्वर्थलक्षणया क्रयसंबन्धावगतौ पश्चाद्विशेषणविधित्वकल्पनया तेषां क्रयाङ्गत्वावगमे जाते पश्चात्परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्टिकोऽरुणैकहायन्योः परस्परं विशेषणविशेष्यभावमात्रेण संबन्धो, द्रव्यविशेषसम्बन्धश्चेति द्रष्टव्यम् । ततश्च युक्तं क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य, न तु वासःप्रभृतिषु क्रयद्रव्यान्तरेषु" इति ।

अनभिहिते (पा० सू. २-३-१) इति सूत्रीय-'अथवा—कटोऽपि कर्म, भीष्मादयोऽपि, तत्र 'कर्मणी'त्येव सिद्धम्, तत्र करोति क्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः, पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभावः' इति भाष्यकैयटाभ्यामारुण्यादीनां त्रयाणां क्रयभावनायामन्वयोत्तरं पुनर्वाक्यभेदेन आरुण्यस्यैकहायनीपदार्थे विशेषणविशेष्यभावेन संबन्धो वाच्य इति लभ्यते । स्पष्टीकृतोऽयमर्थ उद्योते—'तत्र—पश्चान्मानसबोधविषयो विशेषणविशेष्यभाव इति न, तथा कल्पने मानाभावात् । निष्पन्ने च वाक्यार्थे शान्तायामाकाङ्क्षायां पार्ष्णिकबोधोदयस्याऽप्रसक्तेः । एकहायनीपदोपस्थाप्ये आरुण्यस्याऽन्वयार्थं वाक्यभेदस्तैः कल्पनीय एवेति ध्येयमित्युक्तम् ॥

(कौ०) 'तदुपर्यपि बादरायणः संभवात्' (१-३-२५) इत्यादिदेवताधिकरणे 'उपास्यस्य ब्रह्मत्वं नास्तीति सामान्यखण्डनम्' इति यदुक्तं, तदधस्तादेव खण्डितम् । 'मोक्षे तारतम्यं च दूषयिष्यत' इत्युक्तिस्तु प्रमाणविरुद्धा ।

'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णाति विना मत्सेवनं जनाः' ॥ (भाग. ३-२९-१३)

इति वैराग्यभक्तिज्ञानफलस्य बहुविधत्वोक्तेर्नान्तरीयकतया तारतम्यसिद्धेः ।

किञ्च—देवानां यज्ञाधिकारोऽस्तीति तु—

'यतो विधिनिषेधेषु मनुष्याणामधिक्रिया ।
अतः पशुपिशाचाद्या धर्माऽधर्मोपरा मताः' ॥

इति पाद्मवचनविरुद्धम्, न्यायविरुद्धं चेति यत्प्रलपितम्—

(कु०) तदेतत्-इतिहासपुराणाद्यविमर्शमूलकम्। भारते-(शां० २८८ अ०) 'सोऽश्वमेधमकल्पयत्, (५८) शुद्धिं तु हयमेधेन लब्धवान्' (५९) इति, द्रोणपर्वणि —'तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत्।

मामेव यजतां शक्रः पावयिष्यामि वज्रिणम्।
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ १४ ॥

यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः।
तत्राऽश्वमेधः सुमहान्महेन्द्रस्य महात्मनः ॥

ववृते पावनार्थं वै ब्रह्महत्यापहो नृपः (१३-१८) इति।

भागवते — 'तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत।
यथावद्दीक्षयांचक्रुः पुरुषाराधनेन ह ॥ ६-१३-१८ ॥

अथेज्यमाने पुरुषे सर्वदेवमयात्मनि।
अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिनि ॥ १९ ॥

इत्यादिना 'महेन्द्रो विश्वरूपवृत्रासुरवधजनितब्रह्महत्यादोषात् विनिर्मुक्तोऽश्वमेधेने'ति कथनात्, देवानां यज्ञाधिकारसद्भावावगमात्। न्यायविरुद्धं चेत्येतत्तु अविद्वच्छिरोमणिवचनं, यतः 'न हि वाचनिकेऽर्थे युक्तिः प्रभवती'ति तन्त्रविदां सिद्धान्तात्।

'यतो विधिनिषेधेषु मनुष्याणामधिक्रिया।
अतः पशुपिशाचाद्या धर्माऽधर्मोवरा मताः' ॥

इति पाद्मवचने मनुष्यपदं भक्तियुतचेतनोपलक्षणमिति भारतादिवचनाऽविरोधः, अतो न देवव्यावर्तकम्। 'मौनवदितरेषा' (ब्र०३-४-४८) मिति सूत्रे देवेष्वपि वर्णाश्रमविभागस्य भाष्यकृदुदाहृतदेवा एव ब्रह्मचारिण' इत्यादि श्रुतिसिद्धत्वात्, आधानादेव तेषामग्निसिद्धेः। किञ्चेदं—तन्मतसिद्धादेव तन्मतं दूष्यत इति स्वप्रतिज्ञाविरुद्धम्। तिर्यग्विशेषस्य वेदविद्याधिकारोऽस्त्येवेति मञ्जूषायां विधिवादे सप्रमाणं समर्थितं, 'एतेन—तिर्यग्विशेषा अपि व्याख्याता' इत्युक्तिरपि परास्ता।

व्यासवाक्येऽविश्वासस्य, ब्रह्मज्ञानाय मार्कण्डेयं शरणं गतस्य, जैमिनेः अधि-विध्यमधिवसतः चतुरः पक्षिणो गच्छ ; ते तव उपदिशन्तीति मार्कण्डेयजैमिनिसंवाद-निरूपणपूर्वं जैमिन्यादीनामीश्वरादिसाधकश्रुत्यादीनामप्रामाण्यवादिनेति मञ्जूषायां विधिवादे निरूपितमिति अस्मदीय "व्यासपाणिनिभावनिर्णये" ईश्वरस्य सर्वदेवता-स्वरूपत्ववादनिरासे (पु० २५) विस्तृतम् ।

एतेन—अत एव गावो वा एतदित्यादीनां गुणोर्थवादतेति शास्त्रकृतां निर्भर' इत्युक्तिरपि दूषिता ज्ञेया । तिर्यगादीनां वेदाधिकारसद्भावस्य व्याससंमतत्वात् । गवाद्यभिमानिदेवतापरत्वेनोपपत्तौ अर्थवादताकल्पनाऽयोगात् ॥

(कौ०) यदुक्तं 'प्रवाहनित्यता तु त्वया दुरुपपादा, जातेः प्रतिव्यक्ति भेदस्य, व्यक्त्या सहाऽत्यन्ताभेदस्य च, स्वीकारात्' इति—

(कु०) तदतितुच्छम् — प्रवाहनित्यताया न जातिनिमित्तकत्वं, किंतु समानाकृतिकव्यक्तिनिमित्तकत्वमिति स्वीकारात् ॥

इति वामनाधिकरणविचारः

---

## आकाशाधिकरणविचारः

आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१-३-४१)

(कौ०) अत्र निर्वहितृत्वमित्यादिर्माध्वग्रन्थेषु अपशब्द इति यदुक्तं—

(कु०) तदपि शब्ददोषोद्धारावसरेऽत्र परिहृतं विस्तरेण । किञ्च—व्याकरण-शास्त्रमर्यादाविस्मरणेनोक्तमिदम् । 'नञ्घटितमनित्य' मिति तेषां परिभाषा । न च—नायं न्यायो भाष्यानुक्त इति नागेशाद्युक्तेर्नायं लक्ष्यसंस्कारक इति वाच्यं, भाष्यानुक्तयोगविभागव्यवस्थितविकल्पादेराश्रयणवत् एतन्न्यायाश्रयणे बाधकाभावात् । अन्यथा—'न च कार्ये प्रतिपत्त्यभिसन्धिः' (४-३-१४) इति सूत्रशाङ्कर-भाष्यव्याख्याने ब्रह्मविद्याभरणे नामरूपयोर्निर्वहितुरिति प्रयोगस्य साधुता दुर्वचा भवदादिभिरपीति अपाणिनीयत्वदोषनिरसनप्रकरणे ॥

इति आकाशाधिकरणविचारः

## सुषुप्त्यधिकरणविचारः

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ (१-३-४२)

(कौ०) अत्र—खण्डनं तु कृतप्रायमित्युक्तम् । (कु०) पूर्वपक्षदुरुद्धरत्वादिदोषत्रयमागमैकवेद्येऽर्थे न सम्भवतीत्यादिनाऽस्माभिः खण्डितमेव ॥

(कौ०) यच्चोक्तं—भेदस्य व्यावहारिकत्वात्, अध्यस्तसङ्गेन वास्तवाऽसङ्गत्वानपायाच्चेति । (कु०) तदपि मूर्खतमभाषितम्, सूत्रेऽध्यस्तार्थकपदाश्रवणात् । भेदस्य व्यावहारिकत्वे तुल्यन्यायेन सर्वस्यापि त्वन्मते व्यावहारिकत्वापत्त्या त्वत्कृतपरमतदूषणं, सौत्रमतान्तरदूषणं च व्यावहारिकमेवेति जीवेशाभेदोपि व्यावहारिक एवेति जीवेशभेदादेर्वास्तवत्वं सिध्येदिति न परेषा(अस्माकं)मिष्टहानिः । विस्तृतमेतत् भेदनिरूपणप्रकरणे (१३) व्यासपाणिनिभावनिर्णयेऽस्माभिः, अन्यैरन्यत्र च ॥

इति सुषुप्त्यधिकरणविचारः

इति प्रथमस्य तृतीयः पादः ।

---

## आनुमानिकाधिकरणविचारः

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ (१-४-१)

(कौ०) अत्रेदं वक्तव्यमित्यादिना यद्दूषणमभ्यधायि विष्णोर्जगत्कर्तृत्वे, यच्च शिवविरिञ्चयोरप्यन्तर्यामित्वस्य समन्वयाऽधिकरणद्युभ्वाद्यधिकरणभङ्गे स्फुटीकृतमिति ।

(कु०) तदेतदयुक्तमिति तत्तदधिकरण एव सविस्तरमस्माभिर्दूषितम् । विष्णुकर्तृत्ववादी शङ्कराचार्य एवाऽनेन दूषितो भवतीति ऋजवः ॥

(कौ०) यच्चोक्तं—'प्रवृत्तिनिमित्ततादधीन्यकथा वृथैव, तत्तच्छब्दप्रवृत्तिनिमित्ताश्रयस्यैव तत्तच्छब्दवाच्यत्वात्' इत्यादि —

(कु०) इदं च बालभाषितं, न तु पण्डितभाषणम् । 'प्राणस्तथाऽनुगमात्' (१-१-२८) इत्यधिकरणे—यत्तु मुख्यप्राणलिङ्गदर्शितं 'इदं शरीरं परिगृह्योत्थापयति' इति—तदसत्, प्राणव्यापारस्यापि परमात्मायत्तत्वात्परमात्मन्युपचरितुं शक्यत्वात्' इति शाङ्करभाष्ये शरीरधारकत्वरूपप्राणासाधारणधर्मस्य परमात्माधीनत्वेन

प्राणशब्दवाच्यत्वमस्तीति तत्र प्राणशब्दः परमात्मवाचक एव न प्राणवाचक इति सिद्धान्तेऽभिहितत्त्वेन, तत्तच्छब्दवाच्यपदार्थवृत्तितत्तत्प्रवृत्तिनिमित्ताऽसाधारणधर्मस्य जगत्कर्तृत्वेन निर्णीतपरमात्मस्वामिकत्वमेवेति सुधियो विभावयन्तु ॥ न चाऽत्र शाङ्कर-भाष्ये गौण्यर्थक उपचरितः, तथा सति प्राणशब्दप्रवृत्तिनिमित्ताश्रयस्यैव मुख्यप्राणस्य त्वदुक्तरीत्या प्राणपदवाच्यत्वापत्त्या तस्य परमात्मपरत्वसिद्धान्ताऽसिद्धेः ।

इदं तु ज्ञेयम्—यत्र आपातप्रतीतिविषयधर्मपुरस्कारेण तत्तत्पदार्थोपस्थित्या निराबाधवाक्यार्थबोधे न सिद्धान्तविरोध उपजायते, तत्र न तादधीन्यन्यायः । यत्र तु विरोधशङ्का तत्र योगाश्रयणेन, 'सर्वपदार्थनिष्ठप्रवृत्तिनिमित्तधर्मस्य परमात्मायत्ततया तत्स्वामिकत्वेन, सर्वपदवाच्यत्वं हरेर्निरूपणीय' मिति ॥

एतेन— 'वृद्धव्यवहारो ही' त्यादिना तत्तत्प्रवृत्तिनिमित्तधर्माश्रयोपस्थितिरेव भवति, न तु तदायत्तत्वनिमित्तेन तत्तत्स्वामिनः शक्तिग्रहोपस्थिती भवत' इत्युक्ति-रपास्ता । वैदिकवृद्धसार्वभौमाणां तथाव्यवहारात्, स्वामिन्यपि शक्तिग्रहोपास्थिति संभवात् । यो ब्राह्मणं हन्ति, यो वा घातयति, तयोरुभयोरपि ब्रह्महेति व्यवहारदर्शनात् ।

शङ्कराचार्यैरपि गुहाधिकरणे—'ऋतं पिबन्ता' (का. १ - ३ - १) विति श्रुत्यर्थनिरूपणावसरे 'यद्वा — जीवस्तावत्पिबति, ईश्वरस्तु पाययति, पाययन्नपि पिबतीत्युच्यते, पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शना' दिति वदद्भिः नियम्यव्यापारस्य नियामकाधीनत्वेन तादधीन्येन नियम्यवाचकपदं नियामकस्वामिवाचकमपि भवतीति सूचितं भवति । अतः लौकिकवैदिकव्यवहारं, स्वाचार्योक्तितात्पर्यं च, सम्यङ्नाभि-जनात्ययं भट्टोजिः ।

एतेनैव इदमपि निराकृतं—'स्यादेतत् यस्य शब्दस्य प्रवृत्तिनिमित्ते' त्यादिना यत्प्रवृत्तिनिमित्तं यदधीनं स तस्य वाचकः, अतएव — राजा जयीत्यादिप्रयोग इति चे'दित्याक्षिप्य, न—तथा सति रिपुगतदुःखबन्धमरणादीनां राजाधीनत्वमात्रेण, 'राजा दुःखी, बद्धो, मृत' इत्यादिप्रयोगापत्तेरित्यापादनं यद्दीक्षितकृतम् — तत्रेष्टापत्तेः । गुहाधिकरणशङ्करोक्तदिशा तथा प्रयोगस्य भवदादिरभिरप्यवश्यमङ्गीकार्यत्वात् । अन्यथा—तदाचार्यरचितगुहाधिकरणस्वरूपमेव तेन दूषितमिति विज्ञेयम् । स्वामिता-संबन्धेन (तादधीन्येन) तद्वृत्ताव्यवहारे स्वामिनि (नियामके) दुःखीत्यादिप्रयो-गोऽमङ्गलकरत्वाद्राजादौ महापुरुषे न क्रियते ॥

(कौ०) यच्चोक्तं — यदधीनो गुणो यस्ये ' ति वचनं कल्पितमिति —

(कु०) तत् समाधातुमसामर्थ्यं प्रकटयति तव । किञ्च नाधिकारस्तवैवं भाषणेऽदृष्टश्रुतसर्वश्रुतीतिहासपुराणादेरल्पज्ञस्येति पूर्वोक्तदिशा निरस्तं वेदितव्यम् । भवदाचार्यग्रन्थ एव भवता नाऽधीतो नावलोकितश्चेति भाति । भवदाचार्यो हि — ' मुख्यप्राणव्यापारस्यापि परमात्माधीनतया प्राणशब्दः परमात्मपर एवे ' त्यवोचत् अन्तिमप्राणाधिकरणसिद्धान्तनिरूपणावसरे ॥

(कौ०) यच्चात्र— ' यदधीन ' इत्यस्य ' यतो वाच ' इति श्रुतिविरोधोद्घाटनम् — (कु०) तदयुक्तं — वचनं तावद्वाच्यत्वमाह, वाच्यत्वेपि बहुगुणवत्त्वात्साकल्येन वाच्यता नेति श्रुतिराह, अतः को विरोधः । हरेर्बहुगुणत्वं श्रुत्यादिषु प्रसिद्धम् ।

" विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभा यदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ( ऋ. २-२-२५ )
नान्तं विदाम्यहममी मुनयः प्रजेशा मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन्गुणान् दशशतानन आदिदेवः शेषोऽधुनाऽपि समवस्यति नास्य पारम् । "
( भाग० २-७-४१ ) इति,

हरेर्वाच्यत्वं नेत्याह श्रुतिरिति परमते ; न श्रीमध्वाचार्याणां मते ।

स्वन्यायेन दूषणाभिधानं ' तन्न्यायेन दूष्यत ' इति स्ववचनविरुद्धम् । एतेन ' नामानि सर्वाणि यमाविशन्ती ' त्याद्यपि परास्तम् ॥

' अधिकमुत्तराधिकरणे स्फुटीकरिष्यत ' इत्यनेन, उक्तदूषणातिरिक्ताऽपूर्वदूषणान्यभिधास्यन्ते दुरुद्धराणीति न मन्तव्यम् । अतोऽस्मदुक्तदिशैव तान्यपि सर्वाणि शक्यनिरसनानि सुधियाम् ॥

यच्चोक्तं ' आविशन्ती ' त्यस्य सम्यग्वर्तन्त इत्यर्थेन मुख्यवृत्त्या वाचका भवन्तीति तात्पर्यात् शक्तिलक्षणयोरौदासीन्येनेत्यादि, लक्षणाऽभिप्रायेणैव व्याख्येयत्वात् इति च न युक्तम् । ' यतो वाचो निवर्तन्ते, यद्वाचे ' त्यादिश्रुतिस्मृतीनां साकल्येन वाच्यत्वाभावे तात्पर्यात् ।

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः ॥

इति शौनकऋषिवचनेन सर्वेषां वैदिकपदानां हरिवाचकत्वसिद्धेः । छान्दोग्ये सप्तमे सनत्कुमारसंवादे सर्वेषां वेदादीनां 'नामैवैतत्' इत्यनेन परमात्मनामत्वोक्तेश्च ।

उदाहृतशौनकवचनादेव –– "लाक्षणिकार्थप्रदर्शनपरं वाऽस्तु । नामानि सर्वाणीत्यपि लक्षणापरमेव । अनुशासनत्वोक्तिरयुक्ता, 'आविशन्ती' त्यस्य बोधयन्तीत्येवं परता, 'यतो वाचः, यद्वाचाऽनभ्युदित' मित्यादिश्रुतीनां 'यतो वाच' इत्यादिस्कान्दवचनाऽविरोधाय लक्षणाऽभिप्रायेणैव व्याख्येयत्वादित्यादि दूषणं" निरस्तम् । तथाहि –– नामपदस्य वाचकशब्द एव लोकरूढेः, अतएव नामलिङ्गानुशासनमित्यादौ नामपदस्य वाचकशब्द इत्यर्थमाहुः । लाक्षणिकानामनुशासनेषु न पाठः । नाम च यौगिकं, रूढं चेति । साकल्येन न वाच्य इति श्रुत्यर्थेन विरोधाभावात्, तया श्रुत्याऽवाच्यत्वकल्पनमयुक्तम् ।

किंच – ब्रह्मादिपदानां परमेश्वरवाचकत्वाभावे 'शब्दादेव प्रमित' (१-३-२४) इत्यत्र शब्दादेवेति अभिधानश्रुतेरेव 'अङ्गुष्ठमात्रः पुरुषः परमेश्वर एवे' ति शाङ्करभाष्याद्यसङ्गतिः । अभिधानश्रुतेरित्यस्य वाचकशब्दादित्येवार्थो युक्त इति वाक्यविदां मर्यादानुसारिणः । 'श्रुतिलिङ्गे' त्यत्र 'श्रुतिः शक्त्यनुसारा, तत्र श्रुतिर्नाम 'अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकशब्द' इति न्यायमाला-भाट्टदीपिकादौ व्याख्यानात् । यदि तत्र श्रुतित्वमन्यथा परिष्क्रियते तर्हि स्पष्टं मीमांसकमर्यादोल्लङ्घनम् ।

एतेनैव–'प्रकरणा' दिति हेतुस्त्वद्रीत्या न संभवदुक्तिकः' इत्यादिः, कश्चिद्दूषैतीत्यन्तो निरस्तः । 'वेदाक्षराणि यावन्ती' ति शौनकवचनेन सर्वेषां वेदानां हरिनामत्वस्य महर्षिसंमतत्वावगमात् । लक्षणसमर्पकत्वं, हरिनामत्वं चेत्युभयमप्यभ्युपेयम् । नामत्वपक्षे योगबलात्सहस्रनामवत् विष्णुवाचकत्वं सुवचम्, न शौनकवचनं लक्षणपरतां प्रतिबध्नाति । अत उभयं संभवदुक्तिकमेवेति वक्तुं शक्यत्वात् । 'यो देवाना' मिति श्रुतिबलात् 'नामानि सर्वाणी' त्यपि इन्द्रमित्रवरुणादिशब्दमात्रपरम् । तथाच श्रूयते - इन्द्रं मित्रं वरुणमग्निमाहु' रित्यादीति तु–अतितुच्छम् । इदमुदाहरणं,

न परिगणनमित्यभ्युपगमात् । संकोचे बलवत्तरकारणाभावात् । उदाहरिष्यमाण-शाङ्करभाष्यादिविरोधाच्च ॥

(कौ०) यदुक्तं—आकाशादिशब्दा ब्रह्मपरा इत्यादि दूषयिष्यमाणत्वादिति—(कु०) तदतितुच्छम् । 'तत्सृष्ट्वा तदेवानुप्राविशत्, सृष्ट्वाऽनुविश्य पुरुष' इत्यादिश्रुतिस्मृत्यादिषु सृज्येषु वस्तुषु सर्वेषु स्रष्टुः परमात्मनोऽनुप्रवेशोक्तेः, भवदाचार्यशङ्करसुरेश्वराचार्यादिभिस्तथोक्तेः । 'तथा स्वाभाविकेनापि आकाशादि-कारणेन नित्येनाऽविकृतेन सर्वगतेन सत्यज्ञानाऽनन्तलक्षणेन पञ्चकोशातिगेन सर्वात्मनाऽऽत्मवन्त' इति शङ्कराचार्योक्तेः, पञ्चसु पर्यायेषु आत्मशब्दसामानाधि-करण्यश्रवणात्; आत्मनः सर्वनियमनाय सर्वान्तर्यामित्वस्य वाजसनेयकैरभिधानाच्च, आकाशादिशब्दानां ब्रह्मपरत्वखण्डनस्याऽप्रामाणिकत्वात् । अन्यथा कर्तरि विगानस्या-परिहार्यत्वात्स्वाचार्यसिद्धान्तविरोधात् , श्रौतस्मार्तप्रमेयाऽज्ञानमूलकत्वाच्चेत्यवधेयम् । तस्मात् तत्तदन्तर्यामित्वेन तत्तच्छब्दवाच्यता सुलभा परमात्मन इति सुस्थं, कर्तरि विगानपरिहारश्च सुलभः ॥

(कौ) यदुक्तमत्र — आविशन्तीत्यस्य बोधयन्तीत्येतावन्मात्रपरतया शक्ति-लक्षणयोरौदासीन्येन लक्षणाऽभिप्रायेणैव व्याख्येयत्वादिति —

(कु०) अत्रोच्यते— औदासीन्येनेत्यस्य तदुभयातिरिक्त व्यञ्जनयेत्यभिप्रायः; तर्हि लक्षणाभिप्रायेणैवेति भवदुक्तिरसङ्गता । एतया वृत्त्या ब्रह्म बोध्यत इत्याचार्यैः क्वाप्यनुक्तेः । न च शक्त्यैवेति न नियम इत्याशयः, तत्र गमकाभावात् । न लक्षणया बोध्यते किंतु शक्त्यैवेति वयं वदामः । को निर्णेता ।

एतेन — ब्रह्मप्रकरणतामात्रेणेत्यादिकौस्तुभोक्तं निरस्तं वेदितव्यम् । शौनक-वचनादीनां सङ्कोचे कारणाभावस्योक्तत्वात् । ज्योतिष्टोमादितत्तत्प्रकरणस्थानां सर्वेषां तत्तद्वाचकतासङ्गाच्चेत्यापादनमात्मनो मन्दमतितामावेदयति, श्रुत्यादौ ब्रह्मणः सर्व-वेदवेद्यत्वाभिधानवत्, ज्योतिष्टोमादीनां सर्ववेदादिवेद्यत्वस्य क्वाप्यनभिधानात् । एतेन 'न हि स्वर्गकामादिशब्दा अपि यागवाचका इति कश्चिदभ्युपैती' त्याद्युक्तं परा-

हतम् । अधिकमुत्तराधिकरणे स्फुटीकरिष्यत इति बिभीषिकामात्रम् । तत्रैव तत् खण्डयिष्यते । अधिकं किमप्यपूर्वं नोक्तं तत्र ॥

इत्यानुमानिकाधिकरणविचारः ॥

---

## ज्योतिरुपक्रमाधिकरणविचारः ।

ज्योतिरुपक्रमात्तु तथाह्यधीयत इत्येके ॥ (१-४-१०)

(कौ०) तत्र – 'अत्रेदं वक्तव्यमित्यादिनाऽलं मृतहननेने' त्यन्तेनोक्तो यः 'ता वा एतास्सर्वा इत्यादिश्रुतेरन्य एवार्थो न त्वदुक्त' इत्यादिदूषणगणः —

(कु०) अयमपि द्वेषमूल एव, ग्रन्थकर्तुरस्य मौर्ख्यं प्रकटयति, श्रुतिस्मृत्यादि-विरुद्धा चेत्थमुक्तिरिति प्रपञ्चितं पूर्वमेव । दीपिकोक्तश्रुत्यर्थोपन्यसनं, तदौचित्यवर्णनं च न प्रकृतसङ्गतम् । 'स एषोऽसु' रित्यादि तु विभूतिप्रकरणं, तत्र कथञ्चिदभेदा-न्वयस्सुवचः, 'मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतं' (गी० ९-१६) इत्यादाविव ।

'ता वा एतास्सर्वा ऋच' (ऐ.२-२-११)इत्यादौ तु नाभेदो युक्तः, अस्य वाक्यस्य शतर्च्यादिशब्दनिर्वचनपूर्वं तत्तच्छब्दवाच्यत्वनिरूपणप्रकरणगतत्वात्तत्तच्छब्द-वाच्यत्वं हरेरित्यर्थवर्णनस्यैवौचित्यात् । ततश्च - प्रकरणेऽस्मिन् इतिशिरस्कशतर्चिन इतीत्यादिवाक्यघटितवाक्यैः 'शतर्चिन इत्याचक्षत एतमेव सन्त'मित्यादिभिः, सर्वान्त-र्यामितया सन्तं हरिमाचक्षते विद्वांसः । तत्तच्छब्दैर्व्यवहरन्तीत्यर्थस्यैव दर्शितत्वेन श्रौतपथाऽऽदरेण श्रीमध्वाचार्योक्तस्यैव न्याय्यत्वात् । वाच्यवाचकयोरभेदाङ्गीकारे तु ऋगाद्यभिन्ना एका, सर्वत्र व्यवह्रियमाणा चैका, नारायणाख्यादेवतेत्यर्थेऽपि न क्षतिः, 'यो यच्छब्दाभिन्नः स तत्पदवाच्य' इति न्यायेन सर्वशब्दवाच्यत्वसिद्धेः ।

'स एषोऽसुः, स एष प्राण'(ऐ.१-८-३)इत्यादौ च, असनादसुः, प्राणनात्प्राण इत्यादिनिर्वचनेन परमात्मपरा एव अस्वादिशब्दाः, सर्वत्र विभूतिप्रकरणे विभूति-रूपाणां हरेश्चाऽभेद इष्ट एव श्रीमध्वाचार्याणाम् । अतो न किञ्चिदप्यनुपपन्नम् ।

" रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः (गी० ७-८)

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् । (गी० ९-१६)
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् " ॥ (गी० १०-२१)

इत्यादिवचनानां विभूतिमूलरूपयोरभेदतात्पर्यकत्वेन व्याख्यानात्, ब्रह्मातिरिक्त-यावत्पदार्थानां लौकिकवैदिकानां ब्रह्मत्वेन, सर्वशब्दवाच्यताप्यङ्गीकर्तुमर्हति । एवंच दीपिकोक्तार्थोपन्यासः स्वपरमताचार्यग्रन्थतात्पर्याऽपरिज्ञानमूलः, उन्मत्तवचनसदृक्षः ।

'याः तेषां वाच्यो हरि' रित्यर्थवर्णने किं गौरवं, अध्याहारस्य समत्वात् । अन्यथा भूरादिसर्वव्याहृतिगर्भत्वरूपार्थालाभात् । शतर्चिन इति शब्दपरः, इतिशिरस्कत्वात् । शब्दार्थयोरभेदो न सार्वत्रिकः, अतः शतर्च्यादिशब्दैराचक्षते विद्वांसो हरिं व्याहरन्तीति वाक्यार्थ औपनिषदैर्वर्ण्यते । तथाऽत्रापि या ऋचः, ये वेदादयः तासां, तेषामेकैव देवता हर्याख्या व्याहृतिः व्याह्रियमाणा वाच्येत्यर्थ उचितः, 'प्राण ऋचः, इत्यत्र प्राण इति विषयसप्तमी । (ऋचः) प्राणे = प्राणाख्याऽन्तर्यामिब्रह्मविषयिकाः, तत्प्रतिपादिका इति यावत् । विद्यात्=तथोपासीतेति तात्पर्यम् । अथवा— प्राण इति प्रथमान्तम् । तत् 'सर्वा ऋच' इत्यादौ विशेष्यम् । प्राणः=तत्पदवाच्यः, अन्तर्यामिब्रह्माभिधेयो हरिः, ऋगाद्यभिन्नः, विद्यात् = तथा जानीयादुपासीतेति चेत्यर्थेऽपि न काचित्क्षतिः । अत्रत्यटीकाग्रन्थस्तु श्रुतितात्पर्यप्रतिपादनपरा । अतो भट्टोजिभाषणं न युक्तम् ॥

(कौ०) 'भूर्भूरित्येव प्रश्वसितीत्युपक्रमा' दित्युक्तं यत्—

(कु०) तदपि मन्दभाषणम् । यतः, 'स एषोऽसु' रिति वाक्यं तावत् विभूति-प्रकरणस्थं, 'ता वा एता' इति तु वाच्यत्वनिरूपणप्रकरणगतमित्युभयोरेकप्रकरणगतत्वाभावेन भूर्भूरित्यस्योपक्रमत्वायोगः ॥

(कौ०) यदपि — व्याहृतिरित्यत्र न व्याकरणाऽऽनुगुण्यमिति —

(कु०) तदपि महाभाष्याऽनवलोकननिबन्धनम् । तत्र तु — 'अकर्तरि च कारके संज्ञाया' (पा० ३-३-१९) मिति सूत्रे — 'संज्ञाग्रहणानर्थक्यं, सर्वत्र घञो दर्शनादिति । असंज्ञायामपि घञ् दृश्यते, को भवता दायः; दत्तः; को भवता लाभो; लब्धः; इत्युदाहृत्य, 'कृतः कट' इत्यत्र घञोऽतिप्रसङ्गमनभिधानात्परिहृत्य,

'अभिधानलक्षणाः कृत्तद्धितसमासा' इत्याद्युक्तम् । सूत्रकृन्मतेपि चात् असंज्ञायां चेति व्याख्यानेनोक्तदोषानवकाशः । प्रकरणवशात् रूढ्यर्थापरिग्रहः, भूरादिव्याहृति-ग्रहणे न कश्चित्प्रकृतोपयोगः । भूरादिवाच्यत्वबोधनं तु वेदपदेनाऽऽसां ग्रहणादेव सिद्धम् । अतस्तत्पदं यौगिकमिति साध्वेव ॥

(कौ०) कर्मकाण्डस्थसर्वपदानां योगेन हरौ वृत्तिकथनं निर्मूलमिति यद-भिहितम्— (कु०) इदमयुक्तं, यतः - 'तदिति वा एतस्य महतो भूतस्य नाम भवति, योऽस्यैतदेवं नाम वेद ब्रह्म भवती' (ऐ० आ० ५-३) त्यैतरेयारण्यकाऽन्तिमवाक्य-व्याख्याने समस्तवेदानां भगवन्नामत्वमाह सायणः । इदं हि तदीयं भाष्यं तत्रत्यम्-'इति वै=पूर्वोक्तनियमेन, अधीतं तत् = समस्तवेदवाक्यं, एतस्य=समस्तवेदप्रति-पाद्यस्य, महतः=व्याप्तस्य, भूतस्य=सदातनस्य, भगवतो नाम भवति, यः, एतत् = सर्वो वेदः, एवम्=उक्तरीत्या, अस्य=भगवतो नामेति वेद, सः, ब्रह्म भवति = ब्रह्म प्राप्नोति । वेदस्य सर्वस्य ब्रह्मप्रतिपादकत्वात् ब्रह्मनामधेयत्वं 'सर्वे वेदा यत्पद-मामनन्ती' (का० १-२-१५) ति सर्ववेदवेद्यमाहेतीति । शौनकोप्याह—तावन्ति हरिनामानीति । निर्वचनेनैव परमात्मवाचकत्वं सर्वशब्दानामिति तयोरभिप्रायः ।

निर्वचनं च, पाणिनितन्त्रेण, तदनुमततन्त्रान्तरेण च । प्रयोगोपलब्धिस्था-नानामतिबहुत्वात्प्रयोक्तॄणां च शिष्टानां बहुत्वात्, सामान्यतो विरचितानि सूत्राणि अपर्याप्तानि सर्वेषां प्रयोगाणां साधुतायामिति समालोच्य, भगवान् पाणिनिः, 'पृषोदरादीनि यथोपदिष्ट'मिति सूत्रं रचयित्वा 'उणादयो बहुल' मित्यादिना शाकटायनीयं तन्त्रमप्यन्वमन्यत । ताभ्यां च चिन्तामणिकामधेनुसदृक्षाभ्यां यथाप्रयोगं प्रकृतिप्रत्ययागमादेशस्वरादय ऊह्या इति तदभिप्रायः । 'सर्वे सर्वार्थवाचकाः' इत्यभ्युपयतां वृद्धिरादैजित्यादिसंज्ञासूत्राणां नियमार्थतां वदतां वैयाकरणानां मतेऽपि शब्दानां सर्वार्थकत्वे योगाश्रयणमेव गतिः ।

ब्रह्मवादिनोऽपि ब्रह्मवाचकत्वे तमेवाश्रयन्ते । दर्शितो हि त्रेधा योगो, वैश्वानरशब्दस्य ब्रह्मपरत्वे वैश्वानराधिकरणे शाङ्करे भाष्ये । कृष्णेति कृषतेः कर्ष-णार्थस्य रूपम् । भक्तजनपापादिदोषकर्षणात्कृष्ण इति योगो दर्शितः (शा० गी०) । प्रत्यय ऊह्य ; नारायणशब्दस्य विष्णुपरत्व एव बहुधा व्युत्पत्तिर्दर्शिता कोशादौ ।

'सर्वे सर्वार्थवाचका' इति योगिदृष्ट्येति वदतां, योगिनो योगमहिम्ना, अन्ये तु तत्प्रदर्शितवर्त्मना सर्वशब्दवाच्यतामाहुः परमात्मन इत्याशयः। अत एव-सहस्रनामसु 'यानि नामानि गौणानि विख्यातानि महात्मन' इत्युक्तम्। गौणानि=योगबलाल्लब्धगुणविशिष्टवाचकानि। ( महात्मनः = विष्णोः )

शङ्कराचार्यास्तु 'आकाशनये' आकाशशब्दपर्यायो व्योमशब्दो ब्रह्मणि प्रयुक्तः, 'ऋचोऽक्षरे परमे व्योम' (ऋ० सं २-३-२१) न्नित्यत्वेति ब्रुवन्तोऽन्यपराणामपि ब्रह्मपरत्वं मन्यन्ते। तच्च – योगमन्तरा न संभवति। ततश्च — निर्वचनेन सर्वेषां भगवन्नामत्वनयनं भाविचतुर्मुखश्रीमध्वाचार्य, श्रीजयतीर्थादिसज्जनाधिकारिकम्॥

(कौ०) यदत्र—कौस्तुभोक्तं दूषणं यजैर्यज्वभिरिति व्याख्याय 'घञर्थे क' इति टीकाकृतं निर्वचनमर्थवर्णनं चाऽयुक्तमिति—

(कु०) तदेतत् — अस्यैव ग्रन्थकर्तुः, गैर्वाणभाषाऽव्युत्पत्त्यतिशयं, आग्रहग्रस्तचेतस्त्वेन ग्रन्थाऽभिप्रायाऽनभिज्ञत्वम्, अन्यथाऽनुवादेन दोषोद्घाटकत्वं च प्रख्यापयति। तथाहि—सुधायां तु—यजतेर्भावे 'घञर्थे कविधान' मिति कप्रत्ययः, संप्रसारणाऽभावस्तु छान्दसम्। यजो यज्ञः, अथवा – कर्तर्येव पचाद्यच्, तथा च आ सम्यक्, समन्ताद्वा, यजेन=यज्ञेन कर्मणा, याजकेन पुरुषेण वा, इतः = प्राप्तः आयजेतः, सकलयज्ञभोक्ता, यज्वभिर्ज्ञानद्वारा प्राप्यश्चेत्यर्थः। तस्य संबुद्धिरायजेत। वसतेः पचाद्यजिति आनुपूर्वी दृश्यते। अत्र तु—देवभाषायां व्युत्पन्नमतेः कस्यचिदपि विदुषो दोषदृष्टिरुदियात्। घञर्थे सम्यग्बुध्वैव भावे क, कर्तरि पचाद्यजित्युक्तम्। आद्ये यजपदं यज्ञपरं, द्वितीये यज्वपरमिति व्याख्यातम्। भावे के 'वचिस्वपियजादीना (पा० ६-१-१५) मिति संप्रसारणशङ्कायां छान्दसत्वात्तदभाव उक्तः। अत्र न कोपि शाब्दमर्यादोल्लङ्घनं ब्रूयाद्विद्वान्। छान्दसत्वं शरणीकुर्वन्ति हि सर्वे व्याख्यातारस्तत्र तत्र। तस्मादसतः सज्जायत 'इत्यत्र, 'जायत=समुत्पन्नं, अडभावश्छान्दस' इति शाङ्कर उपनिषद्भाष्ये, वेदभाष्ये च बहुषु स्थलेषु।

एतेन – यदत्र 'घञर्थः सम्यग्बुद्धः, वस इत्यत्रैव पचाद्यच् कथं विस्मृत' इति सोल्लुण्ठनं वचनं, तत् तमेव ग्रन्थकर्तारं परावृत्य हन्ति, कृत्येव प्रयोक्तारमिति ज्ञेयम्।

अनेन — भट्टोजिरयं श्रीसुधार्थापरिज्ञानवान् अन्यथाग्रन्थानुवादी स्वजनमोहकः प्रतारयिता समुद्रघोषसदृक्षवाग्जालेन, जनानां न यथार्थवक्ता, अविश्वसनीयवचन इति जानन्तु विद्वज्जनाः ॥

(कौ०) यच्चाऽस्य 'घञर्थः सम्यग्बुद्धः, वस इत्यत्रैव पचाद्यच् कथं विस्मृत' इति वचनम् । (कु०) तदपि—सर्वविस्मरणनिदाने चरमे वयसि कस्यचित् वचनं श्रुत्वा, ग्रन्थमिममतानीदिति अप्पय्यदीक्षितचरिते लेखो दृश्यते । अतोऽस्य भाषणं सर्वं शास्त्रविस्मृतिमूलकमेव । 'भावे कः, कर्तर्यजि' ति यथाशास्त्रं वदतष्टीकाकृतो जयतीर्थस्य, न घञर्थाऽनवबोधः, न शास्त्रोल्लङ्घनम्, नापि शास्त्र-विस्मृतिः । सर्वमिदं विस्मृत्यादिकं तत्वकौस्तुभकृतो भट्टोजेरेव ॥

नायं तत्वकौस्तुभकृत् भट्टोजिः, मनोरमादिप्रौढग्रन्थकर्तृप्रसिद्धवैयाकरणाद्-भट्टोजेरन्यः, तस्य सनामा कश्चिदवैयाकरणः तन्मर्यादाऽनभिज्ञ इति ग्रन्थशैल्यादि-तोऽवगम्यते ॥

(कौ०) यच्चोक्तम्— 'स्वाहेत्यत्र समासे संबुद्धि'रिति वदता सम्बुद्धिलोपो दुर्लभ इति । (कु०) एतच्च सुधावाक्यस्य नैजार्थाऽपरिज्ञानमूलकम् । नास्ति तत्र समास इतिपदं, न च — 'स चाऽसौ अश्चेति स्वाहे' ति संबुद्धिरिति वाक्यश्रवणमेव तत्पद-प्रापकमिति वाच्यम् । 'स चासा' वित्यादेर्विग्रहवाक्यत्वाभावात् । तत् विद्यमानपद-द्वयप्रदर्शनपरम् । तदर्थस्तु—स च = स्वाहशब्दः, असौ = वक्ष्यमाणोऽशब्दश्चेति द्वयं संबुद्धिः संबुद्ध्यन्तमिति ; न तु — स्वाहेति विशिष्टं संबुद्ध्यन्तमेकपदमिति । न चैवं प्रसिद्धपदविभागविरोध इति वाच्यम् — पदानि विभजतामाधुनिकत्वादसत्तो-ऽविशेषात्तेषामिति ।

अत एव — ऋक्संहितायां (८-१-१-५) 'प्रभू'रिति मन्त्रे 'भूर्जयन्त' मितिशब्दः, एकपदत्वेन, द्विपदत्वेन च मतभेदेन विभज्य व्याख्यातस्सायणेन । यद्वा — छान्दसो लोपस्सम्बुद्धेः । त्वयापि 'दिवसश्च पृथिव्या' (पा० ६-३-३०) मिति सूत्रे कौमुद्यां पदकारा इत्युदितम् । व्याख्यातमेतद्बालमनोरमायां—पदकारा इत्य-नेन पदपाठस्याधुनिकत्वं सूचितं, तथाच—विसर्गपाठः प्रामादिक इति सूचितमिति ॥

यच्चात्र षाष्टाऽऽमन्त्रितस्वराऽऽपादनं, तदपि तत्र तत्र बहुलग्रहणश्रवणात् सुशकवारणम् । छन्दसि आपादनाऽनौचित्येन दृष्टस्यैव स्वरस्य साधुत्वं कल्पयितुं प्रभवन्ति विपश्चितः । 'छन्दसि दृष्टानुविधि' रिति भाष्यात् । अत एव त्वयापि — 'दिवसश्च पृथिव्यामिति' सूत्रे 'द्यावा चिदस्मै पृथिवी' ति मन्त्रे द्यावादेश समर्थितः । सायणेनापि कृष्णयजुर्वेदभाष्ये (१-१-२) अनुवाके 'धिष्णे' ति पद अन्तोदात्तस्वरे न्याय्ये पृषोदरादित्वेन मध्योदात्तत्वं साधितम् ॥

इति ज्योतिरुपक्रमाधिकरणविचारः

---

## कारणत्वाधिकरणविचारः

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः (१-४ १५)

(कौ०) कौस्तुभे— श्रीमाध्वाधिकरणमनूद्य, 'तत्तुछ तात्स्थ्यात्ताच्छब्द्योक्तौ मञ्चाः क्रोशन्तीत्यादिवदमुख्यत्वोपपत्ते' रित्यादिना 'व्याख्यात' मित्यन्तेन यद्दूषणमभिहितम्—

(कु०) तदत्यन्तमसङ्गतम् । तथाहि—यदुक्तममुख्यत्वेति, एतच्च शास्त्रीयप्रक्रियाऽज्ञानमूलकम् । इत्थं हि शास्त्रकृतां मर्यादा, यत् —वस्तूनां मुख्यत्वाऽमुख्यत्वे स्वाभाविके औपाधिके इति द्विविधे, स्वाभाविकत्वं च स्वतस्सिद्धत्वं, औपाधिकत्वं च शब्दप्रयोगविवक्षादिनिमित्तकत्वम् । तत्राद्यं जगदीश्वरे परमात्मनि, तदितरेषु तु द्वितीयम् । औपाधिकमुख्यत्वामुख्यत्वे तु शब्दप्रयोगविवक्षाद्यनेकभेदेन सर्ववस्तुगते । राजपुरुषादौ राजादेः पुरुषनिरूपितविशेषणत्वेन शाब्दामुख्यत्वेपि, न तत्, राजनिष्ठस्वाभाविकमुख्यत्वं व्याहन्ति । यष्टीः प्रवेशयेत्यादौ यष्टिपदस्य यष्टिविशिष्टपुरुषोपलक्षकत्वेपि उपलक्षितपुरुषस्य नामुख्यत्वं, तस्यैव प्रवेशनीयत्वेन विवक्षितत्वात् । एवमन्यत्रापि विवक्षादित ऊह्यमिति ।

प्रकृते ब्रह्मणः सृष्टवस्त्वनुप्रवेशवचनान्तर्यामिब्राह्मणस्मृतिवचनादिभिः सर्ववस्तुस्थितत्वसिद्ध्या, कर्तृविगानपरिहाराय आकाशादिष्वपि अनुप्रविष्टस्य ब्रह्मणो वाच्या-

दिकर्तृत्वाभ्युपेयतया आकाशादिपदानां तत्स्थपरमात्मपरत्वमङ्गीकार्यं भवतेति त्वन्मते ब्रह्मात्मशब्दवाच्यस्य परमेश्वरस्य क्वापि मुख्यत्वाभावेन, 'आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते' इति 'अन्तर' (१-२-१३) इति सूत्रशाङ्करभाष्यादि-व्यवहारोऽसंगतस्स्यात् । एतेन शाङ्करवचनेन, न औपचारिकप्रयोगाद्यधीनममुख्यत्वं वस्तुगतस्वतस्सिद्धमुख्यत्वविरोधीति सूचितम् । नारायणकृपा, नारायणदास ' इत्यादौ उत्तरपदार्थनिरूपितविशेषणत्वेन शाब्दममुख्यत्वम् (अप्राधान्यम्) नारायणनिष्ठापर-प्रयोज्यत्वरूपमुख्यत्वविघातकं न भवतीत्यादि यथाप्रयोगं मुख्यत्वाऽमुख्यत्वे ज्ञातव्ये । एवंच वस्तुतो मुख्यस्य वस्तुनो लक्षणादिनाऽमुख्यत्वेपि तद्वस्तुगतवास्तव-मुख्यत्वानपायात्, 'अमुख्यत्वापत्ते 'रिति कौस्तुभकृद्वचनं शास्त्रीयमर्यादाऽनभिज्ञान-मूलकमिति ज्ञातव्यम् ।

आत्मनः स्वसृष्टाकाशादिषु अनुप्रवेशः शङ्कराचार्येणैव अत्रैवाधिकरणे — ' तद्विषयेणैव परेणाऽऽत्मशब्देन शरीरादिकोशपरम्परया च अन्तरा(न्तर)नुप्रवेशेन सर्वेषामन्तःप्रत्यगात्मानं निरधारयत्, बहुस्यां प्रजा येये (तै० २-६)ति चाऽऽत्म-विषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषते ' त्यादिना । अत्रैवाधिकरणे ब्रह्मणः सर्वत्र प्रवेशोक्त्या कर्तृविगानं निराकृतं सुरेश्वरवृत्तौ । ' आकाशाद्वायु ' रित्यादौ तत्र तत्रानुप्रविष्टाऽव्याकृतब्रह्मणः, वायुः, तत्प्रविष्टाव्या-कृतब्रह्मस्वरूपं चाभिव्यक्तमिति न्यायरक्षामणिकारः ।

अतः परमात्मगतमपरप्रयोज्यत्वलक्षणमुख्यत्वं न केनापि प्रकारेणापलापयितुं पारयति पुरुषः । ततश्च — त्वदीया एव ' आत्मन आकाश ' इत्यादौ कार्यपरा-काशादिशब्दाः कार्यतदभिव्यक्ताऽव्याकृतब्रह्मोभयपराणि भवन्तीत्यवोचन्निति सर्वेषां ब्रह्मवाचकत्वं त्वयाप्यङ्गीकार्यम् । एवंच हरेस्सर्वपदवाच्यत्वं सुस्थम् । 'तावन्ति हरिनामानि, ' नामानि सर्वाणी' त्यादिप्रमाणार्थः, महातात्पर्यशब्दार्थश्च कौस्तुभकृता तु नावबुद्ध एव । श्रुतीतिहासपुराणादिविशिष्टसच्छास्त्राणां विष्णुपरत्वमेवेति तु महातात्पर्यम् । वैदिकावान्तरवाक्यानां विष्णुपरत्वनयनमेव सर्वेषां वेदानां विष्णुपरता । तदानुगुण्येन सर्वेषां नाम्नां यथालक्ष्यं यथाधिकारं योगादिना विष्णुवाचकतेति ब्रह्मवादिनां संप्रदायः । हरविरिञ्चयोः कारणत्वाभावस्य बाधादि-

दोषाणां शब्दप्रमाणकेऽर्थेऽसंभवस्य चोपपादितत्वेन, ' सामान्यखण्डनान्यपीं ' त्युक्तिरपि पराहता वेदितव्या ॥

इति कारणत्वाधिकरणविचारः

---

## अथ समाकर्षाधिकरणविचारः

समाकार्षात् (१-४-१६)

(कौ०) ' कर्मणां सत्त्वे 'त्यादिना, ' हरेः सकलशब्दमुख्यार्थत्व 'मित्यन्तेन श्रीमध्वाचार्यमतमनूद्य, ' अत्र समाकर्षे ' त्यादिना दूषणान्यभिहितानि ।

(कु०) अत्रवदामः — अनेनाऽत्र टीकाकृतामेव पङ्क्तिरनूदिता । तत्र प्रथममिदं दूषणम् — ' यत्कर्मणोपि ज्ञानं प्रति शेषत्वं कथितम् , तेनैव ' सर्वे वेदा यत्पदमामनन्ति, नामानि सर्वाणि यमाविशन्ती ' त्यादीनां गतार्थत्वात्समाकर्षस्तावन्निर्मूल इति — तदेतदसङ्गतम् । श्रुतीनां परमात्मनामत्वे इतरव्यवहाराऽसिध्या वैदिकव्यवहारो, लोकव्यवहारश्च न सिध्येत् । ततश्च कर्मकाण्डः संपूर्णोऽप्राणमेव स्यादिति प्राप्ते, समाकर्षाधिकरणमारभत भगवान् सूत्रकारः । वैदिकलौकिकव्यवहारसिद्धये समाकर्ष इति एतंत्सूत्रार्थः । समाकर्षपदार्थोऽनुपदमुत्तरत्र वक्ष्यते । तेन च वेदैकदेशस्य कर्मपरतासिद्धिः । अस्यैव कर्मकाण्ड इति व्यवहारो वैदिकानाम् । कर्म चेदमन्तःकरणशुद्धिद्वारा ज्ञानाङ्गमिति ब्रह्मविदां मर्यादा । अतएव- ' ज्ञानकर्मसमुच्चयवादो, ज्ञानमङ्गं कर्मण ' इति वादो निराकृतो वेदान्तेषु । ' सर्वे वेदा यत्पदमामन्ती 'त्यादयो हि वेदसामान्यस्य परमात्मपरत्वं बोधयन्तीति स्पष्टम् । सत्येवं कर्मणो ज्ञानाङ्गत्वकथनमात्रेण ' सर्वे वेदा ' इत्यादीनां गतार्थता कथम् , विषयभेदादुभयोः । तत्र तथा सङ्कल्पेऽपि, न तस्य शास्त्रार्थनिर्णायकता, अतिप्रसक्तेः ।

किञ्च — त्रिविधा ह्यधिकारिणो ब्रह्मविद्याया उत्तममध्यमाधमभेदेन तत्रोत्तमा देवा वैदिकसर्वशब्दानां निर्वचनेन विज्ञाय ब्रह्मणो बहुगुणान् , तदनु-

सन्धानादात्मानं सदा नन्दयन्ति । इतरे तु – कर्मणा ज्ञानमाप्नोति ज्ञानेनाऽमृती भवति 'कर्मणैव संसिद्धिमास्थिता जनकादय' (गी० ३·२०) इत्यादिभिः कर्मणः परंपरया ज्ञानाङ्गतां ज्ञात्वा कर्माण्याचरन्तः शुद्धात्मानो ज्ञानं प्राप्य अनन्तसुखमनुभवन्ति । अतो न गतार्थता । अस्त्युत्तमानां पदवाक्यसमन्वये योग्यता, परेषां वाक्यसमन्वय एव । 'स्वर्गकामो यजेत,' 'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः,' इत्यादिप्रमाणान्येव समाकर्षे मूलम् । सर्वं ज्ञानं सत्तावगाहीति वादिनो न प्रभवन्ति इन्द्रादिशब्दविषयकतया संकोचेन वाक्यानि योजयितुं, इत्यलं मूर्खतमप्रलपनविमर्शनेन ॥

(कौ०) यच्चोक्तं—दुरुपपादश्च, न तावद्वृक्षाच्छाखाया इवाकर्षणं, शब्दस्य तदयोगात् । परमात्मसंबन्धस्य भङ्गापत्तेश्च । न च सत्येव परमात्मसंबन्धेऽन्यत्रापि संबन्धमात्रं, सङ्केतस्यापीश्वरेच्छारूपत्वेन नित्यत्वादक्षादिसाम्यतादवस्थ्याच्चेति —

(कु०) सर्वमिदं पूर्वमीमांसा-स्वपरवेदान्ताचार्य-समयानभिज्ञानमूलकम् । तथाहि—मीमांसकमते नैवास्तीश्वरः । तदिच्छा दूरतोऽपास्ता । वेदान्तिनोऽपि नेश्वरेच्छा शक्तिरिति वदन्ति । मुख्यवृत्तिः शक्तिरिति अद्वैतपरिभाषाकृत्, प्रत्याय्यप्रत्यायकभावो बोधकत्वरूपः शब्दनिष्ठः सामर्थ्यविशेषः शक्तिरिति भाष्यानुसारिणो वैयाकरणाः, एवमेवेतरेऽप्याचार्याः । तत्रार्थस्तु अन्वितोऽनन्वितो वेत्यन्यत् । विस्तरस्तु मदीये श्रीव्यासपाणिनिभावनिर्णये द्रष्टव्यः ॥

श्रीशङ्कराचार्यप्रदत्ताऽर्धवैनाशिकबिरुदभूषितमतावलम्बेन ( न्यायमतावलम्बेन ) ब्रह्मवादिनां मतं दूषयतोऽस्य प्रतिवक्तारस्तदीया एव भवितुमर्हन्ति । किञ्चेदं शक्तिवादे — मञ्जूषायां, भूषणसारे, सार-व्याख्यानदर्पणादौ च विस्तरेण दूषितम् ॥

(कौ०) यदुक्तमक्षादिसाम्येत्यादि – (कु०) तदप्यनभिज्ञोऽयं शास्त्रमर्यादाया इति प्रकटयति । तथाहि—शब्दास्तावदेकैकार्था अनेकार्थाश्चेति द्विविधा इति कोशादिसिद्धाः । तत्र घटादय आद्याः, हर्यादयो द्वितीयाः, एकार्था अपि बह्वर्था भवन्ति निर्वचनादिना । तेषां तत्तदर्थेषु सर्वेषु संबन्धोऽस्ति नित्यः । तत्र हि प्रमाणं 'औत्पत्तिक' स्त्वित्यादिमुनिवचनम् । तत्र विवक्षितार्थोपस्थितिस्तु शक्तिसङ्कोचकप्रकरणादिवशात् । नैतावताऽर्थान्तरसंबन्धहानिर्भवति । अतस्तयोः सम्बन्धानित्यता शङ्क्या । ततश्च

प्रकरणादिना ईश्वरातिरिक्तपदार्थवाचकत्वाङ्गीकारेपि ईश्वरसंबन्धाऽहानात् वेदपौरुषेयत्वपक्षप्रवेश इत्याद्यापादनं शब्दार्थमर्यादाऽज्ञानमूलकम् । ततश्च अविवक्षितार्थाऽनुपस्थितौ प्रकरणादिकं प्रतिबन्धकमिति न कश्चित्क्षुद्रोपद्रवः । अस्मदीयमताचार्यग्रन्थतः शब्दार्थसंबन्धनित्यताऽभावाऽप्रतीतेः । अतो न जैमिन्यादिमुनिवचनविरोधः ।

समाकर्षपदार्थस्तु—ईश्वरातिरिक्तसर्ववस्तुष्वपि शब्दानामस्ति नित्यः संबन्ध इति ईश्वरोपदेशाद् बुध्वा सृष्ट्यादिकालिकवृद्धव्यवहारः । अथवा—ईश्वरविषयकोपस्थितिरूपफलोपधायकत्वाभाव इति गृहाण । समस्तवेदवेद्ये सर्वशब्दवाच्ये जगदीश्वरे वाच्यत्वोपलक्षितधर्मसामान्याभावं वदतस्तव त्वदाचार्यपरंपराया एव सकलतान्त्रिकमर्यादाविरोधो, नास्मदाचार्याणाम् ।

किञ्च — तन्त्रान्तरविरोधोद्धाटनमसमञ्जसभाषणम् । यतः सर्वे तीर्थकाराः स्वातन्त्र्येणैव श्रुतीतिहासादिपर्यालोचनया प्रबन्धानां प्रणेतारः ; न तु तन्त्रान्तरविरोधाऽविरोधप्रतिसन्धानेन । तत्राऽविरोध आकस्मिकः क्वचिदंशे, विरोधस्तु प्रायेण । निरूपितामिदं पूर्वमेव । अतो न भूषणं विदुषामीदृशं भाषणम् ॥

(कौ०) यच्च — लोकगृहीतशक्त्यनुसारेणैव समाकर्षवचसां प्रवृत्तेश्चोपजीव्यविरोधश्चेति – (कु०) तदपि मन्दम् – लोकगृहीतशक्तेरेव समाकर्षमूलत्वान्नोपजीव्यता लोकगृहीतशक्तेः, न तेन विरोधः । ‘ अग्निर्हिमस्य भेषज ’ मित्यादेः प्रत्यक्षसिद्धार्थानुसारित्वेपि न गतार्थतां मन्यन्ते वेदप्रामाण्यवादिनः ॥

एतेन—यच्चोक्तं (कौ०) ‘ किञ्च निरूढलक्षणयैव गतार्थत्वात्समाकर्षे प्रमाणं नास्ती ’ ति–(कु०) तदपि परास्तम् । समाकर्षायत्तनानाविधव्यवहारनिर्वाहाय तान्त्रिककल्पिताभिधालक्षणादिस्वरूपप्रभेदानामपि परंपरया समाकर्षाधीनत्वेन लक्षणया तस्य गतार्थताया वक्तुमशक्यत्वात् । एवंच—‘ रूढिर्जगती ’ त्युक्तिस्साध्वी । प्रमाणं च दर्शितमस्माभिः, उक्तं च भाष्यादौ समाकर्षे । प्रयोगबाहुल्यं हि रूढिज्ञापकम् ।

शब्दानां नानार्थतापि लोकव्यवहाराधीना, तन्मूलककोशतो वा, न तु विनिगमकाभावप्रयुक्ता । अतो ‘ न च लभ्यते विनिगमनाविरह ’ इति निरस्तम् ॥

(कौ०) यच्चोक्तं—समाकर्षपदेन निरूढलक्षणैव विवक्षितेति चेत् — न, अपसिद्धान्तादिति— (कु०) तत्तुच्छम्, श्रीमाध्वग्रन्थेषु तथाऽनुक्तेः, 'कल्पनोपदेशाच्चे' ति सूत्रीयतत्वप्रकाशिकोक्तवृत्तिसाप्तविध्यविरोधाभावात् अपसिद्धान्तापादनस्यायोगात् ॥

इति समाकर्षाधिकरणविचारः

---

## प्रकृत्यधिकरणविचारः

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् (१-४-१६)

इदमधिकरणं प्रकृत्यादिसमस्तस्त्रीलिङ्गशब्दसमन्वयार्थमारब्धमिति श्रीमध्वाचार्याणां सिद्धान्तः। विष्णोरुपादानकारणत्वप्रतिपादनायेति केषाञ्चिदाशयः। कौस्तुभकारस्तु खण्डनन्तूक्तमेवेति सामान्यदूषणं स्मारयित्वा तूष्णीं बभूव। आगमैकसिद्धे सामान्यदूषणमिदं न घटत इति आनन्दनयारंभ एव खण्डितमस्माभिः। ब्रह्मणो नोपादानकारणत्वं प्रामाणिकमित्यस्मदीयश्रीव्यासपाणिनिभावनिर्णये आकरे च विस्तृतं बोध्यम् ॥ इति प्रकृत्यधिकरणविचारः

---

## एतेन सर्वेव्याख्याताधिकरणविचारः

एतेन सर्वे व्याख्याता व्याख्याताः (१-४-२९)

(कौ०) यदुक्तं — 'तस्मात्सिद्धं सकलस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वं, ततोऽनन्तगुणत्वं चे' ति माध्वाः, तत्र तादधीन्यादिकं प्रागेव खण्डितम्, शिवविरिञ्चयोरतिप्रसक्तिरप्युक्ते' ति दूषणाभिधानम्—

(कु०) अत्रोच्यते — चर्वितचर्वणन्यायमनुसरति विशेषेण ग्रन्थकृद्द्यम्। अस्माभिरपि तत्रतत्र किञ्चिदुक्तत्वं तदनुसारेणेति वदामः। पूर्वमेव निराकृतमिदं दूषणद्वयम्। शिवविरिञ्चयोरतिप्रसक्तवचनं न युक्तमिति तत्र तत्र निरूपितमधस्तात् ॥

(कौ०) यच्चोक्तं — 'किञ्चैतद्बलेनाऽन्तर्यामित्वमेकमेव सर्वशब्दैस्सिध्येन्न गुणान्तरमिति-(कु०) देतत्—श्रुत्यादिशास्त्रार्थापरिज्ञानमूलकम्। तथाहि—'यतो वा, तत्सृष्ट्वा, सृष्ट्वाऽनुविश्य पुरुषः, ईश्वरस्सर्वभूतानां, अहं सर्वस्य प्रभवो मत्तस्सर्वं

प्रवर्तते, यः पृथिव्यां तिष्ठन्' यः सर्वेषु भूतेषु तिष्ठन्; इत्यादिश्रुतिस्मृत्यात्मकं शास्त्रं स्रष्टुर्हरेरनन्तान् गुणान्प्रतिपादयति। तच्च गुणबोधनं यथायोग्यं तत्तद्गुण-विशिष्टतयोपासनायेति 'आध्यानाय प्रयोजनाभावा'दिति भगवान् सूत्रकार आह। एतेन श्रुत्यादौ भगवतो गुणसङ्कीर्तनं स्वरूपकीर्तनमिति कस्यचिदुक्तिः परास्ता।

अत्र — 'यतो वा' इति तैत्तिरीयं वचनं समस्तचराऽचरसृष्टिमाह। 'इदं सर्वमसृजते'ति तत्रैवोक्तेः। 'तत्सृष्ट्वे'ति (तै० उ०) सृष्टेषु पदार्थेषु स्रष्टुरन्तः-प्रवेशमाह। 'सृष्ट्वे'ति (भाग० ४-१०-७) वचनं समस्तसृष्टिपूर्वं तत्र सर्वत्राऽन्तः-प्रवेशमाह। 'ईश्वरस्सर्वे'ति गीता, 'यः पृथिव्यां, सर्वेषु' (बृ० ५) इति वाजस-नेयवचनं च सर्वभूतान्तर्यामित्वं, तस्य सर्वनियमनरूपफलं च वक्ति। 'अहं सर्वस्य प्रभव' (गी० १०-८) अहं कृत्स्नस्य जगतः' (गी० ७-६) इत्यादिवचनं सर्वेषां सृष्टिपूर्वं प्राचीनतत्तत्कर्मानुसारेण, स्वस्वकर्मणि प्रवर्तन-प्रेरणां ब्रूते। 'यः पृथिव्या' मित्यादि वाजसनेयिनां वचनं च।

'यः पृथिव्यां तिष्ठन्; पृथिव्या अन्तरो, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृत' इत्यस्यायमर्थः — 'य ईदृगीश्वरो नारायणाख्यः, पृथिवीदेवतां अभ्यन्तरस्सन् नियमयती'ति व्याख्या-तत्वाच्छाङ्करे, पृथिवीपदं तदभिमानिदेवतापरं, यच्छब्दचतुष्टयं नारायणपरम्। यो नारायणः, पृथिव्यां तिष्ठन्=तदन्तस्स्थितः पृथिव्यास्तद्देवतायाः, अन्तरो=भिन्नः, न वेद = न जानाति, शरीरं=नियम्यं न तु भोगावच्छेदकं कर्मार्जितं, यो नारायणः पृथिवीदेवतां नियमयति, एषः नारायण आत्मा (स्वामी) अन्तर्यामी अमृतो = नित्य-मुक्त इति। शिष्टं स्पष्टम्। एवं 'योऽप्सु तिष्ठ'न्नित्याद्युत्तरितनविंशतिवाक्येषु योजना कार्या। तत्र अबादिपदानि तत्तद्देवतापराणि, यच्छब्दा नारायणपराः। सर्वत्र त इति उद्देश्योद्दालकपरम्। अत्र आधाराधेय-नियम्यनियामकभावादिना ईशजीवयोर्भेदः, सर्वेषामन्तरात्मा नारायण इति च स्पष्टं बोधितम्।

ननु — अदृष्टोपि द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता; नान्योऽतोऽस्ति द्रष्टा, नाऽन्योऽतोऽस्ति श्रोता, नान्योऽतोऽस्ति मन्ता, नाऽन्योऽतोऽस्ति विज्ञाता'इत्येतद्ब्राह्मणचरमवाक्ये अन्तर्याम्यतिरिक्तद्रष्टृचेतनान्तरस्य

विधिनिषेधमुखेन प्रतिषिद्धतयाऽऽत्मैक्याऽवगतेः नियम्यनियामकभावादिना जीवेशभेदस्सिद्ध इति न युक्तमिति चेत्, उच्यते — 'अदृष्टो द्रष्टा' इत्यादेः स्वातन्त्र्येण द्रष्टाऽन्तर्याम्येव नान्य इत्यर्थः। इदं वाक्यं विधिमुखेन प्रवृत्तम्। उक्त एवार्थो निषेधमुखेन दृढीक्रियते—नाऽन्योऽतोऽस्तीत्यादिना ॥ अतः = अन्तर्यामिणो नारायणात्, अन्यः=इतरः पुरुषः, द्रष्टा न=स्वातन्त्र्येण द्रष्टा नेत्यर्थः।

एवञ्च—अनेन वाक्यद्वयेन स्वतन्त्रद्रष्टृपुरुषान्तराभाव एव बोधितः, न तु चेतनान्तरसामान्याभाव इति जीवेशभेदसिद्धिरित्युक्तिर्युक्तैवेति। न च — भेदप्रतीतिर्भ्रान्तिः, चेतनान्तराभावप्रतीतेश्चेतनैक्यप्रतीतेर्वा भ्रान्तित्वमिति वक्तुं शक्यत्वात्।

किञ्च—यद्यस्यान्तर्यामिब्राह्मणस्यात्मैक्ये तात्पर्यम्, तर्हि—प्रश्नोत्तररूपपूर्वसन्दर्भस्य, 'एष त आत्माऽन्तर्याम्यमृतः, अतोऽन्यदार्त'मिति ब्राह्मणवाक्यशेषस्य च उन्मत्तजल्पनवन्निरर्थकमुपेक्ष्यमेव स्यात्। विरमेच्च समाधाता 'नान्योऽतोऽस्ति विज्ञाते'त्यन्तेनैव भाषणेन। वाक्यशेषे 'एष' इत्यादि स्पष्टम्। 'अतोऽन्य-'दित्यस्य तु — अतो = नारायणात्, अन्यत्=इतरत्, आर्तम् = रोगादिपरिपीडितमित्यर्थः। ततश्च—वाक्यशेषेण सर्वान्तर्यामिणो नारायणादन्यस्य वस्तुनोऽस्तित्वप्रतिपादनान्नात्मैक्ये तात्पर्यकल्पनं युक्तम्।

इदं ज्ञेयम्—भगवान्नारायणो विविधविचित्रपरस्परासमानाधिकरणसामर्थ्य (योग्यता) विशिष्ट-स्वसृष्ट-यावत्पदार्थेषु प्रत्यक्षागमसिद्धेषु अनुप्रविश्य तत्तत्पदार्थगतसामर्थ्य (योग्यतां) मभिव्यञ्जयन् स्वस्य तादृशपदार्थसर्जनसामर्थ्यं प्रकाशयति। अतो भगवान् अनन्तगुण इति गीयते वेदलोकयोः। अन्तर्यामित्वपराणां श्रुतिस्मृतिसूत्राणां भगवतो बहुगुणवत्त्वप्रतिपादन एव तात्पर्यमिति श्रुत्यादितात्पर्यविदो वदन्तीति ॥ अन्तर्यामित्वेनैव सर्वगुणसिद्धौ 'न गुणान्तरं सिद्ध्ये'दित्युक्तिः श्रुत्यादितात्पर्याऽज्ञानादेव ॥

(कौ०) यच्चोक्तं — 'किं बहुना ज्ञानानन्दादिरूपतापि न स्यात्, आनन्दादिशब्दानामपि असदादिशब्दवन्नियामकतामात्रपर्यवसायित्वात्। सिध्येद्वा-

ऽलीकृतापि 'आत्मकृतेः परिणामा' दिति सूत्रे वर्णितस्य कार्यत्वबहुरूपत्वादेरिव 'स्वाप्यया' दिति सूत्रोक्तलयस्यैव चाऽलीकत्वस्याप्यचिन्त्यशक्तावविरोधात्। अलीकत्वेपि कारणप्रश्नो भगवदधीनतया निर्वाहश्चेत्यादिचर्चा माध्वस्यैव शोभते न विदुषामिति —

(कु०) अत्रेदं वक्तव्यम्—परमेश्वरे तावत् द्विविधा हि गुणा वर्तन्ते। तत्स्वरूपभूता आनन्दादयः; तदितरपदार्थनिष्ठाः स्वामितासम्बन्धेन ज्ञानानन्दादयो बहवो बहुप्रकाराश्चेति अतथाभूताः। तत्राद्याः, 'सत्यं ज्ञानमनन्तं ब्रह्म, स एष आकाश आनन्दो न स्यात्, आनन्दो ब्रह्मेति व्यजानात्' इत्यादिप्रमाणसहस्रैः परमात्मासाधारण्येन प्रमिताः। अन्यनिष्ठास्तु —

'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमश्शमः।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ (गी० १०-४)
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ (गी० १०-५)

इत्यादिप्रमाणैर्भगवत्सकाशादेव सर्वप्राणिनामुत्पद्यमाना ज्ञानाऽज्ञानादयः धर्माऽधर्मसाधनवैचित्र्येण नानाविधाः। अतो भगवतः सर्वलोकमहेश्वरत्वमित्यर्थकैः स्वामितासंबन्धेन वर्तन्त इति सार्वजनीनम्। स्वतस्सिद्धतया प्रमाणप्रमितेऽर्थे तादधीन्यन्यायावसराभावात्, तन्न्यायाश्रयेण चोदनं न शोभनम्, 'नासूया कर्तव्या यत्राऽनुगमः क्रियत' इति न्यायविरुद्धं च। नियामकतासंबन्धस्तु—ईश्वरस्य सर्वलोकमहेश्वरत्वसंपादको, न तु तत्तद्वस्तुस्वरूपतापादक इति हि शास्त्रविदां मर्यादा। अतः तादधीन्यन्यायमाश्रित्य कृतमापादनद्वयमयुक्तम्। अतः— परमात्मनो ज्ञानानन्दरूपता सिद्धा निराबाधा। लयो भगवदधीन इत्येतावता तस्यापि लयो भवत्विति शक्यं वक्तुम्। न हि घटनाशो देवदत्ताधीन इति देवदत्तस्य नाशो दृश्यते।

कार्यत्वबहुरूपत्वादिवदलीकतापि स्यादिति आपादनं न सूरयः साधु मन्यन्ते। कार्यत्वादयस्तु—'तदनुप्रविश्य, बहुस्यां प्रजायेय' 'अजायमानो बहुधा विजायते', 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोपि सन्। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया'॥ (गी० ४-६) इत्यादिप्रमाणप्रमिताः भगवति अणुत्वमहत्त्ववत्। न तथा भगवत्यलीकता प्रमाणसिद्धा। येनाऽचिन्त्यशक्तया तां सङ्घटयामः। सा तु — लोकतो विरुद्धतया प्रतीयमानप्रमाणप्रमितधर्माणामीश्वरे सङ्घटयित्री। न त्वप्रामाणिकधर्मस्य। भवदाचार्या अपि तादृशस्थल एव तामङ्गीचक्रुः। 'असदेव इदमग्र आसीत्' इत्यादौ असत् नाऽत्यन्ताभावप्रतियोगि अव्यक्तं, अविकृतं वा ब्रह्मेत्याहुः। अतो 'ऽचिन्त्यशक्तावविरोधा' दित्युक्तिः, तत्स्वरूपोदाहरणाऽज्ञाननिबन्धनम्॥

(कौ०) अलीकत्वे कारणप्रश्नो भगवदधीनतया निर्वाह्यश्चेत्यादिचर्चाऽत्र माध्वस्यैव शोभत इति यदुक्तम्—

(कु०) एतदपि शास्त्रतत्त्वाऽनभिज्ञाननिबन्धनम्। तथाहि — अस्ति किल लोकवेदयोः सदसदिति व्यवहारः, तत्र ब्रह्म—सत्, घटपटादिवस्तुजातं च। तेषां सत्त्वं नाम कालसंबन्धः, ब्रह्मणस्तु त्रिकालवर्तित्वम्। असत्तु - शशनरशृङ्गादयः। तेषां तत्त्वं कालत्रयसम्बन्धराहित्यम्। सत्यसङ्कल्पस्य भगवतस्तथैव सङ्कल्पात्। उक्तं हि गूडार्थदीपिकायाम् — "समर्थोपि भगवानीश्वरो यवाङ्कुरादीन्पाषाणे न करोति। नन्वीश्वरत्वादयोग्यानां योग्यतां संपादयितुमीष्टे इति चेत्, शक्नोत्येव। नेति को ब्रूते। अथापि सत्यसङ्कल्पत्वात्, यदि संकल्पयेत्। न तु सङ्कल्पयति" इति। सङ्कल्पपूर्विका हि सृष्टिः, 'इच्छामात्रं प्रभोः सृष्टि' रित्युक्तेः। असदलीकमित्यनर्थान्तरम्। तस्य कालत्रयासंबन्धोऽत्यन्ताभावप्रतियोगित्वरूप ईश्वरसङ्कल्पसिद्धः, यतस्तथैव संकल्पात्तस्य, विपरीतसङ्कल्पाभावात् कदापि। नित्यसङ्कल्पो हि सः।

अतो 'ऽलीकत्व' इत्यादि चर्चैषा मनोहरा शोभेतैव शास्त्रतो भगवन्माहात्म्यातिशयविज्ञानवतां सताम्। सर्वं मिथ्येति वदतां परं मा शोभेत। कथं तेषामिदं शोभेत, ईश्वरसत्ताज्ञापकेषु प्रधानभूतं ब्रह्मवित्संमतं श्रुतिबोधितं जगत्कर्तृत्वमेव

न शोभते येषाम् । न तावता काचिदपि हानिरैश्वर्यस्य भगवतो जगदीश्वरस्य, भागवतानां च शास्त्रतत्त्वविदाम् ॥

एतेन—'गुणानां स्वरूमात्रत्वे इष्टापत्तिश्च विशेष इत्यपि शब्दमात्र' मित्युक्तमिति यदुक्तम्—तदपि—निरस्तं भवति । श्रौतस्मार्तव्यवहारं, शास्त्रोक्तविशेषस्वरूपोदाहरणानि तदावश्यकतां चाऽविदुषोक्तत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादिनोक्तज्ञानस्वरूपत्वस्य, 'यस्सर्वज्ञः सर्ववि' दित्यादिनोक्तज्ञानवत्त्वस्य चोपपत्तिः, विशेषाङ्गीकारमन्तरेण न शक्या वक्तुमिति पूर्वमेव निरूपितम् । विस्तरस्तु—अद्वैतकालाऽनलादावाकरे च ॥

(कौ०) यत्त्वत्र— 'तस्माद्वचनाभासकल्पनामात्रमवलम्ब्य प्रवृत्तमिदं मध्वमतम् । न खलु न्यायलेशोऽपीति स्थित' मिति प्रथमाध्यायदूषणनिगमनम् —

(कु०) तत्रेदमुच्यते— अयमेवं वदतीति माभूवन् खिन्नमानसाः साधवः । स्वभावो ह्ययमभक्तस्याऽऽसुरस्वभावस्य कंसादिवत् , यदिह भगवच्छास्त्रप्रामाण्यवादिनां भागवतानां, भगवतश्च निन्दनम् ।

अयं तु भट्टोजिः कश्चिदद्वैताभिमानी साङ्ग-सरहस्य - पराऽपरविद्यामिथ्यात्वाऽभिमानेन तन्मूलकमस्तसच्छास्त्राणि, तत्प्रतिपादित भगवद्गुण स्वर्गनरकतत्साधनपुण्यपापकर्मतदनुष्ठानतत्फलान्यपि तथाविधान्येवेति मतिं शास्त्राऽशिक्षितमन्दमतीनामुत्पादयन् सन्मार्गात्तान् भ्रंशयित्वा नाशयतीति ज्ञातव्यम् ।

उक्तंहि गीतायामासुरस्वभावकर्म —

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ (१६-७)

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ (१६-८)

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ (१६-९)

इति भगवता । 'अत्र — मायाविनोऽनृतवादिनो ह्यासुराः । लोकायतिकदृष्टिरियम् । क्षयाय जगतः प्रभवन्ती' ति शाङ्करव्याख्या ।;

भाष्यकृदुदाहृतप्रमाणवचसां कल्पितत्ववचने नाऽधिकारोऽल्पमतीनामिति निरूपितमवस्तात् सविस्तरम् । स्वार्थसाधनसामर्थ्यविहीनपुरुषभाषणमिदमसमञ्जसमिति च ॥

सन्ति हि सर्वे न्याया अविरुद्धाः प्रमाणप्रपञ्चयोस्सत्यतां वदतां श्रीमध्वाचार्याणां श्रीमन्नारायणशरणानां मते ।

'यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम' ॥ (गी० १८-७८)

इति भगवद्वचनात् ।

श्रुतितत्सिद्धपदार्थसामान्याऽभाव (न्यमिथ्यात्व) वादिनां मते हि न कोपि न्यायः । मानमेयानामसत्यत्वात् न्यायसञ्चाराऽनवसरात् न्यायानामपि मिथ्यात्वात् ॥

इत्थमिदानीं सर्वान्तर्यामिणमर्थयामहे--

भगवन् , भवत्प्रेरणया सन्मार्गप्रवेशासादितसद्गुरुसेवादिसदाचारसंपद्विशुद्धात्मचित्तैः, भवद्दत्तभावैः, सदा साधुभावैः, साङ्गश्रुतिस्मृतीतिहासपुराणादिसच्छास्त्रविमर्शनेन भगवतो नारायणस्य सर्वजगत्कर्तृत्वसर्वोत्तमत्वव्यवस्थापक सूत्रकृच्छ्रीमद्बादरायणसुशिक्षितधिषण-श्रीमदानन्दतीर्थभगवत्पादाचार्यवर्यप्रदर्शितमार्गेण, श्रीमन्नारायणचरणनलिनयुगलनिष्यन्दमानमकरन्दसन्ततास्वादनचणस्वान्तप्रसन्नहृदय-सद्गुरुसेवासमुपलब्धसद्धर्मसदाचारनिर्मलाऽन्तःकरणभक्तिमदाचार्यसकाशात् संश्रुतसच्छास्त्रमननाभ्यासनिश्चितभगवन्माहात्म्यज्ञानैरनन्यशरणैः अनवच्छिन्नमाहात्म्यज्ञानपूर्वकप्रेम-

प्रवाहरूपपरमात्मपरमभक्त्या, "शरणं मे भूयात्, भगवान् श्रियःपती रक्षिता सर्वलोकस्ये" ति अनुक्षणमनुसन्दधानैः सर्वैर्भक्तजनैः पद्मापद्मासनगिरिजापतिमुखसुरगणवन्दितपद्मापतिकरुणाकटाक्षवीक्षणभाजनैर्भवितव्यमिति शम् ॥

श्रीमध्वभाष्यटीकादिसमालोचनयाऽनया ।
प्रीयतामस्मदाचार्यहृदयाब्जे वसन् हरिः ॥ १ ॥

भट्टोजिपण्डितकृततत्त्वकौस्तुभखण्डने ।
श्रीसेतुमाधवाचार्यकृते कुलिशनामनि ॥ २ ॥

आद्योऽध्यायोऽभवत्पूर्णो येनाचार्यः प्रसीदति ।
अनेन वासुदेवाख्यः परो देवः प्रसीदतु ॥ ३ ॥

श्रीमद्वैष्णवमण्डलमण्डनायमान श्रीमुष्णार्याचार्यवंशमुक्ताफल वैयाकरणचक्रवर्ति

वैयाकरणकेसरि महामहोपाध्याय

श्रीमुष्ण व्याकरण सुब्बरायाचार्यात्मजेन;

विद्यामार्तण्ड श्रीमध्वसिद्धान्तभूषण

महामहोपाध्याय

**श्री. व्या. सेतुमाधवाचार्येण**

श्रीपद्पुरीविराजमान श्रीवेङ्कटेश्वर संस्कृतमहा-

विद्याशालाध्यक्षपदात्प्राप्तविश्रान्तिमता

कृते कुलिशे भट्टोजीय

तत्त्वकौस्तुभखण्डने

॥ प्रथमोऽध्यायः समाप्तः ॥

श्रीकृष्णार्पणमस्तु ।

श्रीगुरुभ्यो नमः

# अथ द्वितीयोऽध्यायः

## स्मृत्यधिकरणविचारः

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात्। (२-१-१)

(कौ०) यदुक्तं — 'प्रथमे समन्वय उक्तः। तत्र युक्त्यादिविरोधं निराकर्तुं द्वितीयाध्याय आरभ्यते इति माध्वा' इत्यनूद्य 'तन्नेत्यादिना 'समन्वयो दुरुपपाद इति प्रथमाध्यायगतत्वदधिकरणभङ्गेन स्फुटीकृतत्वादि' ति दूषणम्।

(कु०) इदमसङ्गतमिति वेदितव्यम् — कौस्तुभकृत्कृतमाध्वाधिकरणभङ्गस्य प्रथमाध्याय एव तत्रतत्रास्माभिश्शतधा दूषितत्वात्। एतेन — 'एवंच द्वितीयाध्याय-स्त्वद्रीत्याऽभित्तिचित्रायत' इत्युक्तिः पराहता ॥

(कौ०) यच्चोक्तं — किंच तर्कागोचरे परमेश्वरे युक्तिविरोधोऽकिंचित्कर इति वदतस्तव मतेऽविरोधाध्यायोऽकाण्डताण्डवप्राय इति।

(कु०) तदेतदतितुच्छम्। न वाक्यमात्रेणालं, प्रमाणेन तर्काऽगोचरत्वव्युत्पाद-नाय हि भगवान् सूत्रकारो द्वितीयमध्यायमतनोत्। तदभिप्राय एव भाष्यकारादि-भिर्विशदीक्रियत इत्यभ्युपगमात्। शङ्कितारं प्रति नैवं शङ्कनीयं भवतेति न वाच्यं, किन्तु शंकां समाधाय सन्तोष्टव्यश्शंकितेति तन्त्रविदो वदन्ति। सर्वं मिथ्येति वदतस्तव मते हि अयमध्यायः, शास्त्रं च सर्वमकाण्डताण्डवतां प्राप्नुयात्। न तु व्याससिद्धान्तवादिनां मते।

ततश्च विरोधशङ्कापरिहारेणोक्तसमन्वयस्य निरपवादत्वेन हरेस्सर्वगुणसिद्ध्या तदुपासनातत्फलविचारः सार्थक एवेति सर्वं सुस्थमिति भगवतो बादरायणस्याशयः, स एवाऽऽविष्कृतो मध्वाचार्यैरिति श्रीमध्वदर्शनं प्रामाणिकमेवेति जानीहि। एतेन - 'एवञ्च समन्वयमविरोधं चोपजीव्य प्रवृत्तौ साधनफलाध्यायावप्यफलावेवेति समूल-मुन्मूलितमेव मध्वदर्शन' मिति यद्भाषणं भट्टोजेस्तदेव निर्मूलमिति मन्तव्यम् ॥

(कौ०) यच्चोक्तं – तथापि तत्रतत्र दूषणान्तराणि बहूनि सन्तीति स्फुटीकर्तुं प्रवर्तामहे इति ।

(कु०) अत्रोच्यते – इदं च प्रतिज्ञावाक्यं गन्धर्वनगरसदृक्षं बिभीषिकामात्रं, यथाऽनेनोत्प्रेक्ष्यमाणदोषगणो नावतरति, तथा तत्रतत्र श्रीजयतीर्थश्रीराघवेन्द्रचरणादिभिर्व्याख्याता मूलटीकाग्रन्थाः ; विस्तरभिया नेह वितन्यते ॥

(कौ०) 'एवंच अवैदिकस्मृतीनामप्रामाण्यान्न समन्वयविरोध इति माध्वाधिकरणशरीर' मित्युक्त्वा, तुच्छं चैतत - पाशुपतपाञ्चरात्रयोर्वैषम्यस्य ब्रह्मणाऽपि दुरुपपादत्वात । तथाहि - तत्प्रणेत्रोश्शिवविष्ण्वोः परमात्मत्वेन कथन' मिति यदुक्तम्—

(कु०) तदत्यन्तमसंगतं, प्रथमाध्याये बहुष्वधिकरणेषु परमात्मत्वं विष्णोरेव न शिवादेरिति निरूपितत्वात् । शङ्कराचार्यैः 'आदिकर्ता' नारायण इति गीताभाष्योक्तेः, अस्मिन्नेवाधिकरणे नारायणपदघटितकारणत्वप्रतिपादकभारतवचनोदाहरणात्, अन्तर्यामिब्राह्मणे नारायणस्य अन्तस्थत्वरूपेण सर्वनियामकत्वोक्तेश्च । परमात्मत्वं जगत्कर्तृत्वेन प्रतिपाद्यस्य नारायणस्यैव सिद्ध्यति ।

एवंच – विष्णोरेव सर्वजगत्कारणत्वेन परमात्मत्वात्, तत्प्रणीतं पाञ्चरात्रमेव प्रमाणं न शैवागमादिः ।

किंच – भवदाचार्यैः 'उत्पत्त्यसंभवा' धिकरणे पाञ्चरात्रे जीवोत्पत्तिपरभागातिरिक्तभागस्य प्रामाण्याङ्गीकारात्, पाशुपतादेः क्वापि तदनुक्तेः, उभयोरागमयोर्वैषम्याभावनिरूपणमसङ्गतम् । एवंच - कर्तृवैषम्यादेव वैषम्यं सिद्धम् ।

'एतेन फले विशेषस्येत्यादिः उभयोस्तुल्यं, स्फुटीकृतं चेदं प्रागेवे' त्यन्तो निरस्तः । वैगुण्यात् पाञ्चरात्रोक्तफलालाभादिकथनं युक्तं, न तु पाशुपताद्यागमफलेषु । पाञ्चरात्रस्य जगत्कारणसर्वदेवोत्तमनारायणकृतत्वेन प्रमाणतमत्वात् ॥

(कौ०) यच्चोक्तं – पाशुपतस्यैव शिवोत्कर्षादेरनेकोपनिषत्संवादः, श्वेताश्वतरादिषु बहुशस्तद्दर्शनात्, तथा शिवोत्कर्षपराणि शिवपुराणानि संख्यातो विष्णुपुराणादिभ्योऽधिकानि । दर्शितं पुराणबाहुल्यं प्रभासखण्डे – 'चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शेषेषु भगवान् शिवः' इत्यादि, भूयसामनुग्रहश्च

न्याय्यः जैमिन्युक्तेरिति । वस्तुतस्तु 'न हि निन्दा' न्यायाश्रयणाद्विरोध एव नास्ति । किन्तु - 'शैवागमोऽपि द्विविधः श्रौताऽश्रौतविभागत' इति वायुसंहितावचनात् श्रौतपाशुपतस्योपनिषत्संवादिनो वैदिकविषयता, इतरस्य तु पाञ्चरात्रवत् भ्रष्टविषयतेति विवेक इति ।

(कु०) इदमतितुच्छमिति विदाङ्कुर्वन्तु । सर्वस्याऽस्य पूर्वोक्तदिशा परिहारसंभवात् । अथापि किञ्चिदुच्यते — इदं सर्वमसमञ्जसवचनम्, सर्वस्याऽस्य शैवसिद्धान्तवादिमतावलंबेनोक्तत्वेन 'शाङ्करादपि भाष्याब्धेस्तत्त्वकौस्तुभमुद्धर' इति स्वप्रतिज्ञाभङ्गात् । शङ्कराचार्यो हि 'आदिकर्ता नारायणः, वासुदेवं परं तत्वं व्यञ्जयद्गीताशास्त्र' मिति वदन् नारायणस्यादिकर्तृत्वं, तस्यैव समस्तशास्त्रप्रतिपाद्यत्वमिति स्वाशयं स्पष्टमेवाह । शैवागमो हि द्विविध इत्यादि तु श्रीकण्ठभाष्ये 'पत्यादिशब्देभ्य' इति सूत्रार्थविवरण उक्तं, न शाङ्करे भाष्यादौ, भामत्यादिव्याख्यानेषु, सिद्धिग्रन्थे च । 'आदिकर्ता नारायण' इत्यादिशाङ्करवचनेनैव शैवागमविभागादिरपि परास्तः ।

भूयोऽनुग्रहन्यायस्तु नात्राश्रयितुं शक्यः, तथा सति नास्तिकानां बहुत्वेनाऽधिकसंख्याकत्वात्तन्मतावलंबो वरमिति शक्यं वक्तुम् । नहि निन्दान्यायाश्रयणे तु लौकिकवैदिकसकलव्यवहारनिष्कर्षाऽसिद्धिदोषः, सर्वशास्त्रसिद्धान्तोऽप्रयोजकः, प्रकृतेऽविरोधाध्यायाऽसाङ्गत्यं च । विरोधस्याऽनेन न्यायेन परिहारसंभवात् । ततश्च - श्रौतपाशुपतस्येत्यादिनिगमनं विष्णुकर्तृत्ववादिशङ्कराचार्यसिद्धान्तप्रतिपक्षत्वात् सर्वथा दूरतो निरसनीयं तन्मतानुयायिभिरपि । 'इतरस्य तु - पाञ्चरात्रवत् भ्रष्टविषयतेति विवेक' इति तु असङ्गततममिति प्रथमाघाते निरूपितत्वात् ।

किंच — पाञ्चरात्रे 'श्रीनारायणस्य कर्तृत्वं सर्वकर्मसमाराध्यत्वादि च श्रुतिसंवादात् न प्रतिषिध्यते' इति उत्पत्त्यधिकरणीयशाङ्करसिद्धान्तेन स नारायणः कर्तृत्वानुसन्धानपूर्वं यजनीय इति सर्वशास्त्रतात्पर्यलाभात् । दक्षिणापथे वर्तमानवैदिकसार्वभौमैः शङ्करमतानुयायिभिः सालिग्रामपूजनादीनामनुष्ठीयमानत्वात् शिवनिर्माल्यादेरस्वीकाराच्च पाञ्चरात्रस्य सज्जनविषयतैव, न तु भ्रष्टविषयतैवेति । तस्मात्तद्दृष्टान्तोक्तिः भट्टोजेरत्यन्तमविवेकितां शास्त्रस्वाचार्यदूषणपर्यवसायिनी सती भ्रष्टतमतां चावेदयति ।

'नारायण आदिकर्ता विष्ण्वाख्य' इत्यादि श्रीशाङ्करोक्तिं प्रमाणतयाऽऽस्थाय विशिष्टवेदार्थप्रतिपादके 'ऊर्ध्वमूलमधश्शाख' (१५ अ० १) मिति श्लोकव्याख्याननिगमने 'संसारवृक्षस्य मूलमीश्वरः श्रीनारायणः, ब्रह्मादयस्तदंशाः शाखास्थानीयाः, संसारवृक्षो विनश्वरो, नित्यश्च प्रवाहरूपेण। वेदोक्तैः कर्मभिः सेव्यतामापादितश्चेत्येतावानेव वेदार्थ' इति वेदार्थं संक्षिपन् श्रीधराचार्यः श्रीनारायणस्यैव जगत्कर्तृत्वं, सर्ववेदार्थोऽप्ययमेवेति प्राह। शिवस्य कर्तृत्वं क्वापि नोक्तं शङ्करादिभिरिति निरूपितमेवाधस्तात् ॥

इति स्मृत्यधिकरणविचारः।

---

## नविलक्षणत्वाधिकरणविचारः

न विलक्षणत्वादस्य तथात्वं च शब्दात् (२-१-२)

(कौ०) 'अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशय' इत्यन्तमाध्वग्रन्थमनूद्य इहापि खण्डनं प्राग्वत्, आगमानां वैषम्यस्य दुर्वचत्वात्, इतराप्रामाण्योक्तेर्न हि निन्दान्यायेनैव नेयत्वादिति दिगिति यदुक्तम् —

(कु०) अत्र वदामः—प्राक्पदेन पूर्वाध्यायविवक्षायां तत्रोक्तस्य खण्डनस्य तत्रैव तस्य मत्कृतदूषणेन, पूर्वाधिकरणविवक्षायामपि तत्खण्डनस्य तत्रैव मया कृतदूषणेनेदमसङ्गतं बोध्यम्। आगमवैषम्यं सप्रमाणं पूर्वाधिकरणे निरूप्य वेदानुसारिपाञ्चरात्रादिवैष्णवागमः प्रबल इति निरूपितत्वेन दुर्वचत्वोक्तिर्दुरुक्तिरेव। नहिनिन्दान्यायाश्रयणे सन्ति बहवो दोषा इति ह्युक्तमेव पुरस्तादिति कौस्तुभकृदुक्तं सर्वं तुच्छम् ॥

इति न विलक्षणत्वाधिकरणविचारः।

## अभिमान्यधिकरणविचारः

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (२-१-३)

(कौ०) 'मृदब्रवी' दित्यादिवचनं तदभिमानिदेवताकर्तृकभाषणपरमिति न विरोध इति सिद्धान्तोऽस्माकमप्यविरुद्ध इति।

(कु०) अत्रेदं वक्तव्यम् - 'अस्माक' मिति साभिमानं भाषणम् । नायं कश्चित् वेदान्तविद्विद्वन्मणिः, न सर्वसम्मतसिद्धान्तकर्ता । अत एतदभिप्रायविरोधाऽविरोधावकिंचित्करौ । तस्मादेवमुक्तिरसङ्गतेति ॥

इत्यभिमान्यधिकरणविचारः ।

---

## असदधिकरणविचारः

असदिति चेन्न प्रतिषेधमात्रत्वात् (२-१-४)

(कौ०) तथाच विष्णोः सिद्धं जगत्कारणत्वमिति माध्वाधिकरणशरीरमित्युक्त्वा, खण्डनं प्राग्वदित्युक्तम् ।

(कु०) एतदपि प्रतिक्षिप्तं पूर्वमेव पूर्वाधिकरणदूषणदूषणेन ॥

(कौ०) यदुक्तं – 'किंच - शशशृङ्गादिवन्न जनकमिति माध्वेन दुरुपपादम्, अलीकस्यापि ज्ञानविषयता' मित्यादिदूषणम् ।

(कु) अत्रोच्यते – एवमादिदूषणं प्रथमाध्यायान्तेऽनेनोक्तमेव पुनरत्रोच्यते । अस्माभिः सविस्तरं दूषितं तत्रैव । इदं बोध्यम् – टीकादौ कृताक्षेपसमाधानयोः आक्षेपांशमात्रमादाय स्वोत्प्रेक्षितदोषतया उक्तो भट्टोजिना । अत्रत्येन समाधानपरटीकाग्रन्थेनैव दूषितोऽयमिति 'प्रकृताधिकरणस्य निरालम्बनत्वापत्ते' रित्यन्तः कौस्तुभः खण्डितो भवति ॥

(कौ०) यच्चोक्तं कौस्तुभकृता – 'यत्तु प्रकृताधिकरणमेव प्रागभावप्रध्वंसयोर्जनकतानिराकरणपरमिति अनुव्याख्यानन्यायसुधयोरुक्तं, तदपि दुरुपपादम् । तथाहि – 'सर्वे पदार्था भावाऽभावोभयात्मकाः, प्रागभावप्रध्वंसाभावाऽन्योन्याभावेष्वपि प्रमेयत्वादेर्भावरूपस्य सत्त्वात् । तस्य च धर्मिणा सहाऽत्यन्ताऽभेदात् । एवं घटादिरप्यन्योन्याभावेन सहाऽत्यन्ताऽभिन्नत्वादभावरूप ' इति सुधायां स्पष्टम् । 'खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् । भावाभावस्वरूपत्वान्नाऽन्योन्याभावता पृथक् ' इति त्वत्सिद्धान्तानुगुणं च । एवं स्थिते कथमभावकारणतां निराकुर्या ' इति —

(कु०) इदमपि दूषणम् – 'अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिणः। तादृक्त्वं मात्रतेहोक्ता बुद्धिराहित्यमेव तत्'॥ इति तत्रत्यानुव्याख्यान-व्याख्यासुधायामेव इत्थमाक्षिप्य 'किन्तु - धर्मद्वारमन्तरेण धर्मिण एव प्रतिषेधत्व' मित्यादिना कृतसमाधिना खण्डितं भवतीति ज्ञेयम्। सुधार्थस्तु - यत्र धर्मिण एव प्रतिषेधत्वं प्रथमप्रतीतौ तादृशप्रतिषेध एव सूत्रकृता विवक्षितोऽत्र सूत्रे। अभावस्य प्रमेयत्वेन भावत्वेपि न प्रतिषेधत्वहानिरिति धर्मिणोऽभावस्य निषेधरूपत्वात्। धर्मस्तु अप्रधानमप्रयोजकमिति। विशेषांशस्तु सुधादितो ज्ञातव्यः। समाधानपरसुधा-ग्रन्थार्थमज्ञात्वा स्ववर्ग्यपृथग्जनमनोरञ्जनाय सुधाकृत्प्रदर्शिताक्षेपमात्रं चोरयित्वा स्वकपोलकल्पितदूषणत्वेन स्वग्रन्थे विलिखितं कौस्तुभ इति जानन्तु विद्वज्जनाः।

ननु धर्मधर्मिणोर्भेदाभावादुक्ता व्यवस्था न युक्तेति चेत्, 'विशेषबलाद्भेद-व्यवहार' इत्यादिसुधादावेव अभिधानात् नैवं शङ्कनीयमिति ज्ञेयम्। न च विशेषो निराकृत इति चेत्, विशेषपदार्थः सर्वैरङ्गीकार्य इति वैशेषिकाधिकरणसुधादौ निरूपितः, अस्माभिरपि अत्र कुलिशे तदावश्यकतोपपादिता। व्याप्तिशक्तिग्रहौ सादृश्येनैव निर्वाह्याविति सुधापद्धत्यादौ प्रपञ्चितौ, ततोऽवसेयौ। सूत्रकृता समवायनिराकरणादेव शक्तिग्रहसाधनानुगतधर्मस्यापि निराकृतप्रायत्वेन सादृश्यमेव तत्साधनं बोध्यम्।

एतेन – 'स्यादेत' दित्यादिना यो दोषगणो निरूपितः; स पूर्वग्रन्थेन, सुधादितश्च, निरस्तो बोध्यः। इदं सर्वं चर्वितचर्वणमेव भट्टोजेः॥

इति असदधिकरणविचारः

---

## भोक्त्रधिकरणविचारः

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् (२-१-१४)

(कौ०) यथा एकीभूता ब्राह्मणा एकस्थाना एकमतयो वा तथेहापीत्यर्थः। खण्डनं प्राग्वदित्युक्तम्।

(कु०) अत्र अर्थ इत्यन्तोऽनुवादः। प्रागित्यादि तु दूषणम्। प्रागुक्त-जीवेशैक्यादेस्सप्रमाणं बहुधा दूषितत्वेन इदमयुक्तं ज्ञेयम्। अत्र 'एकीभवन्ती' ति

च्विप्रत्ययप्रयोगोऽनुकूलो जीवभेदवादिनाम्, ऐक्यवादिनां प्रतिकूल इति न्यायविवरणे, सुधायां, न्यायामृते च, स्पष्टम्। श्रीव्यासपाणिनिभावनिर्णये निपुणं निरूपितमिदमस्माभिः॥

इति भोक्त्रधिकरणविचारः।

---

## आरंभणाधिकरणविचारः

तदनन्यत्वमारम्भणशब्दादिभ्यः (१-१-१५)

(कौ०) 'युक्तं सर्वगुणपरिपूर्णत्वं विष्णो' रिति माध्वाधिकरणं, खण्डनन्तु प्राग्वदित्युक्तम्।

(कु०) ग्रन्थकृत्कृतजीवैक्यनिरूपणस्य बहुधा दूषितत्वेनेदं च खण्डितमिति वेदितव्यं सूरिभिः।

इति आरंभणाधिकरणविचारः।

---

## इतरव्यपदेशाधिकरणविचारः

इतरव्यपदेशाद्धिताऽकरणादिदोषप्रसक्तिः (२-१-२२)

(कौ०) युक्तं विष्णुर्जगत्कर्तेति। खण्डनं तु प्राग्वत्।

(कु०) अत्र इत्यन्तोऽनुवादः। अधस्तादेव ग्रन्थकारकृतवादस्य अस्माभिर्दूषितत्वेन इत्थमुक्तिः पराहतेति ज्ञेयम्॥

(कौ०) यदत्रोक्तं – 'किंच निरवयवत्वं त्वया दुर्वचं, व्यतिरेको गन्धव' दित्यधिकरणे जीवस्य सांशताया व्यवस्थापनात एवञ्चांशविशेषैः कार्यानुसारितारतम्येन कर्तृत्वमुपपद्यत एवे' ति।

(कु०) अत्र वक्तव्यम् – 'श्रुतिपुराणाद्यागमवेद्येऽर्थे न चोदना कार्या, यथाशब्दं सर्वमङ्गीकार्यमेवेति 'श्रुतेस्तु शब्दमूलत्वा' (२-१-२८) दितिसूत्रे श्रीशङ्कराचार्यैरुक्तदिशा शब्दप्रमाणकैस्सर्वैः कौस्तुभोक्तमिदं दूषणं सुपरिहरमिति

वेदितव्यम् । सुधायामत्रैवाधिकरणविचारनिगमने – एवंजातीयमाक्षेपं समाधाय "तस्माद्भगवानेव स्वरूपस्वभावविशेषाणां नियामकः, चैतन्यमवच्छेदकं विधाय विशेषं निमित्तीकृत्य विरुद्धे अपि अभेदबहुत्वे समावेश्य, अभेदेन निरवयत्वशब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न्यक्कृत्य कार्याऽनुरूपं सामर्थ्यविशेषं योजयन्, जीवेन कारयतीत्यङ्गीकर्तव्य" मित्यादिना एवमादिसकलक्षुद्रोपद्रवाः परिहृताः । इदं सर्वं विचित्रशक्तित्वादीश्वरे संभावितमेव । विशेष ईश्वराचिन्त्यशक्तिश्चेत्युभयमङ्गीकार्यमिति पूर्वमेव निरूपितं, अद्वैतकालानलादाविदं विशदीकृतं च । तत्र हि तृतीयज्वालायां —

सर्वैस्सन्देहशून्यैः स्फुटमधिगतमप्यर्थमाच्छन्नमेव
ब्रूते मूर्खस्स नूनं स्तनमजगलगं दोग्धि दुग्धोपभुक्त्यै ।
व्यर्थीकृत्यावृतिं यस्स्फुरति न हि तदर्थं समारम्भणीयं
शास्त्रं तस्मात्त्वयैव व्यरचि दृढनरः पूर्वपक्षोऽसदीयः ॥ ४५ ॥

वैचित्र्यं सलिलानलादिषु तवाऽविद्यावतोऽपीप्सितं
भेदेनैव वदस्तु भेदरहिते भेदानुकल्पादपि ।
नो चेत्स्यात् नृविषाणमप्यघटिताविद्यात उत्पद्यते
नित्यं भाति न भाति चेति सकलं स्याद्वादिवादायते ॥ ४६ ॥

विशेषं समासाद्य संछादनार्थं ह्यविद्योद्यता सा कथं तं विहन्यात् ।
न यस्सन्निपातस्य सञ्जागरूकः स किं सन्निपातात्त्वया विस्मृतोऽत्र ॥ ४८ ॥

इत्यादिभिः श्लोकैः ॥

इतीतरव्यपदेशाधिकरणविचारः

---

## श्रुतिशब्दमूलत्वाधिकरणविचारः

### श्रुतेस्तु शब्दमूलत्वात् (२-१-२८)

(कौ०) प्राकृतशरीराभावेपि चिदानन्दात्मकदिव्यमङ्गलविग्रहवतो महापुरुषस्य सर्वकर्तृत्वं युक्तमेवेत्याशयात् । एतच्च मध्वाधिकरणं कुलीरापत्यवन्मूलोच्छेदकं सर्व-

विरोधानां विष्णावदूषणत्वे द्वितीयाध्यायवैयर्थ्यापत्तेः । जीवब्रह्मणोरभेदापाताच्च । उक्तं च —

किंच श्रुत्येकगम्ये रव इव रसनं साधनं बाधनं वा
कर्तुं शक्तं न मानान्तरमखिलजगत्कर्तरीति स्वरीतिः ।
स्मृत्या रूढा कथं न व्यपगमयति ते लोकदृष्ट्या निरूढा-
मेकत्वायोगशङ्कां परतनुधरयोर्वल्गनं तन्मुधैव ॥ (मध्व मु० ४१ इति)

प्रत्यक्षसिद्धस्य जीवस्य श्रुत्येकगम्येन सह कथमभेद इति चेत् कृष्णरामादिशरीराणामिवेति गृहाण । तत्र लोकसिद्धभेदानुवादकानि पुराणानीत्यवोचः । नाहं सर्वज्ञ इति भेदप्रतीतिस्तु सर्वज्ञाऽभेदादेरावरणाद्भविष्यति । नाहमानन्दो, नाहमणुरितिवत् । उक्तं च —

किंचेशे गुणगरिमा न जीववर्गे भूमाख्यस्त्वदभिमतो विरुद्ध एषः ।
यत्तस्मिन्नपि घटते सदा सतोऽस्य स्वानन्दप्रभृतिवदावृतेरभानम् ॥

खण्डनान्तरं प्राग्वदिति — (मध्वमतविध्वंसने २०) इति ।

(कु०) अत्रोच्यते — कुलीरापत्यन्यायोऽद्वैतिमत एव । यतस्ते आत्मैकत्वं वदन्तोऽपि अविद्यावशाद्भेदव्यवहारसिद्धिरिति मन्यन्ते । लोकेऽपि — विरोधोक्ति काव्यकुशला विरोधं परिहृत्य काव्यशोभां पोषयन्ति । सर्वज्ञस्सूत्रकारः अपाणिपादो जवनो ग्रहीतेत्यादिश्रौतविरोधोक्तिपरिहारभङ्गीं प्रदर्शयन् भगवतीं श्रुतिमेवाशोभयत् । तामेव स्पष्टयन्ति भाष्यकारादयः ॥

उक्तं हि कालानले च —

स्यादेतद्यदि परमेश्वरत्वमस्मिन् सिद्धं चेदावरणमपीह कल्पयेत्तत् ।
अन्योन्याश्रयणमिहान्यथा महिम्नो विष्णोऽन्तं न परमयादिति श्रुतिर्हि ॥
(अ० काला० ४·२०) इति ।

(कौ०) अदोषत्वे विष्णोर्द्वितीयाध्यायवैयर्थ्यापत्तेरिति यदुक्तम् —

(कु०) तदसंगतम् — परमात्मा हि सर्वसंमतो दोषविधुर इति । तच्च द्वितीयाध्यायेन वेदवाक्यानां युक्तीनां च, कृते परिशोधने सिध्यतीति निष्कर्षः ।

एवं स्थिते तद्वैयर्थ्यापादनस्यायोगात् । लोके रत्नपरीक्षकैः परीक्ष्येदं रत्नं निर्दुष्टमिति निष्कर्षे कृते हि परिगृह्णन्ति रत्नानि ग्रहीतारः । हरेः चिदानन्दात्मककरपादत्वत्त्वे जीवब्रह्मणोरभेदः कथमापद्येत । तयोः स्वभावत एव विभिन्नधर्मतः स्वत एव भेदसत्त्वात् ।

यदत्र स्त्रोक्तार्थेऽप्यय्यदीक्षितवचनमुदाहृतं, तत् अपार्थकं न युक्तियुक्तं ब्रह्मणि द्वेषमूलकमिति कालानले विस्तरेण 'ईशस्ये' ति श्लोकेन निरूपितम् ।

ईशस्याचिन्त्यशक्त्या परतनुधरयोर्धर्ममिथ्यात्वसिद्धे-
रास्तामेकत्वमित्थं यदुदितमिह तद्दूरिशः प्राङ्निरस्तम् ।
किञ्चासौ स्वात्महत्यै प्रभवति यदि तद्वैकता केन कार्या
नो चेत्संपूर्णशक्तिः कथमिव भवतु व्याहतेः स्वल्पशक्तिः ॥

(अ० का० ५-२०) इति ॥

प्रत्यक्षसिद्धस्य जीवस्य श्रुत्येकगम्येनाभेदस्तु प्रत्यक्षविषयरामाद्यवताराणामिवेति भाषणं च भारतादिस्मृत्यपरिशीलनमूलकम् । तेषां प्राकृतदेहवत्त्वाभावस्य तत्रोक्तत्वात् पूर्वं निरूपितत्वाच्च । स्तंभादाविर्भूतनरहरिदेहवदप्राकृतत्वोक्तेश्च । रामकृष्णाद्यवतारोऽपि न शुक्रशोणितसंबन्धहेतुकः । वसुदेवाख्यसत्वघनादाविर्भूत एव । उक्तं हि भागवते —

सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ।
सत्त्वे च तस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे नमसा विधीयते ॥

(भाग० ४-३-२३) इति ।

इदं च सतीं प्रति शिववचनम् ।

अस्यार्थः - शुद्धसत्त्वखण्डस्य वसुदेव इति नाम, तत्र सत्वे अपावृतः=सर्वावरणरहितो निर्दोष इति यावत् । यत् यस्मात् ईयते प्रकाशते । तस्मिन् आविर्भूतो भगवानधोक्षजः वासुदेव इत्युच्यते हि प्रसिद्धम् । स वासुदेवः, मे मया नमसा विधीयते प्रणामेन पूज्यत इति । मनसेति क्वचित्पाठः । ततश्च वसुदेवशब्दात्सत्वघनवाचकात् प्रकाशितो भगवानित्यर्थे 'शेष' इति लक्षणेनाणि वासुदेवशब्दस्य

व्युत्पत्तिर्दर्शिता शिवेन । अतो वसुदेवस्य क्षत्रियस्याऽपत्यमिति तु अज्ञजनव्यवहारः । 'नैषा क्षत्रियस्याख्या संज्ञैषा तत्रभगवत' इति वासुदेवार्जुनाभ्यां वुन् (पा० ४-३-९८) इति सूत्रीयमहाभाष्यमत्र प्रमाणम् । तत्रभगवतः = परमात्मन इत्यर्थ इति कैयटोऽत्रानुकूलः। अयं च श्लोकः रामाद्यवताराणामप्याविर्भावत्वबोधकः । ततश्च सर्वेषामवताराणामाविर्भावाऽवधिभूततयोक्तं वस्तु घनीभूतसत्वपिण्ड एवेति शिवबादरायणयोरभिप्रायः । एतेन दशरथादिः पिण्डीभूतसत्त्वघनरूप इति ध्येयम् । एवंच - कृष्णरामादिशरीराणामिवेति कथनं शास्त्रहृदयाज्ञाननिबन्धनम् ।

नाहं सर्वज्ञ इति भेदप्रतीतिस्तु सर्वज्ञाऽभेदादेरावरणाद्भविष्यतीति चायुक्तम् । अभेदस्यैवाशास्त्रीयत्वात् तदावरणस्याऽप्रसिद्धेः । 'नाहमानन्दः, नाहमणु' रिति व्यवहारोपि देहात्मवादिभ्रान्तवचनम् । जीवस्वरूपस्यानन्दत्वाणुत्वयोः शास्त्रसिद्धत्वात् ।

'किंचेशे' इति प्रमाणोदाहरणमप्ययुक्तम् । अप्पय्यदीक्षितस्याऽस्मदादितोऽविशेषात्तदीयवचनं शास्त्रीयमहाप्रमेये प्रमाणपदमारोढुं नार्हति । अयंच श्लोकोऽनार्थक इति बहुधा दूषितः कालानले (१३५) किंचेशो गुणगरिमे यनूद्य 'स्यादेतद्यदी' ति श्लोकेन ।

एवंच - लोकसिद्धभेदानुवादकानि पुराणानीति भणितिः साध्वी । नैतावताऽप्रामाण्यं शंक्यम् । 'अग्निर्हिमस्य भेषज' मित्यादीनामिव प्रामाण्यस्य सुवचत्वात् । खण्डनान्तरं प्राग्वदिति वचनं पूर्वग्रन्थैरेव दूषितप्रायम् ।।

इति श्रुतिशब्दमूलत्वाधिकरणविचारः

---

## नप्रयोजनवत्त्वाधिकरणविचारः

### न प्रयोजनवत्त्वात् (२-१-३३)

(कौ०) परप्रयोजनेच्छा तु ज्ञानानन्दप्रयत्नादिवत् स्वरूपात्मिका 'यमेभ्य उन्निनीषत' - इति श्रुतिबलात्स्वीक्रियत एवेति स्पष्टं सुधायाम् । खण्डनं तु प्राग्वदिति ।

(कु) प्राग्वदित्यनेन विवक्षितमर्थं देवोपि न जानाति । पूर्वोक्तदूषणेनैवेद-मपि दूषितं ज्ञेयम् । इच्छा तु फलप्रदानोन्मुखतारूपेति न काचिदनुपपत्तिः ॥

इति नप्रयोजनवत्त्वाधिकरणविचारः

---

## वैषम्यनैर्घृण्याधिकरणविचारः

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति (२-२-३५)

(कौ०) यदुक्तं — अतो दोषत्वाभावादङ्गीकृतमेव भगवतो वैषम्यादी ' ति । अधिकरणखण्डनं प्राग्वदिति ॥ (कु०) खण्डितमेवैतत्पूर्वग्रन्थेनेति ज्ञेयम् ॥

(कौ०) यच्चोक्तं कृपा च दुरुपपादा स्यात्, कृतेः स्वरूपात्मकत्वात्, सापेक्षत्वं दुरुपपादमिति ।

(कु०) रक्षणानुकूलश्चित्तवृत्तिविशेषो दयापरपर्याया कृपा; सापि भगव-दिच्छारूपैव। स्वरूपात्मकत्वेपि सापेक्षत्वं सुवचम् । ' तमेव शरणं गच्छ, तत्प्रसादेने ' त्यादौ भगवत्प्रसादस्य शरणागतिहेतुकत्वोक्तेः ॥

(कौ०) यदप्युक्तं पूर्वतनं कर्मेति आम्रेडितवान् जयतीर्थः टचुटचुलोरप्राप्तिं नाज्ञासीदिति ।

(कु०) इदमसङ्गतमिति शब्ददोषोद्धारावसरे निरूपितं न विस्मर्तव्यम् । अस्य साधुत्वप्रकारश्च तत्रैव दर्शितः ॥

इति वैषम्यनैर्घृण्याधिकरणविचारः

---

## सर्वधर्मोपपत्त्यधिकरणविचारः

सर्वधर्मोपपत्तेश्च (२-१-३८)

(कौ०) ' अश्रुता अपि द्विधा, रमादिचिन्त्या अचिन्त्याश्चेत्यर्थः । अत्रापि खण्डनं प्राग्वत् ' इत्युक्तम् ।

(कु०) खण्डनमिदं खण्डितं पूर्वग्रन्थेनैवेति बोध्यम् ॥

(कौ०) यच्चोक्तं 'भगवान् प्रतिपन्नगुणवान् तदपेक्षावत्त्वे सति स्वतन्त्रत्वात्, जिहासुत्वे सति स्वतन्त्रत्वात् दोषाभाववानि' ति प्रयोगद्वयं दर्शयित्वा, 'अपेक्षावत्त्वे, जिहासुत्वे च सती' ति स्वरूपासिद्धम्, 'आप्तकामस्य का स्पृहे' ति प्रागुक्तत्वात्। सिद्धे इच्छाविरहेण निर्गुणत्वस्य दोषत्वापत्त्या हेतोर्विरुद्धत्वाच्चेति।

(कु०) स्वाचार्याणां परेषां च ग्रन्थानां, गीतादिशास्त्राणां चानवलोकननिबन्धनमिदम्। तथाहि—भक्तानुद्धर्तुं न धनादिकमपेक्षते, भक्तिं तु शुद्धामपेक्षते भगवानिति ॥

'मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः।
नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् (ननु) गजयूथपाय' ॥
(भाग० ७-९-९)

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' (गी० १८-६५) इत्यादिभिः धनादिजिहासायाः सत्कर्मानुष्ठानापेक्षायाः प्रतिपादनात् 'आप्तकामस्य का स्पृहे' त्यादिश्रुतेः स्वभोगानुकूलस्वकृतिजन्यधनादिस्पृहानिषेधे तात्पर्यं, न त्विच्छासमान्याभावे। तेन न स्वरूपासिद्धिः ॥

(कौ०) यदुक्तं—'सिद्धे इच्छाविरहेण निर्गुणत्वस्य दोषत्वापत्त्या हेतोर्विरुद्धत्वाच्चेते दिगिति।

(कु०) इदमयुक्तम् — इच्छायास्सदा सत्त्वादेवेच्छाविरहस्यैवाभावात्, प्रतिपन्नगुणवत्त्वस्यापि सदातनत्वेन निर्गुणत्वस्यैवाप्रसिद्धत्वाच्च 'साध्याभावव्याप्तो हेतुर्विरुद्ध' इत्युक्तलक्षणविरोधानवकाशात्। अस्ति च मया सर्वदाऽऽनन्दादिगुणवता, दुःखादिदोषवर्जितेन भवितव्यमितीच्छा प्रेक्षावत्त्वादिति सुधोक्तेः ॥

इति सर्वधर्मोपपत्त्यधिकरणविचारः

---

इति द्वितीयाध्यायप्रथमपाददोषोद्धारः

## अथ द्वितीयः पादः

### रचनानुपपत्त्यधिकरणविचारः

रचनानुपपत्तेश्च नानुमानम् (२-२-१)

(कौ०) यदत्रोक्तम् – 'यदत्रानुव्याख्याने वल्गितम् —

सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयम् । मायावादुपमां यायात् ........ ' ॥

इति, यच्च — तद्विवृतं सुधायां 'सर्वमानविरोध एव दुर्दीक्षा दुष्टोऽनुष्ठानसंकल्पः तद्दीक्षितः, अयं तु सांख्यो मायावादिनानुपमात्वं प्राप्नुयात् । तेऽपि हि कर्तृत्व-भोक्तृत्वादिसकलधर्मविकलमसत्कल्पं चैतन्यमात्रमङ्गीकृत्य अविद्याया एव अचेतनायाः सर्वकारणत्वं बन्धमोक्षाधिकरणत्वं चाभ्युपगच्छन्ति । तदेतेषां सर्वप्रमाणविरुद्धाङ्गी-कारित्वे सांख्योऽयं दृष्टान्तभावमापद्यते ' इति । तदुभयं मध्वजयतीर्थयोः शास्त्र-संप्रदायाऽनभिज्ञतां स्फुटयति । तथाहि – ' कर्ता शास्त्रार्थवत्त्वा ' दित्यधिकरणे बन्धश्चैतन्यस्य स्थापितः अन्वेष्टव्यात्मविज्ञानात्प्राक् प्रमातृत्वमात्मनः, इत्याद्यभियुक्त-ग्रन्थान्तरेष्वपि स्फुटीकृतः । मोक्षोऽप्यविद्यानिवृत्तिरूपश्चैतन्यस्यैवेति स्पष्टमाकरे । एवं स्थिते अविद्याया एव सर्वकारणत्वं बन्धमोक्षाऽधिकरणत्वं चेति वदन् माध्ववराकः कैश्चिदद्वैतवादिबालकैः प्रतारित एवेति ।

(कु०) अत्रोच्यते – ' विधिशास्त्रं तावत् यथा प्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति । न कर्तृत्वमात्मनः प्रतिपादयति न च स्वाभाविकमस्य कर्तृत्वमस्ति । ब्रह्मात्मत्वोपदेशादित्यवोचाम । तस्मादविद्याकृतं कर्तृत्वमुपादाय विधि-शास्त्रं प्रवर्तिष्यत ' इति ' यथाचतक्षे ' ति सूत्रे भवदीयभाषणेन ब्रह्मात्मनो जीवस्य कर्तृत्वं नेत्युक्तप्रायम् । न चाविद्यासम्बन्धात् तत्वसंभवः, निर्विषयस्य निरवयवस्य ब्रह्म-णोऽविद्याख्यभावरूपाज्ञानसंबन्धस्य दुरुपपादत्वस्य शास्त्रे, अत्र कुलिशे च निरूपि-तत्वेन चैतन्ये बन्धस्थापनस्यापि आविद्यकत्वेन कर्तृत्वाभाव एव पर्यवसनात् । नित्यशुद्धमुक्ते ब्रह्मणि अविद्यासम्बन्धोत्तरकाले हि भवदीयमतप्रक्रियास्सर्वाः स्वरूपं लभेरन् । ' स्थापित ' इत्यनेन भवता स्थापितो, न तु सूत्रकृता सिद्धान्तितो, नापि प्रमाणप्रमित इति जानन्ति विपश्चितः । एतेन - अभियुक्तग्रन्थेत्यादिसर्वं प्रतिक्षिप्तम् ।

भवन्मते अविद्याऽसंबद्धस्य नियामकत्वाभावेन 'जगत्कर्तृभगवदधीनाऽविद्यायाः कर्तृतेत्यपि परास्तम् । अविद्यासंबन्धाश्रनाकृ ब्रह्मण एव कर्तृत्वाऽसिद्धेः । अविद्यावशात् सर्वोपपत्तिरिति तव वल्गनं शास्त्रकृतो बादरायणस्य न संमतमिति बहुसम्मतम् । भवानेकः खलु एवं भाषते । विस्तरभिया न प्रपञ्च्यते ।

अस्मदाचार्यैस्तु जीवेशस्वरूपभेदः, तयोरज्ञत्वसर्वज्ञत्वे, अल्पशक्तिबहुशक्तिमत्त्वे, अल्पगुणत्वबहुगुणत्वे, नियम्यनियामकत्वे, जगदकर्तृत्वकर्तृत्वे, इत्येवमादि सर्वं श्रुतिस्मृतीतिहासपुराणादिसिद्धं श्रुत्यादिप्रमाणोपन्यासपूर्वं सूत्रकृत्संमतमेव प्रमेयजातं साधुलोकश्रेयसे प्राकाशि । अतो न कश्चित्क्षुद्रोपद्रव इति सुधीभिराकलनीयम् ।

सकलधर्मवैधुर्ये कालसंबन्धस्यापि दुरुपपादत्वेन कालत्रयाऽबाध्यत्वमपि दुर्निरूपमेवेति असत्कल्पमित्युक्तिः साधुरेव । भवदुक्तं चैतन्यं तु न क्वापि प्रसिद्धम् । तात्पनीयेपि न सर्वधर्मविधुरचैतन्यप्रसिद्धिः । आविद्यकातिरिक्तवस्तुद्वयस्यैव भवन्मतेऽभावेन कस्य किं स्वरूपत्वं त्वयाऽङ्गीक्रियते ।

आहितसंशयस्याप्यनुमानप्रवृत्तेरङ्गताऽभ्युपगता तर्ककुशलैः, सिद्धेऽपि सिषाधयिषयाऽनुमानप्रवृत्तिरिति वदद्भिरिति 'न ह्युपचारोऽनुमानप्रवृत्तेरङ्ग' मित्युक्तिः परास्ता ॥

(कौ०) प्रत्युतास्माभिर्व्यावहारिका धर्मास्तत्र स्वीक्रियन्ते प्रसादफलदातृत्वादयः, तव तु सत्कर्मसाध्यप्रसादादिकमपि नास्तीति विपरीतोऽयं सगुणवाद इति ।

(कु०) 'मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' (गी० १८-५८) तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' (गी० १८-६२) इत्यादिवचनैः भगवति भक्तजनसत्कर्मणा प्रसाद उपजायत इति सिद्धम् । प्रसादश्चाऽनुग्रहेच्छा, भगवतस्तद्गुणानां च भेददर्शिन 'एवं धर्मान् पृथक् पश्यन् तानेवानुविधावती' ति विनाशो दोषतयोक्तः । (गुणगुणिव्यवहारादिकं ईश्वराचिन्त्यशक्त्या निर्वोढव्यमिति अस्मदीयानां प्रक्रिया) । 'आनन्दो ब्रह्मेति व्यजानात्, विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादौ गुणगुणिनोरभेद-

व्यपदेशो दृश्यते । अतो भगवति सर्वे धर्माः स्वीकार्याः, ब्रह्मतद्धर्माणां चाऽभेदो, भेदव्यवहारश्चेशशक्त्येति सर्वमस्मदाचार्योक्तं श्रुत्यादिप्रमाणसिद्धम् ।

श्रुत्यादिप्रमाणसिद्धं सर्वं मिथ्या, श्रुतिरेवाप्रमाणमिति वदतां भवदीयानां मतं हि निर्मूलं नास्तिकमतसोदर्यभावमुपैतीति सुधियां मतम् ॥

(कौ०) यच्चोक्तं — धर्मवैकल्यादसत्त्वमिति त्वया दुर्वचम् । अलीकस्यापि ज्ञानविषयत्वं अत्यन्ताभावप्रतियोगित्वादिकं च धर्म इति त्वयाऽभ्युपगमादिति —

(कु०) इदमपि असंगतम् - प्रपञ्चस्यासद्विलक्षणत्ववादिना त्वयैवं वक्तुमशक्यत्वात्, त्वया हि - असतो ज्ञानविषयत्वाऽभावप्रतियोगित्वाभ्युपगममन्तराऽसद्विलक्षणत्वस्य कथनायोगात् ॥

(कौ०) यच्चोक्तं—किञ्च जीवे बन्धो नास्तीति त्वदभ्युपगमात्, तवैवायं दुरुद्धरो दोष इति यथा चैतत् तथा 'कर्ता शास्त्रार्थवत्त्वा' दित्यधिकरणस्य भङ्गे वक्ष्याम इति ।

(कु०) इदमसत् — 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः संशितव्रताः ।' इत्यादिप्रमाणसिद्धस्य जीवबन्धस्य केनापि प्रतिषेद्धुमशक्यत्वात् । प्रमाणशरणभूतैरस्मदाचार्यैर्जीवे बन्धो नास्तीति क्वाप्यनभिधानात् । सर्वं मिथ्येति वादी हि भवादृशस्तथा वदेत्, न तु प्रेक्षावान् प्रमाणशरण आस्तिको जनः ॥

(कौ०) यदपि — 'यच्चेह सुधायां कार्यस्य सदसदात्मकत्वं स्वीकृतं, तत्सप्तभङ्गीप्रवेशं स्फुटयती' त्युक्तम् ।

(कु०) इदमसत् — कार्येषु कानिचित्कारणभूतानि कानिचित्कार्यभूतानीति तदर्थात् । सत् = कार्यं, असत् = कारणमिति बहुषु ग्रन्थेषु बहुभिर्व्याख्यातत्वात् ॥

(कौ०) यदत्र — 'अपोदितुं कश्चित्, को यतेत, मे चैतन्य' मिति अनुव्याख्यानसुधयोः प्रयोगदर्शनात् शब्दशास्त्रपरिशीलनवैकल्यं स्फुटीकृतं तदलं दुर्बलपरिपीडनेनेत्युपरम्यते इति ।

(कु०) इदं दूषणत्रयं शब्ददोषोद्धारप्रकरणे पाणिनीयन्यायेन समाहितम् । मे इति विभक्तिप्रतिरूपकमव्ययम् । यतेदिति 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्य' मिति

कौमुद्यां माधवीयधातुवृत्त्यादावुक्तन्यायेन साधु । अपोदितुमिति पृषोदरादित्वात्, प्रकृत्यन्तरस्वीकाराद्वा साध्विति निरूपितमधस्तात् । उक्तमपीदं स्पष्टप्रतिपत्तये इह पुनरुक्तम् । अपाणिनीयत्वेन प्रतीयमानानां प्रयोगाणां कथंचित्पाणिनीयन्यायविषयतां कल्पयित्वा साधुतां वदन्नयं भट्टोजिः कौमुद्यादौ स्वोक्तं सर्वं विस्मृत्य अनाघ्रातव्याकरणतन्त्रगन्ध इव वदतीति शोचामि । तदीयदैवदुर्विपाक एव एवं तं भाषयति किं कार्यमितरैः । अलमेतावता गतप्राणसर्पहननोद्यमेनेति लेखस्समाप्यतेऽत्र ॥

इति रचनाऽनुपपत्त्यधिकरणविचारः

---

## अन्यत्राभावाधिकरणविचारः

अन्यत्राभावाच्च न तृणादिवत् (२-२-५)

'किंचिदस्मदायत्तनित्यत्वं, किंचित्तु भगवदेकायत्तनित्यत्वमि' त्यपि सुधायां स्थितम् । खण्डनं तूक्तमिति दूषितम् । अस्याशयं स एव प्रष्टव्यः । खण्डनपदेन यस्य कस्यापि स्वोक्तखण्डनस्य परिग्रहेपि तदप्यस्माभिस्तत्रैव दूषितमिति इदमयुक्तं बोध्यम् ॥

(कौ०) यदत्रोक्तमनुव्याख्याने 'नियामयति नित्यं च न ऋते त्वदिति श्रुते' रिति श्लोके नियमयतीति ह्रस्वे वक्तव्ये दीर्घः प्रामादिक इति दिगिति —

(कु०) इदमसङ्गतं 'रजो विश्रामयन्' इति रघुवंशप्रयोगे दीर्घस्य साधुत्वसाधनाय 'मितां ह्रस्व' इत्यत्र वेत्यनुवृत्ते ह्रस्वस्य वैकल्पिकत्वमिति कौमुद्यामुक्तरीत्याऽत्र ह्रस्वस्याऽप्रवृत्तिरिति वक्तुं शक्यत्वात् । उक्तमेव शब्ददोषोद्धारेऽत्र स्मारितम् । एतेन — एतदुक्तिरेव सर्वा प्रामादिकीति विदन्ति सुधियः ॥

---

## अभ्युपगमाधिकरणविचारः

अभ्युपगमेऽप्यर्थाभावात् (२-२-६)

(कौ०) अत्र 'मे माता वन्ध्ये' ति प्रयुक्तं तदशुद्धमिति यद्वल्गनम् —

(कु०) इदं च प्रत्युक्तं शब्ददोषोद्धारे । मे इति विभक्तिप्रतिरूपकमव्ययम् । यद्वा 'मे माता वन्ध्ये' ति काचित्कमनूदितमाचार्यैरिति ध्येयम् ॥

---

पुरुषाश्मवदधिकरणविचारः ॥ पुरुषाश्मवदिति चेत्तथापि (२-२-७)

---

अन्यथानुमित्यधिकरणविचारः ॥ अन्यथाऽनुमितौ ज्ञशक्तिवियोगात् (२-२-९)

अस्याधिकरणद्वयस्याऽनुवादमात्रं कृतम् । न किमपि दूषणमभिहितम् (कौस्तुभे) ॥

---

## वैशेषिकाधिकरणविचारः

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् (२-२-११)

(कौ०) अत्र सूत्रे षष्ठ्यर्थे वतिः, विभक्तिविपरिणामेन वा सकाशादित्यध्याहारेण वा तस्मादिति भाष्यकारेणोक्तमिति सुधायामुक्तम् । तत्र षष्ठ्यर्थ इति तुच्छम्, इवार्थे षष्ठ्यन्ताद्विधानादित्यादिदूषणमभिहितम् ।

(कु०) इदं च परिहृतं शब्ददोषोद्धारप्रकरणे सुधावाक्यार्थविवरणपूर्वम् । तत एवावसेयमिदमसङ्गतमिति ॥

(कौ०) यच्चोक्तमनुव्याख्याने सुधायां च 'प्रसङ्गाद्बहवः स्वसिद्धान्ता उक्ताः तद्यथा — 'काल आकाशश्चाऽनवधिकपरिमाणोत्कर्षाऽपकर्षवान् सांशश्च, ईश्वरोप्येवं, परमाणुश्च सांश इत्यादयः, .... .... जातेरपि प्रतिव्यक्ति भेदः, ब्राह्मणत्वादेः सत्येवाश्रये नाशः, सादृश्यबलेन व्युत्पत्तिः, सादृश्यमपि प्रतिव्यक्ति भिन्नं, सर्वे च भावात्मका' इति एतच्च सर्वमसंभवदुक्तिकमिति विदुषां स्पष्टमेव । वैशेषिकादिमतखण्डनं त्वस्माकमिष्टमेवेति नाधिकं लिख्यत इति —

(कु०) इदमसङ्गतम् — इदानीं तदानीं, इह पक्षी नेह पक्षी, इत्यादिव्यवहारदर्शनात् - रामकृष्णाद्यवताराणां भगवदवतारत्वकथनाच्च तेषु सांशत्वादेः प्रामाणिकत्वात् । तण्डुललवणविक्रयादिना 'सद्यस्तण्डुलविक्रयात्' इत्यादिस्मृतिबलात् ब्राह्मणत्वापगमावगतेः जातेर्नाशोक्तिरपि युक्तैव । विश्वामित्रस्य क्षत्रियत्वनाशपूर्वं ब्राह्मणत्वप्राप्तेः शास्त्रे निरूपणाच्च । एवंच - सुधोक्तं सर्वं समीचीनमेवेति 'असंभवदुक्तिक' मित्युक्तिरेव न संभवन्ती । एतदिष्टत्वानिष्टत्वयोरप्रयोजकत्वेन 'वैशेषिके' त्याद्युक्तिरपि नितरामयुक्ता ॥

(कौ०) 'अपरिग्रहाच्चे' (२-२-१७) ति सूत्रे सृगालवाक्यमुदाहरन् पाञ्च-रात्रस्य पतिताद्येकविषयतां बोधयन्ति, प्रथमपरिच्छेदोदाहृतानि स्कांदकौर्मादिवचनानि स्मारणीय इति यदुक्तम् —

(कु०) तत्र वक्तव्यम् – कौर्मादिवचनस्मारणं किं तेषामपि अनेन मोक्षधर्म-वचनेनाप्रामाण्यबोधनाय, उत अन्यार्थम् । आद्यं तावदिष्टमेव मध्वमतीयानां, द्वितीयं तु न, अन्यार्थसंभावनाया एवाभावात् । न च कौर्मादिवचनबलात् मोक्षधर्म-गतैतद्वचनादेरप्रामाण्यं बोध्यमिति बोधनाय तानि स्मारणीय इत्युक्तमिति वाच्यम् — भारतस्य पञ्चमवेदत्वेन वेदस्य स्मृत्या बाधकल्पनस्यान्याय्यत्वात् । श्रुतिस्मृत्योर्विरोधे श्रुत्या स्मृतिबाधस्यैव युक्तत्वेन मोक्षधर्मवचनेन कौर्मादिबाध एव न्याय्यः ॥

(कौ०) यदत्रोक्तं — 'प्रत्युत चतुर्दशविद्यास्थानानामध्ययनविधिपरिगृही-तत्वादान्वीक्षिकी श्रेष्ठैव, किन्तु तत्रैव नाभिनिवेष्टव्यम् । 'अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः । सर्वतस्सारमादद्यात्पुष्पेभ्य इव षट्पदः' इति न्यायेन व्युत्प-त्त्यनन्तरं वेदान्ताः परिशीलनीया इत्याशयेन श्रृगालवाक्येऽनुरक्तपदं प्रयुक्त' मिति—

(कु०) अत्रोच्यते – न्यायवैशेषिकमतनिराकरणाय प्रवृत्तस्य बादरायणस्य नैवं तात्पर्यं, किन्तु तच्छास्त्राभ्यासेच्छैव न कार्या, तत्र षोडशपदार्थज्ञानान्मोक्षः, स च एकविंशतिदुःखध्वंसरूपः, अनुमानादेवेश्वरसिद्धिः, इत्यादिप्रमेयनिरूपणेन तच्छास्त्राभ्यासजन्यवासनावासिताऽन्तःकरणेभ्यो वेदान्तजन्यजगत्कर्तृत्वादिप्रकारक-परमात्मविशेष्यक - परोक्षाऽपरोक्षज्ञानजन्य - भगवत्प्रसादहेतुक स्वस्वरूपानन्दानुभव-लक्षणमोक्षप्रतिपादकभगवच्छास्त्रं तत्प्रतिपाद्यप्रमेयजातं च न रोचेत, कादंबरीरसा-स्वादनदूषितप्रकृतिभ्य आहारौषधादिरिवेति । अतएव - अर्धवैनाशिका नैयायिका इति शङ्कराचार्यैरभिहितम् ।

तर्कविद्याविशारदा हेतुवादप्रधाना ब्रह्मवाक्यदूषका एव भवन्तीति ह्युक्तं मोक्षधर्मे – (भार० शां० १७८)

अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥ ४७ ॥

हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत् ।
आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु च द्विजान् ॥ ४८ ॥

नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः ।
तस्येयं फलनिर्वृत्तिः सृगालत्वं मम द्विज ॥ ४९ ॥

अपि जातु तथा तत्स्यादहोरात्रशतैरपि ।
यदहं मानुषीं योनिं सृगालः प्राप्नुयां पुनः ॥ ५० ॥ इति ॥

अत्र - पण्डितक इति कुत्सिते कप्रत्यत्यः । कुत्सायां हेतुः—वेदनिन्दकः इति । इदं हेतुगर्भम् । तत्र हेतुः - आन्वीक्षिकीमित्यादिपण्डितमानिक इत्यन्तम् । यदि भारतकर्तुः सूत्रकृतश्च पाराशर्यस्य तर्कविद्याव्युत्पत्तिः संपाद्येत्याशयः, तर्हि — सूत्रकारः वैशेषिकादिमतं च न प्रतिषेधेदिति जानीहि ।

एतेन — ' यदपि जल्पन्ति, अस्ति किल विष्णुना नारायणरूपेणेत्यादिना.... .... व्यासेन संक्षिप्य कृतं ब्रह्मतर्कशास्त्रमेव चतुर्दशविद्यास्थानान्तर्गतं न्यायशास्त्रं, न तु गौतमप्रणीतम् । तच्चास्य मीमांसाशास्त्रस्याङ्गं, .... तथाच गौतमीयादीनामत्यन्तमनपेक्षतैवेती ' त्यन्तेन परमतमनूद्य, तत्रेदं वक्तव्यमित्यादिना मूकतैवोचितेत्युपरम्यत ' इत्यन्तेन परमतदूषणम् । तत्र — ' ब्रह्मतर्के ' ति ग्रन्थ एवाऽप्रसिद्धः, स्वोत्प्रेक्षितश्रुत्याद्यर्थोऽप्यप्रसिद्धः तदनुकूलव्याकरणादिकं कल्पनीयं माध्वैरिति दूषणमुक्तं भवति ।

तत्रेदं बोध्यम् — सर्वज्ञभगवदाज्ञया तत्सचिवस्थानीयो मुख्यप्राणः भूमाववतीर्य तदुपदिष्टसर्वप्रमाणप्रमेयविषयकज्ञानवान् श्रीमध्वाचार्यनामा विराजते । अतस्तदुदाहृतप्रमाणवचनेषु अप्रसिद्धत्वकल्पनं, जीवेश्वराभेदवादिमते तदुक्तदोषान् समाधातुमसमर्थमूर्खतमपण्डितावतंसस्यैव शोभते । दशोपनिषदो ब्रह्मसूत्राणि, गीतादि च भवन्मतासामञ्जस्यनिरूपणे पर्याप्तम् । प्रमाणान्तरोपन्यासोऽभ्युच्चयः । एवंविधनिरर्थकवाक्यनिचयैरेव ग्रन्थं पूरयति कौस्तुभकृदिति विदांकुर्वन्तु सूरयः । भवदीयैरेव प्रसिद्धसर्वप्रमाणाऽसिद्धजगन्मिथ्यात्वनिर्गुणत्वसमर्थने गगनारविन्दसगर्भ्यं शास्त्रं कल्पनीयं, नेतरैरित्यवेहि ॥ इति वैशेषिकाधिकरणविचारः ॥

आरभ्य समुदायाधिकरणात् न चत्वार्यधिकरणानि विचारितानि कौस्तुभे ॥

## अथ पशुपत्यधिकरणविचारः

पत्युरसामञ्जस्यात् (२-२-३७)

(कौ०) 'अन्तवत्त्वमसर्वज्ञता वे' (२-२-४१) ति सूत्रे विष्णोस्तु श्रुत्यैव सर्वे विरोधाः परिहृताः इति माध्वाधिकरणशरीरम् । एतच्च द्युभ्वाद्यधिकरणस्य, स्मृत्यनवकाशेति द्वितीयाध्यायप्रथमाधिकरणस्य च भङ्गेन भग्नमेवेत्यवधेयम् इति —

(कु०) उक्ताधिकरणद्वयभङ्गस्य भट्टोजिकृतस्य, तयोरेवाधिकरणयोः सप्रमाणमुन्मूलितत्वेन इदमसंगतं बोध्यम् ॥

---

## अथ उत्पत्त्यसंभवाधिकरणविचारः

उत्पत्त्यसंभवात् ॥ (२-२-४५)

(कौ) यत्तूक्तं — 'तदेवं वैदिकानामवैदिकानां च समयान्तराणां निरासात्सिद्धं विष्णोः सर्वकर्तृत्वमिति माध्वाः । खण्डनन्तूक्तमेवेति —

(कु०) एतत्कृतस्य खण्डनस्य सर्वस्यापि तत्तत्र सप्रमाणं दूषितत्वेन सर्वमस्मदाचार्यवचनं समीचीनमिति जानथ ॥

इति द्वितीयाध्यायस्य द्वितीयः पादः



श्रीगुरुभ्यो नमः

## अथ द्वितीयाध्यायस्य तृतीयः पादः

—※—

### अथ वियदधिकरणविचारः (अ० १)

न वियदश्रुतेः (२-३-१)

(कौ०) स्याच्चैकस्य ब्रह्मशब्दवदित्यसङ्गतम् । ब्रह्मशब्दस्य जीवपरत्वाङ्गीकारात्त्वया, त्वद्रीत्या ध्येयात्सगुणादन्यस्यैव ब्रह्मत्वं 'तथाऽन्यत्प्रतिषेधा' दितिसूत्रे तथा त्वदुक्तेः । तत्र जगत्कारणत्वायोगादस्य प्रकरणस्योक्तिसंभवाऽभावात् इति ।

(कु०) ब्रह्मशब्दस्यात्र न जीवपरत्वमङ्गीकृतमस्मदाचार्यैः । ब्रह्मशब्दस्तु जात्यादिष्वपि प्रयुज्यत इति नानार्थको जीवपरोपि गौण्या स्यादेव, तावता प्रकृते किमायातम् । ब्रह्म सर्वत्र सदा सगुणमेव । तस्य निर्गुणत्वावस्थाया अभावात् । अतस्तस्य जगत्कर्तृत्वायोगादित्यसङ्गतं, तन्मूलकैतत्प्रकरणोक्तिसंभवाभावकथनं च न युक्तम् ॥

### अथ असम्भवाधिकरणविचारः (३)

असम्भवस्तु सतोऽनुपपत्तेः (२-३-९)

(कौ०) यदुक्तं - ब्रह्मणोऽनुत्पत्तिकथनमसङ्गतम्, ब्रह्माभिन्नरामकृष्णादि - शरीराणामुत्पत्तिदर्शनात् । प्रत्यक्षत्वं हरेर्जन्मेति त्वत्सिद्धान्तादिति दूषणम् —

(कु०) अवताराणां नित्यदिव्यमङ्गलविग्रहरूपत्वेनाविर्भावमात्रम्, न तु शुक्रशोणितसंसर्गहेतुकत्वमिति पूर्वपादे निरूपितत्वेनेदमसङ्गतमिति ज्ञेयम् । 'प्रत्यक्षत्वं हरेर्जन्मे' त्यस्यापि रामकृष्णादिरूपाणां नृसिंहरूपवत्प्रत्यक्षविषयतामात्रं, न तु मानुषशरीरवत् शुक्रशोणितसंबन्धजन्यतेत्यर्थः । 'अजायमानो बहुधा विजायत' इति अजायमानश्रुतेरपि अयमेवाभिप्रायः ॥

## अथ तेजोऽधिकरणविचारः (४)

### तेजोऽतस्तथाह्याह (२-३-१०)

(कौ०) यदभिहितं —'वायोरग्नि' रिति तैत्तिरीयवाक्येन अग्नेर्वायुजन्यत्वं श्रूयते, 'तत्तेजोऽसृजते' (छा० ६- ) ति परमात्मसकाशात् जन्यत्वमग्नेरिति श्रुतिवाक्ययोः प्राप्तो विरोधो वायुपदस्यान्तर्यामिपरत्वेन वाय्वन्तर्यामिपरमात्मजन्यत्वमेव वायोरपीति परिहृतो भवतीति न शक्यं वक्तुम्। अन्तर्यामिणो ब्रह्मान्यत्वात्, 'तथान्यप्रतिषेधा' दिति भवताऽन्यत्वोक्तेरिति दूषणम् —

(कु०) तत् अत्यन्तमपेशलम्। अन्तर्यामिणो ब्रह्मत्वं नेति अस्मदाचार्यैरनुक्तेः। 'तथाऽन्य' दित्यनेन ध्यानकाले चित्ते प्रतिबिंबितवस्तुनो न ब्रह्मत्वं, प्रतिबिम्बिते तत्र ब्रह्म तिष्ठतीति हि कथितमिति विस्तरेण निरूपितमधस्तात् (५० पु.)। अन्तर्यामिणः ब्रह्मत्वं नेति कैश्चिदपि ब्रह्मवादिभिर्नोक्तम्॥

## अथ पृथिव्यधिकरणविचारः (६)

### पृथिव्यधिकाररूपशब्दान्तरादिभ्यः (२-३-१२)

(कौ०) यदुक्तं—'ता अन्नमसृजन्ते' ति अद्भ्योऽन्नसृष्टिः, 'अद्भ्यः पृथिवी' ति श्रवणात् अपामन्नजनकत्वं वा, पृथिवीजनकत्वं वेति संशये ईश्वरस्य सर्वजनकत्ववत्, अपामुभयजनकत्वे विरोधाभावात् एतद्वाक्योदाहरणमव्युत्पत्तिमूलकमिति दूषणम् —

(कु०) अत्रोच्यते—एतावता प्रबन्धेन ब्रह्म सर्वस्य जगतो वस्त्वन्तरद्वारा साक्षाद्वा कारणमिति शास्त्रार्थो व्यवस्थापितः। तत्र द्वारकारणविषये श्रुतिविगानं परिहरति—पृथिवीति। अत्र किमापः पृथिव्या द्वारकारणम्, आहोस्विदन्नस्येति संशये अन्नस्येति श्रुत्या बहुवाक्यानुसारेणाऽन्नकारणत्वाङ्गीकारे पृथिवीकारणत्वपरवाक्यव्याकोपः। पृथिवीकारणत्वाङ्गीकारे अन्नकारणत्वपरवाक्यव्याकोप इति श्रुतिविगानं बीजम्। न चोभयकारणत्वाभ्युपगमे न विरोध इति वाच्यम्-अत्रत्यटीकायामेवैवं वक्तुमशक्यमित्यभिहितत्वात्। इत्थं हि टीका —

'नापि पृथिव्यन्नयोरद्भ्य एवोत्पत्तिः, उक्तश्रुतिविरोधादेव। न चान्नस्यैवाद्भ्य इव ओषधिभ्योऽपि जन्म, बहुकल्पनापाता' दिति। एवञ्चोभयकारणत्वेनापामङ्गीकारे दोषस्योक्तत्वात् 'ईश्वरस्य सर्वजनकत्ववत् अपामुभयजनकत्वे विरोधाभावात्। एतद्वाक्योदाहरणमव्युत्पत्तिमूलक' मिति ग्रन्थकारवचनमेव अव्युत्पत्त्यतिसंशयमूलकं भाष्यटीकाक्षरार्थाज्ञाननिबन्धनम्। तस्मात् भाष्योक्तं सर्वं साध्वेव।

एतेन — तृणाग्रभक्षकोऽयं माध्वीयग्रन्थान् सम्यगपार्यालोच्यैव तत्रतत्र दोषानुद्घाटयतीति विदाङ्कुर्वन्तु शास्त्रपरिशीलनपराः॥

इति पृथिव्यधिकरणविचारः

## अथ तदभिध्यानाधिकरणविचारः (७)

### तदभिध्यानादेव तु तल्लिङ्गात्सः (२-३-१३)

(कौ०) यच्च — संहर्तृत्वं विष्णुनिष्ठमिति सिद्धान्तः। समन्वयद्युभ्वाद्यायतनाधिकरणखण्डनेनैव दूषितप्रायमिदमिति —

(कु०) इदं तत्रैवाधिकरणे निपुणं निराकारि खण्डनग्रन्थ इति जिज्ञासून् बोधयामः॥

## अथ ज्ञाऽधिकरणविचारः (११)

### युक्तेश्च (२-३-१९)

इदं गुणसूत्रम्। (कौ०) कल्पितमिदं सूत्रमित्युक्तम्। शङ्करादाभरनुपन्यस्तमिदमिति चोक्तम्। प्रसङ्गात् अन्तर्याम्यधिकरणादिषु शङ्कराचार्यादीनामभिमतपाठत्यागः, अनभिमतसूत्रकल्पनं, पाठभेद इत्यादिप्रलपनं मध्वाचार्याणां शङ्करादर्वाचीनत्वं, व्याकरणमीमांसादिषु बहुधा विपरीतभाषणमिति

(कु०) इदं सर्वं परोक्तस्वमतदूषणनिराकरणनिपुणतारहितपण्डितापसदभाषणमिति पुरस्तात् निरूपितमेवेत्यसङ्गतमिदं बोध्यम्॥

## अथ उत्क्रान्त्यधिकरणविचारः (१२)

### उत्क्रान्तिगत्याऽऽगतीनाम् (२-३-२०)

(कौ०) जीवाणुत्वं न युक्तमिति यत्खण्डनं कृतम् —

(कु०) तन्न युक्तं, यतः सूत्रकृताऽनेनाधिकरणेन श्रुतिस्मृतिसिद्धमणुत्वं सिद्धान्तितम् । देहादुत्क्रान्तिगमनागमनहेतुना अणुरेव जीव इति सूत्रकृदाशयः । इदंच - सुधातत्वनिर्णयादौ सहेतुकं प्रपञ्चितं परमतनिरसनपूर्वम् ।

इदमत्र बोध्यम् — " जीवाणुत्वं दूषयतामभिप्रायः - जीवस्य ब्रह्मात्मकत्वेन तदनतिरिक्तत्वात् ब्रह्मवद्विभुत्वमेव नाणुत्वमिति । एतेन अणुत्वाभावे जीवपरयोरभेदो हेतुरित्युक्तो भवति तैः ।

सन्ति च भेदे सर्वागमाः, प्रत्यधिकरणं प्रायेण जीवपरयोर्भेद एव सिद्धान्तितस्सूत्रकृता चेत्यसकृदवोचाम । वक्ष्यामश्चोत्तरेष्वधिकरणेषु । अतो जीवपरमात्मैक्यस्यैवाऽसिध्द्या तन्मूलकजीवविभुत्वाऽसिद्धिः । तस्मात्सूत्रकृत्सिद्धान्तितं सुस्थं जीवाणुत्वम् । एवंच - विभुत्वसाधकोऽभेद एवाप्रामाणिक इति जीवाणुत्ववादिनामाशयः ।

एतेन — इदमधिकरणं चतुर्दशसूत्र्यात्मकं, तत्र चतुर्दशसूत्र्या जीवाणुत्वमाक्षिप्तम । उपरितनचतुस्सूत्र्याऽणुत्वं निरस्य विभुत्वं समर्थितमित्यपि परास्तम् । विभुत्वहेतोरभेदस्यैवाप्रामाणिकत्वादित्याकलयन्तु । चतुस्सूत्र्यां च जीवपरयोर्नाभेदः श्रावितः । श्रीरामानुजाचार्यास्तु - ' ज्ञोऽत एवे ' त्यारभ्य पञ्चदशसूत्री एकमिदमधिकरणं कृत्वा, जीवस्याणुत्वमेव व्यवस्थापयाञ्चक्रुः ।

' बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयस्स चानन्त्याय कल्पत ' इति श्रुतिरप्यणुत्वे मानम् " इति ।। इत्युत्क्रान्त्यधिकरणविचारः ।।

## अथ व्यतिरेकाधिकरणविचारः (१३)

### व्यतिरेको गन्धवत्तथाच दर्शयति ।। (२-३-२७)

(कौ०) यदत्र — अभेदश्रुतीनां भङ्क्त्वा व्याख्यानं कुर्वन् कथमिदमधिकरणं स्वीकृतवानिति दूषणमभिहितम् —

(कु०) अभेदश्रुतय एव नेति वदतां कुतस्तासां भङ्क्त्वा व्याख्यानप्रसङ्गः, प्रमाणानि सर्वाणि भेदपराण्येव । 'तत्त्वमसी' त्याद्यभेदव्यपदेशोऽपि सादृश्यादिनिमित्तक एव सिंहो माणवक इत्यादिवदिति सिद्धान्तः श्रीमध्वाचार्याणाम् ।

तस्मादेतदधिकरणस्वीकारे नास्माकं किंचिदपि बाधकम् । भाष्यादौ स्पष्टमन्यत् ॥

## अथ पृथगुपदेशाधिकरणविचारः (१४)

### पृथगुपदेशात् (२-३-२८)

(कौ०) यत्तु — अत्राधिकरणे - 'अतत्त्वमसी' त्यकारप्रश्लेषोऽसाधुः । भेदश्रुतीनामभेदपरतेति दूषणमभिहितम् —

(कु०) इदमवधेयम् — अकारप्रश्लेषः असाधुरिति वाङ्मात्रं, न प्रकारप्रमाणानि प्रदर्शितानि । 'ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसी' (छा० ६-८) ति श्रूयते । तत्र आत्मा अतदिति स्थिते 'अकः सवर्णे दीर्घ' (पा० सू० ६-१ ) इति दीर्घः प्रवृत्तस्संहितापाठे । व्याख्यातारस्तु अतदिति विभजन्ति । तत्र सवर्णदीर्घो न प्रवर्तेत, न तथा विभागः कार्य इति किं पाणिनीयानुशासनमस्ति । किमेवं राजादयः शासति, भगवान् वा पतञ्जलिस्तथा ब्रूते ? केन प्रमाणेन अकारप्रश्लेषं, असाधुरित्याहायमिति न जानीमः । अतोऽसाधुरित्युक्तिरेवास्यासाधोरसाध्वी ।

अस्तु नामैतत्, 'संभूतिं च विनाशं च यस्तद्वेदाभयं सहे' ति ईशावास्यवाक्ये 'संभूति' मिति पदस्यादौ सकारात्पूर्वमकारप्रश्लेषस्य लोपस्य च सर्वथाऽप्रसक्तिस्थले 'अवर्णलोपेन निर्देशो द्रष्टव्य' इति वदता भवद्भाष्यकृताऽवर्णसत्ताऽभ्युपगता, सविमर्शं विचारय । तत्रावर्णस्य लोपः केन सूत्रेणेति नियोगे किं वदसि ? । भेदश्रुतीनामभेदपरतया नयनं शतधा दूषितमाकरे । अभेदस्तु न सूत्रकृत्संमत इति निरूपितमत्रैवाधस्तादित्यलं दुराग्रहिणा साकं व्यवहारेण ॥

(कौ०) यदत्रोक्तं 'कैशिकश्रुतिस्तावत्तत्रकल्पते' ति ।

(कु०) एतादृशं भाषणमल्पज्ञस्य तव न युक्तमिति बहुधा निरूपितमधस्तात् ॥ इति पृथगधिकरणविचारः

## अथ कर्तृत्वाधिकरणविचारः (१७)

### कर्ता शास्त्रार्थवत्त्वात् (२-३-३३)

(कौ०) यत्तु – 'कृतप्रयत्ने' (२-३-४२) ति सूत्रे - जीवे बन्धो नास्तीति त्वत्सिद्धान्तात्, शास्त्रार्थवत्त्वं त्वया दुरुपपादं, दुःखित्वाद्यनुभवोऽध्यासरूपः प्रमादात्मकत्वाद्बन्धस्येत्याद्युक्तेरिति यदभिहितं दूषणम् —

(कु०) एतच्च दूषितप्रायं जिज्ञासाधिकरणसुधादिना। तदनवलोकनेनैव पदेपदे एवं यथेच्छं भाषसे त्वम्।

तत्र हि — 'क्रियाज्ञाने प्रति कारकान्तराऽप्रयोज्यत्वादिलक्षणं कर्तृत्वं भोक्तृत्वं च, परमेश्वरायत्तमात्मनि स्वतो विद्यत एव। तस्याऽपरायत्तत्वावभासोऽविद्यानिमित्तको भ्रमः। अविद्या (अज्ञाना) दिकं च स्वरूपेणात्मसंबन्धित्वेन च सदेव। एवं बुद्धीन्द्रियशरीरविषयाः स्वरूपसन्त एवेश्वरवशा अपि। अविद्यादिवशादात्मीयतयाऽध्यस्यन्ते। परायत्ताऽऽत्मीयताप्यस्त्येवे' त्यादिना 'प्रमादात्मकत्वाद्बन्धस्ये' ति वाक्यं व्याख्यातम्। तेन - ईश्वरायत्तकर्तृत्वे स्वनिष्ठे अपरायत्तत्वावभासोऽविद्या (ऽज्ञान) निमित्तको भ्रमः, अविद्या (अज्ञाना) दिकं च स्वरूपेणात्मसंबन्धित्वेन च सदेव परायत्ताऽत्मीयताप्यस्त्येव। तांश्चात्मनो विविक्तानपि विस्पष्टतयाऽनुपलभमानस्तद्धर्मान् दुःखादीन् सत्यानेवात्मीयत्वेन पश्यन् तत्कृतनीचोच्चत्वलक्षणे विकृती सत्ये एव प्रतिपद्यत इत्यस्मत्सिद्धान्तात्, कर्तृत्वबन्धयोर्वास्तवत्वेन त्वदभिमताऽऽविद्यकत्वस्यास्मदीयैरनुक्तत्वात्, 'जीवे बन्धो नास्ती' त्यादि तव वल्गनमपेशलं विद्धि॥

इति पृथगधिकरणविचारः

---

## अथ अंशाधिकरणविचारः (१८)

### अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके॥ (२-३-४३)

(कौ०) यच्च – बिम्बप्रतिबिम्बयोरभेद एव, न तु भेद इति दूषणम् —

(कु०) भेदस्य सप्रमाणं गीताभाष्यादौ सूत्रभाष्यटीकयोश्च निरूपितत्वेनेदमसङ्गतं बोध्यम्। प्रतिबिम्बे सव्येतरत्वदर्शनाद्भेद एव। स्पष्टमिदं सर्वेषाम्॥

(कौ०) यच्च – "प्राज्ञः कारणबद्धस्तु" इति श्रुतिः ब्रह्मणि जीवधर्मं बन्धं प्रतिपादयन्ती जीवब्रह्मणोरभेदे प्रमाणमिति —

(कु०) अत्रोच्यते – निःसङ्गे प्राज्ञे बन्धो न केनापि ब्रह्मवादिनाऽङ्गीक्रियत इति विदुषां गोष्ठीषु सुप्रसिद्धम् । अत एव 'ऋतं पिबन्ता' विति मन्त्रे पातृत्वं ब्रह्मणः पाययितृत्वादित्युक्तं गुहाधिकरणे भवदाचार्यैः । ब्रह्मणः – सर्वेषां सर्वकार्यकारयितृत्वं वाजसनेयकैरन्तर्यामिब्राह्मणे व्यवस्थापितम् । अतः श्रौतं बद्धत्वं बन्धयितृत्वरूपं बोध्यम्, 'बुद्ध्यादयस्तद्विपरीता अबुद्ध्यादयश्च मत्त एव प्राणिनां भवन्ति' इति श्रीधरीये; (गी. १०-४) 'अपरः—अनुक्ताबुद्ध्यज्ञानादि समुच्चयार्थः' इति गूढार्थदीपिकायां (गी. १० - ५) चोक्तेः, बन्धस्य परमात्मन्यवृत्तेः नाभेदसाधकं तद्वाक्यम् । अत एवोक्तं तत्त्वप्रकाशिकायां— अविद्यारूपकारणमात्रबन्धप्रदत्वं कारणबद्धत्वम् इति । आशामात्रं तु भवतोऽभेदे, प्रमाणं तु तत्र न दृश्यते शास्त्रे ॥

(कौ०) यदुक्तं – 'नच चशब्दादौ व्यभिचारान्नायं नियम' इत्यादि । अव्ययातिरिक्तेति विशेषणात्, निपातानां द्योतकत्वाभ्युपगमाच्चेत्यादि शब्दकौस्तुभे प्रपञ्चितमित्यादि च —

(कु०) अव्ययानां वाचकत्वे द्योतकत्वे च विषये वैयाकरणास्तदन्ये च कलहायन्ते शुष्कतर्केण । ब्रह्मवादिनस्तत्रोदासीनाः । जीवब्रह्मभेदे, ब्रह्मणो जगत्कर्तृत्वे उपास्यत्वे च अस्य विचारस्य अनुपयोगात् । अत एतद्विचारोऽत्र प्रकरणाज्ञानमूलकः । त्वया कृतः सिद्धान्तोऽस्माभिः कुत आश्रयणीयः । किं भवान् लोकाचार्यः ।

शब्दकौस्तुभे प्रपञ्चितस्य निर्णयस्य वैयाकरणैरेव कैश्चित्, नैयायिकवैशेषिकमीमांसकैरप्यनेकैः शतधा दूषितत्वान्नादरस्सर्वेषामिति बोध्यम् ॥

(कौ०) 'अद्वैते लाघवा' दिति यदुक्तम् ।

(कु०) एतत्तु – न सर्वजनहृदयङ्गममिति निरूपितमधस्तात् । सोदाहरणं कालानले दूषितञ्च विस्तरेण । लाघवादद्वैताङ्गीकारे जनन्यैव जायाकार्यस्यापि संभवेन अशास्त्रीयस्य शास्त्रीयत्वबोधनेन सर्वे जना नाशिता भवेयुर्भवतेति विद्धि ॥

इति अंशाधिकरणविचारः

इति द्वितीयाध्यायस्य तृतीयः पादः

# अथ द्वितीयस्य चतुर्थः पादः

## अथ ज्योतिरधिकरणविचारः (१०)

### ज्योतिराद्यधिष्ठानन्तु तदामननात् (२-४-१५)

(कौ०) 'तस्य च नित्यत्वा' (१७) दिति सूत्रे – तस्माच्छ्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं सिद्धमिति माध्वमतमनूद्य 'तथाऽन्यप्रतिषेधा' दित्यधिकरणविरुद्धमिदमिति दूषितम् —

(कु०) इत्थं भाषणं 'तथाऽन्य' दित्यधिकरणीयभाष्यटीकाऽर्थाऽपरिज्ञाननिबन्धनमिति पूर्वमेवावोचाम । ध्यानकाले प्रतिभासिद्धं न ब्रह्म, किन्तु ब्रह्मप्रतीकम् । तत्र स्थितं तु जगत्कर्तृत्वादिसर्वगुणपरिपूर्णमिति तदधिकरणाभिप्रायः ॥

(कौ०) यच्चोक्तं – तत्रैव 'परकीयेऽपि बहुकालसंबन्धिनि तदीयत्वोपचारदर्शनादिति भावः । एतेनाऽनुभवोऽप्याभिमानिकतया व्याख्यात इति माध्वाः । इदञ्च 'कर्ता शास्त्रार्थवत्त्वा' दिति त्वदीयाधिकरणखण्डनेनैव ग्रस्त' मिति —

(कु०) इदमपि तस्मिन्नेवाधिकरणे अस्मत्कृतभट्टोजीयखण्डनखण्डनेनैव दूषितं बोध्यम् ॥ इति ज्योतिरधिकरणविचारः

अवशिष्टतृतीयतुर्यपादीयखण्डनानि कौस्तुभोक्तानि सर्वाण्यस्मदीयप्राक्तनग्रन्थेन खण्डितानि भवन्तीति न विशिष्याल खण्डितानीति वेदितव्यं सुधीभिः ॥

इति श्रीमद्वैष्णवमण्डलमण्डनायमान श्रीमुष्णार्याचार्यवंशमुक्ताफल - वैयाकरणचक्रवर्ति - वैयाकरणकेसरि - महामहोपाध्याय - **श्री. व्या. सुब्बरायाचार्यात्मजेन ;**

विद्यामार्तण्ड - श्रीमध्वसिद्धान्तभूषण - महामहोपाध्याय -

**श्री० व्या० सेतुमाधवाचार्येण**

श्रीपद्पुरी विराजमान श्रीवेङ्कटेश्वर संस्कृतमहा

विद्याशालाध्यक्षपदात्प्राप्तविश्रान्तिमता कृते

**कुलिशे** भट्टोजीयतत्त्वकौस्तुभखण्डने

**द्वितीयोऽध्यायस्समाप्तः ॥**

॥ श्रीकृष्णार्पणमस्तु ॥

श्रीगुरुभ्यो नमः

## अथ तृतीयोऽध्यायः



### वैराग्यपादपीठिकाविचारः

(कौ०) प्रसादस्य भगवद्गुणस्य तत्स्वरूपात्मकत्वेनाऽनाद्यनन्ततया ज्ञानजन्यत्वाभावात् ज्ञानार्थं वैराग्यजनकगत्यागतिनिरूपणं व्यर्थमिति नास्य पादस्यारम्भणीयतेति यदुक्तम् —

(कु०) अत्र वदामः—इदमतितुच्छम् — ब्रह्मवादिनां मते धर्मधर्मिणोरभेदेपि भेदेन व्यवहारोपि वास्तवो विशेषबलेन, ईश्वराचिन्त्यशक्त्या च निर्वाह्य इति शब्दप्रमाणकैरवश्यमभ्युपगन्तव्यमिति । शास्त्रेषु बहुकृत्वो निरूपितत्वेन श्रौतत्वादस्यार्थस्य यथाशब्दमङ्गीकर्तव्यत्वात् । श्रुतेरिति सूत्रे भवदीयैरपि तथोक्तेः । अनादित्वेपि प्रसादस्य उपासकानामुपासनाबलात् तत्तत्फलप्रदानोन्मुखतयाऽभिव्यज्यते सः, तेन भक्तलोकास्तत्तत्फलं प्राप्य सुखिनो भवन्तीति सर्वशास्त्रार्थः । अतः प्रसादस्य ज्ञानजन्यता न केनाप्यङ्गीकृता ।

'परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥' (मु० २-१२)

इति श्रुतिर्विरक्तिं बोधयतीति सर्वविदितम् । अस्या अर्थः-ब्राह्मणः=ज्ञानं संपिपादयिषुः, कर्मचितान् = कर्मणा प्राप्तव्यान्, लोकान् = स्वर्गादीन्, परीक्ष्य = शास्त्रविचारपूर्वं नश्वरान् ज्ञात्वा, निर्वेदं = तत्र वैराग्यं, आयात् = प्राप्नुयात्, तत्र नेच्छां कुर्यादिति यावत् । कृतेन = कर्मणा, अकृतः = नित्यो मोक्षः, नास्ति = न भवति इति निश्चित्य, सः = ब्रह्मजिज्ञासुः, समित्पाणिः = समितौ = सङ्गतौ पाणी यस्य सः, साञ्जलिबन्ध इति यावत्, अग्निहोत्राद्युपयोगिपालाशादिसमित्सहित इति वा, श्रोत्रियं=वेदाध्ययनपूर्वं विहितकर्मानुष्ठानवन्तम्, ब्रह्मनिष्ठं=ब्रह्मज्ञानिनम्, गुरुम् = आचार्यम्, अभिगच्छेत् = प्राप्नुयात्, तद्विज्ञानार्थम् = मोक्षसाधनब्रह्मज्ञानायेति ॥

अयं भावः — 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इत्यादिश्रुतिनिचयैर्ब्रह्मज्ञानेनविना न मोक्ष उपलभ्यते इति ज्ञायते । कर्म तु नश्वर-

स्वर्गादिफलकं, न तत्र मतिः कार्या, किन्तु तत्र विरज्य मोक्षकारणज्ञानाय ब्रह्मविदग्रेसरं गुरुमासाद्य ब्रह्मज्ञानं संपादनीयम् । 'आचार्यवान्पुरुषो वेद, (छा० ६-१४-२) आचार्यस्तु ते गतिं वक्ता, (छा० ४-१४-१) इत्यादिश्रुत्या आचार्यादधीता विद्यैव फलवती भवतीति औपनिषदानां सिद्धान्तः ॥

ततश्च कर्ममार्गे वैराग्यसंपादनाय गतागतिबोधनमावश्यकमिति भगवान् सूत्रकारः पादमिममारभत । एतेन—शास्त्रार्थपरिज्ञाननिबन्धनमिदं कौस्तुभकृद्वचनमिति निश्चेतव्यम् ।

प्रत्युत - आत्मैकत्ववादिनस्तव मते एव तावत् एतत्पादोपलक्षितं सर्वं शास्त्रं नारम्भणीयं भवेत् । शुद्धचितो ब्रह्मणो निर्धर्मकत्वेन अविद्यासंबन्धस्य दुर्घटत्वेन दुरुपपादत्वात् चेतनान्तरस्यैवाभावात् ज्ञातृज्ञेयादिव्यवहारस्य गन्धर्वनगरसोदर्यतया पूज्यपूजकभावादिधर्मावच्छिन्नचेतनस्य दौर्लभ्येन अधिकारिणोऽभावात् कर्मकाण्डादिसर्ववेदादीनां वैयर्थ्यापत्त्या तदनुसारिसर्वशास्त्राणामनारम्भ एव प्रसज्जेतेति मन्येरन् सुधिय इति अवेहि ॥

---

## अथ तदन्तराधिकरणविचारः (अ० १)

### तदन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्याम् (३-१-१)

(कौ०) 'अत्र — त्वदभिमतमोक्षस्य, वैराग्यादेस्तत्साधनतायाश्च दुरुपपादत्वमित्यादिसामान्यखण्डनं योज्य' मित्युक्तम् ।

(कु०) एतेन - मोक्षसाधनवैराग्यहेतुगत्यादिनिरूपणं कृतं सूत्रकृता । गत्यादेर्वैराग्यहेतुता प्रपञ्चिता भवदाचार्येणापि । विरक्तिस्तावन्मोक्षहेतुरिति श्रुत्यादिसिद्धमिति आस्तिकजनविदितम् । मोक्षस्वरूपं च - ब्रह्मप्राप्तिः, 'ब्रह्मविदाप्नोतिपरं' - (तै०) 'मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' (गी० १८-६५)

स वै महाभागवतः परीक्षिद्येनाऽपवर्गाख्यमदभ्रचेताः (बुद्धिः) ।
ज्ञानेन वैयासिकशब्दितेन भेजे (खगेन्द्र) पतङ्गध्वजपादमूलम् ॥
(भाग० १-१८-१६)

इति श्रुतिस्मृतिभिः श्रीमन्नारायणचरणप्राप्तिलक्षण एव मोक्ष इति प्रतिग्रन्थं साधितम्। अतोऽस्मदाचार्याभिमतमोक्षस्य शास्त्रसिद्धमोक्षरूपादन्यत्वाभावेन त्वदभिमतेत्यादि सर्वमसङ्गतमेव।

प्रत्युत भवतो भवदाचार्याणां च संमतो मोक्षस्तु उदाहृतश्रुत्यादिविसंवादगोचर इति चेतनावतां स्पष्टम्॥

श्रुतिर्जगत्कर्तृत्वादिगुणवद्वस्तुप्राप्तिमाह। तादृशवस्तु च विष्ण्वाख्यो नारायणः। गीता च नारायणावतारश्रीकृष्णप्राप्तिमाह। भागवतं तु गरुडध्वजश्रीनारायणपदारविन्दप्राप्तिमाहेति जगत्कारणनारायणप्राप्तिर्मोक्ष इति ब्रह्मविदां मर्यादा। भवदादिभिस्तु निर्गुणब्रह्मतापत्तिर्मोक्ष इति स्वीक्रियते। एतादृशं मोक्षस्वरूपं शास्त्रेषु क्वापि न निरूपितम्। 'तत्त्वमसी' ति नैक्यबोधकं, किंतु सादृश्यबोधकमिति वारंवारं प्रत्यपादि। नैयायिकसम्मतपाषाणतुल्यमोक्षसहोदरभवत्संमतमुक्तये न कोपि यतेत, वैराग्यादिकं च नापेक्ष्येत कैश्चिदपीति भवन्मत एव सर्वे दोषाः, नास्मन्मत इति विजानीहि। तस्मात्पादारंभ आवश्यक इति सिद्धम्॥

इति तदन्तराधिकरणविचारः

---

## अथ चरणाधिकरणविचारः (१०-अ०)

'चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः' (३-१-१०)

(कौ०) 'अत्रेव 'चरणं पवित्र' मिति मन्त्रे चरणपदं सुकृतदुष्कृतपरमिति शक्यं वक्तुमिति स मन्त्रः तप्तमुद्राधारणे न प्रमाणं भवती' ति यदुक्तम्—

(कु०) इदमयुक्तम्—नानार्थकशब्दस्य एकत्र प्रयोगे योऽर्थोऽङ्गीकृतः, अन्यत्रापि स एवार्थस्स्वीकार्य इति नियमाभावात्। एवं वादी न गणनीयतामर्हति गोष्ठीषु॥

---

## अथ अपिसप्ताधिकरणविचारः (१२-अ०)

अपिसप्त (३-१-१६)

(कौ०) नरकस्य नित्यत्वमप्रामाणिकम्। चिरकालवृत्तित्वमात्रेणौपचारिकम्। चातुर्मास्यफलस्यापि अक्षय्यतापत्तौ ततो विरक्त्यनुपपत्तेः। अद्वैतश्रुतयः, प्रपञ्चमिथ्यात्वबोधकप्रमाणानि च पूर्वोक्तानि बहुतराण्यत्राऽनुसन्धेयानि। इति—

(कु०) नरकस्य तत्प्रभेदानां नरकनित्यत्वस्य च, प्रमाणप्रमितत्वेन अप्रामाणिकत्वोक्तिस्साहसिकी। औपचारिकत्वकथनं तु तव भूषणं ब्रह्मनिष्ठजगत्कारणत्वादेः, 'यतो वा' इत्यादिप्रमाणानां ब्रह्मसाधकानां, सर्वप्रपञ्चस्य च मिथ्यात्वं वदतः। अद्वैतश्रुतयो मिथ्यात्वबोधकप्रमाणानि पूर्वोक्तानि अत्राऽनुसंधेयानीत्येतन्न पेशलम्। यतः अद्वैतश्रुतिरेव न, नास्ति च मिथ्यात्वबोधकप्रमाणमिति पूर्वमेव निरूपितमस्माभिः, तानि च सुधीभिरत्र बोध्यानि ॥

इति अपिसप्ताधिकरणविचारः

---

## अथ तत्रापिचतद्व्यापाराधिकरणविचारः (१३-अ०)

### तत्रापि च तद्व्यापारादविरोधः (३-१-१८)

(कौ०) यदुक्तम् — अत्र - नरकेपि वसतीश्वर इत्यङ्गीकारे अन्तर्यामितया नरकेपि ईश्वरस्य स्थित्यङ्गीकारात् जीवापेक्षयेश्वरस्याऽधिकदुःखं दुर्वारम्। जीवोऽणुः क्वचिन्नरके वसति। अयन्तु सर्वान्तर्यामित्वात्सर्वेषु। दुःखपरिणामिता तु मनस एव न जीवस्येति कथं जीवस्य नीचता। दुःखस्वामित्वं नीचतेति चेत् - कतिपयदुःखस्वाम्यपेक्षया सकलदुःखस्वामिनोऽन्तर्यामिणः कथं न नीचतोत्कर्ष इति —

(कु०) श्लाघनीयप्रज्ञोऽसौ भट्टजिरिति मन्यतेऽनेन भाषणेन। लोके तावत् बन्दीकृतानां पुरुषाणां नियमनाय नियुक्ता अधिकारिणः कारागृहमधिवसन्तोपि न किञ्चिदपि दुःखमनुभवन्तीति सार्वजनीनम्। यदि नियामकपुरुषोपि दुःखी स्यात् तर्हि नरकमनधिवसत्सु सुखिदुःखिष्वन्तस्थितो नियामको भगवान् सुखी दुःखी च स्यादिति जीवसम एव भवेत्, न तु नित्यशुद्धः। अतोऽन्तर्यामिणो दुःखसंबन्धो न भवति कदापि स्वशक्त्येति जानीहि। कर्मकराः मृद्वहनादिकृतिजन्यपरिश्रमादिक्लेशाननुभवन्ति, न तेषां प्रेरकोऽधिकारिपुरुष इति सर्वलोकसिद्धम्। तस्मात् जीवापेक्षयाऽधिकदुःखमीश्वरस्येत्यादि सर्वं लोकशास्त्रमर्यादाऽज्ञानमूलकमिति वेदितव्यम् ॥

(कौ०) यच्चोक्तं— अद्वैतमते तु सधर्मकान्तःकरणतादात्म्याध्यासवशाद्विषमसत्ताकं दुःखं जीवेऽस्ति नेश्वरे। औपाधिकश्यामत्वादिवत् व्यवस्थेत्यन्यत्र विस्तर इति—

(कु०) इदमस्थाने कृतं अद्वैतप्रक्रियानिरूपणम्, यतः — "माध्वदूषणार्थं प्रवृत्तेऽत्र कौस्तुभे शाङ्करीयसूत्रयोजना न प्रदर्श्यते" इति आनन्दनये भवानवदीत्। अस्तु नाम प्रतिज्ञाभङ्गः।

इदं तावद्वक्तव्यमत्र — आत्मैकत्वसिद्धान्तवादी भवान् आत्मातिरिक्तवस्तुजातं शशविषाणसहोदरं मन्यते। अतस्तव मते उपाधिधर्मान्तःकरणादीनि वस्तूनि न सन्ति, अप्रसिद्धत्वाच्छशविषाणवदिति भवताऽङ्गीकार्यं, चेतनान्तराभावाज्जीवोऽप्यप्रसिद्ध एव तव मते। सकलधर्मविधुरे ब्रह्मनामकेश्वरेऽविद्यासंबन्धो दुर्घट एव। एवं सति आविद्यकं सर्वमस्तीति वाचोयुक्तिरपि दूरतोऽपास्ता भवति। तादात्म्याध्यासवशाद्विषमसत्ताकदुःखं जीवेऽस्ति, न त्वीश्वर इति त्वदीयवचनं अनुपपन्नं भवति। शुद्धे वस्तुनि अविद्यासंबन्धस्य दुर्वचत्वेन तन्मूलक-त्वदभिमतसर्वव्यवहारविलोपात्। अध्यस्यमानस्याध्यासितुरप्रसिद्ध्याऽध्यासायोगाच्च 'अद्वैतमत' इत्यादि सर्वमशुद्धमिति॥

इति तत्रापिचतद्व्यापाराधिकरणविचारः

इति तृतीयाध्यायस्य प्रथमः पादः

---

## अथ तृतीयस्य द्वितीयः पादः

### अथ सन्ध्याधिकरणविचारः (१)

**सन्ध्ये सृष्टिराह हि (३-२-१)**

(कौ०) यदुक्तमत्र—माहात्म्यं भगवत्स्वरूपम्, ज्ञानं भक्तिश्च जीवनिष्ठम्, अतस्तदुभयोर्जन्यजनकभावो न युज्यते। अत इदं भाषणमयुक्तमिति —

(कु०) अत्र ब्रूमः — दमयन्तीनलादीनां नायिकानायकानां गुणातिशयं महिमानं च कथकमुखेभ्यः श्रावं श्रावं परस्परमत्यन्तानुरागोदयवशात् परस्परं संबन्धेन सुखिनोऽभवन् ते इति महाकविप्रबन्धविमर्शनकोविदा वदन्ति। तैस्सह संभाषमाणा वयमपि नलादीननुरागेण कालविशेषे स्मरामः।

शैशवे मातापितृविहीनाः सुताः युक्ते वयसि स्थिता वृद्धजनेभ्यो मातापित्रो-र्महिमानमुपश्रुत्य तयोर्भक्तिं कुर्वन्ति । शिष्याश्च पूर्वाचार्याणां महिमश्रवणेन तेषु कृतादरास्तेषु भक्तिमातन्वत इति सर्वास्तिकजनानामनुभवसिद्धम् ।

भगवान्बादरायणः श्रवणादिना भगवति भक्तिर्जायत इति भागवतादिषु शुकादिमुखेन वारं वारमवीवदत् । तथाहि — (भाग० ११-३१-२८)

"इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि कर्माणि च शन्तमानि ।
अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥" इति।

अनुरागो नाम प्रीतिविशेषः । अयं च दृष्टान्तपूर्वकं भगवता बादरायणेन दर्शितो विष्णुपुराणे —

'या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ॥' इति ।

अत्र प्रीतिः = प्रेमप्रवाहः, अनपायिनी = अविच्छिन्ना, सजातीयविजातीयै-रतिरस्कृता च । त्वां = भवन्तं, स्मरतः = चिन्तयतः, हृदयान्मापसर्पतु = हृदयं विहाय मा गच्छतु । त्वद्विषयकप्रेमप्रवाहस्सर्वदा मम हृदये वर्ततामिति नृसिंहं प्रति प्रार्थनावाक्यमिदं प्रह्लादस्य । अयमेवार्थो वचनान्तरेण दर्शितो भाष्यकृताऽस्म-दाचार्येण —

'माहात्म्यज्ञानपूर्वस्तु सुदृढस्सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥" इति ।

( भारततात्पर्ये ) माहात्म्यस्य, ज्ञानभक्त्योश्च जन्यजनकभावो न युज्यत इति वदतस्तत्र किं भिन्नाधिकरणत्वेन जन्यजनकभावोऽयुक्त इति तात्पर्यं, उतान्यत । आद्यं तु न युक्तम् । भगवतो गुणादिश्रवणेन जायते भक्तिरिति उदाहृतवचनेन सिद्धया श्रवणस्य ज्ञानभक्त्यधिकरणवृत्तितया कार्यकारणयोरेकाधिकरणवृत्तित्वात् । अन्यच्च दुरुपपादं भवता ।

किञ्च — ऊर्ध्वदेशो वृष्टिमानधोदेशो नदीपूरादिति महतां व्यवहारात् न कार्यकारणयोस्सामानाधिकरण्यस्य कार्यकारणभावे तन्त्रता । किन्तु समुचितदेश-

वृत्तिरेव तन्त्रमिति गृहाण । अन्यच्च दुरुपपादं भवता । तस्मात्त्वदुक्तं लोकव्यव हाराद्यज्ञानमूलकमेवेति उपेक्षणीयो भवान् ॥

(कौ०) यदुक्तम् — 'इह स्वप्ने सृष्टिः परमार्था । अन्यत्रापि ध्यान मनोरथराज्ययोः । तत्र सन्तो न बहिस्सन्ति । नापि भ्रान्तिविषयाः । ते वासनात्मकाः । स्वप्ना ईश्वरायत्ताः । ध्यानादौ पुरुषप्रयत्ननिर्वर्त्या इति माध्व सिद्धान्तरहस्यम् । अतीन्द्रियोपादानकतापि द्व्यणुकादेरिवोपपद्यते । नीरूपाद्रूपवत स्तेजसो जन्म वेदान्तिनां प्रसिद्धमेवेति । एवं स्थिते शुक्तिरजतादीनामलीकतां वदतं माध्वस्याऽर्धजरतीयं स्पष्टमेव । कालत्रयेऽपि नेदं रजतं, मिथ्यैव रजतमभादित्यादि प्रतीतीनां असदेव गजतुरगादिकं स्वप्नेऽभादित्यादिप्रतीतितौल्यात् ' इति —

(कु०) अत्रोच्यते — प्रातरत्र घटो नाभूत्, इदानीमस्ति घट इति कथन मात्रेण वस्तुनोऽसत्त्वं वदतो धीरतिश्लाघनीया । प्रातर्घटं नासृजत्, मध्याह्नेऽसृ जत् अत उभयव्यवहारोपपत्तेः, तस्याऽसत्त्वापादकत्वाभावात् ।

'असदेव गजतुरगादि स्वप्नेऽभादि ' ति श्रुतिसूत्रादिप्रमाणार्थं तत्त्वतो विजानतां प्रतीतेरनुदयात् । शुक्तिरजतशशविषाणादीनामसत्त्वेनैव प्रतीतिर्जायत इति स्वाप्नपदार्थशुक्तिरजतप्रतीत्योस्तौल्यकथनं शास्त्रार्थाऽपरिज्ञानमूलकमप्रामाणिकमेव । अतः असतामलीकत्वं स्वाप्नस्य सतस्सत्त्वमेवेति यथाशास्त्रं वदतो जनान् प्रति अर्ध- जरतीयन्यायविषयतापादनमज्ञानादाग्रहमूलकमेव ।

किञ्च — नीरूपत्वात् अतीन्द्रियत्वाच्च वासनायाः कारणत्वानुपपत्तिरिति आक्षिपन्तं प्रति अतीन्द्रियस्यापि द्व्यणुकादेः, नीरूपस्यापि वायोरिव भावनाया अपि स्वाप्नार्थकारणत्वं सुवचमित्यभिप्रेत्य तथोक्तेः 'वायोरग्नि' रिति श्रुतिसद्भावाद्वेदा- न्तिनां प्रसिद्धमित्युक्तम् ।

स्वप्ने सर्वेन्द्रियाणामुपरमात् जीवस्य व्यापाराभावेन स्वप्नावस्थायां 'य एष सुप्तेषु जागर्ति ' ति श्रुतौ भगवत एव जागरणोक्त्या कर्त्रन्तराभावात् 'तदेव शुक्रं तद्ब्रह्म ' ति प्राज्ञप्रकरणाच्चेश्वराधीनता नान्तरीयकतया सर्वैरभ्युपेया । ध्यानमनोरथ- राज्ययोः जाग्रदवस्थायामेव जायमानत्वेन पुरुषसङ्कल्पमूलकतया प्रयत्नपूर्विका

पदार्थसृष्टिरित्यभिहितम् । तत्रापीश्वरायत्ता साऽस्ति, तथापि तामविवक्षित्वा एव-मुक्तमिति विद्धि ॥ किञ्च स्वाचार्यग्रन्थभावमेव सम्यगजानानो भवान् अनधीतमतान्तर-ग्रन्थतात्पर्यं कथं जानाति ॥

(कौ०) तथा च स्वप्नादिवत् शुक्तिरजतस्यापि पारमार्थिकतां स्वीकृत्य सद्वा-दिदिगम्बरमतप्रवेशः, रजतवदेव स्वाप्नस्यालीकतामूरीकृत्य असत्ख्यातिवादिबौद्धस्य वा शिष्यो भव, वेदभ्रष्टतया पाञ्चरात्राद्यागप्रविष्टस्य तव दिगम्बराद्यनुसरणमपि स्यादिति यदुक्तम् —

(कु०) तत् प्रतिक्षिप्तम् । इदं सर्वमापादनं तवैव भवेत्, अस्थाने प्रयुज्य-माना कृत्येवेति बुध्यस्व । त्वं हि सर्वं मिथ्येति वदन् श्रुत्यादीनामप्रामाण्यं भाषसे । तदभावे जगदपि नास्ति, ईश्वरोपि नास्ति, शुक्तिरजतवदलीकं सर्वं, तेन धर्माऽधर्मा-दिकं नेत्युक्तं भवति । ततश्च सर्वं शास्त्रं व्यर्थतामापादितं त्वया, ततश्च सर्वशून्य-वादिबौद्धस्य त्वमेव मुख्यः शिष्यो भवसि । भवन्मतस्य शून्यमतस्य च साम्यमुप-पादितं शास्त्रे, अतो जानीहि त्वं बुद्धतामात्मनः ।

एतेन — ' वेदप्रामाण्यवादिनां तु स्वप्नरथादेः शुक्तिरजतादेश्च प्रातीतिकत्वं तुल्यमेवे ' त्यादि ; यदुक्तं कौस्तुभे - तदपि निराकृतं वेद्यम् । वेदस्यैवाभावात् तत्प्रामाण्यं कुत आयातं तव मते ॥

(कौ०) यदत्र — ' इन्द्रजालमिव मायामयं स्वप्नं मिथ्यादर्शन ' मिति मैत्रायणीयश्रुत्युदाहरणम् —

(कु०) सापि श्रुतिः जगन्मिथ्यात्ववादिमते स्वप्नोऽपि मिथ्येति ज्ञेयमिति मायावादिमतनिरूपणाय प्रवृत्ता, न तु वैदिकमतीयप्रक्रियानिरूपणाय ॥

(कौ०) यच्च तत्र भागवतश्लोकोदाहरणं —

' तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाक्षमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवाऽवभाति ॥ ' इति —

(कु०) तदपि न युज्यते । यतः जगतो नश्वरत्वप्रतिपादनाय तच्छ्लोक-प्रवृत्तिः, न तु स्वप्नस्य जगतश्च असत्त्वबोधनाय । तथाहि - स्वाप्नं वस्तु नासत्,

किन्तु सदेव । यतः स्वप्ने संभावितस्वदारपरदारसंसर्गसम्भाषणादिना सञ्जातचरमधातु (रेतः) स्खलनजन्यदोषपरिहाराय महर्षयः परदाराभिमर्श-हेतुकपापपरिहाराय स्मरन्ति प्रायश्चित्तम् । वर्णिनां यतीनां च प्रायश्चित्तविशेषं च । स्वाप्नपरदाराभिमर्शनस्य दोषत्वादेव उत्तमपुरुषलक्षणे 'स्वप्नेऽप्यन्यवधूकथे' ति स्वप्नेप्यन्यनारीकथाराहित्यं निवेशितम् । यदि स्वाप्नमसत्, तर्हि तदातननारीसंभोगादेरसत्त्वात्तस्य पापहेतुत्वस्मरणं तत्प्रायश्चित्तस्मरणं च व्यर्थमेव स्यात् ।

किंच – 'यन्मेऽद्य रेतः पृथिवीमस्कान् । यदोषधीरप्यसरत् । इदं पुनराददे । दीर्घायुत्वाय वर्चसे' (तै० आ० १-३०) इति । प्रमादात्स्कन्नस्य रेतसः पुनरादानतत्फलकथनपरा श्रुतिरपि न सङ्गच्छेत । स्खलितस्य रेतसः सत्त्वे हि तदादानादि संभवेत् । प्रमादात्स्खलनं च स्वाप्ननारीसंभाषणसंभोगादिनैव भवेत् ।

किंच – 'दर्शनं=सूचकं, तच्च स्वरूपेण सत्, असत्तु दृश्यम् अत एव स्त्रीदर्शनस्वरूपसाध्याश्चरमधातुनिसर्गादयो जाग्रदवस्थायामनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपननखक्षतादयो नानुवर्तन्त' इति स्वप्नात्प्रबोधोत्तरं रेतसो दर्शनमस्तीति दर्शयन् तस्य सत्यतामेव मेने भामतीकारः ।

किंच – स्वप्ने चरमधातुनिसर्गेण जायमानव्याधेश्चिकित्सां विदधते आयुर्वेदविदः । तेन जातरोगविशेषा जना भिषग्वरमाश्रित्य औषधं सेवन्त इति च सर्वेषां जनानामनुभवसिद्धम् । एतेन स्वाप्नं वस्तु सत्, अर्थक्रियाकारि चेति ज्ञायते । अन्येषां स्वाप्नपदार्थानां नार्थक्रियाकारित्वं, सत्वं परं वर्तते । प्रबोधोत्तरं तद्दर्शनाभावे तु भगवदिच्छैव कारणम् ॥

इति सन्ध्याधिकरणविचारः ।

## अथ उपमाधिकरणविचारः (१०-अ०)

### अतएव चोपमा सूर्यकादिवत् (३-२-१८)

(कौ०) यदुक्तं — जीवपरयोर्भेदो दुरुपपादः, ब्रह्मबिन्दूपनिषदि काशीखण्डे च बिम्बप्रतिबिम्बयोर्भेदाभावोक्तेरिति —

(कु०) अत्र वदामः — इदमसङ्गतमिति अंशाधिकरणे (२-३-पा०) समन्वयाधिकरणे च सविस्तरं निरूपितं, तेनैव खण्डितं बोध्यम् ।

किंच — प्रतिबिम्बत्वं नाम तद्भिन्नत्वे सति तत्सदृशत्वं, न तु तत्त्वमेव, अतस्तयोर्भेद एव । किं च सव्येतरत्वादिता तयोर्भेदः सुस्पष्ट इति प्राणिमात्रेण ज्ञायते, इति निरूपितं पूर्वम् ॥

---

## अथ अम्बुवदधिकरणविचारः (११-अ०)

### अम्बुवदग्रहणात्तु न तथात्वम् (३-२-१९)

(कौ०) 'तृतीयोपक्रमे, कर्ता शास्त्रे' त्यधिकरणे च खण्डनमुक्तं, भक्त्यादेस्तत्तत्स्वरूपत्वादित्यादिने' ति —

(कु०) एतच्च दूषणं तत्रैव दूषितमस्माभिः । अतो न युक्तमिदमिति बोध्यम् ॥

---

## अथ वृद्धिह्रासाधिकरणविचारः (१२-अ०)

### 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' (३-२-२०)

(कौ०) आनन्दरूपफलस्य तथाविधभक्तेश्च मुक्ताव (न) नुवर्तनेन तदुत्कर्षवचनं व्युत्पत्तिराहित्यं सूचयति । जयतीर्थस्यापि अन्धस्येवाऽन्धलग्नस्यापीति न्यायविषयतेति । तारतम्यवचनं तु उपासनाजन्यगौणमुक्तिविषयमिति —

(कु०) अत्रोच्यते — श्रौतं तरतमभावापन्नमानन्दरूपं फलं श्रवणादिसाधनसंपद्युतेन पुरुषेण प्राप्यमिति शास्त्रतात्पर्यम् । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतिबलात् । एवंच - अधिकारिणां पुरुषाणां फलोपलंभे स्वाभाविकी योग्यता श्रवणादिसाधनसंपत्तिश्चेत्युभयं हेतुः । अन्यथा साधनविधिवैयर्थ्यम् । तत्राधिकारिणां कामवशाज्जात-मतिवैचित्र्येण जायते साधनानुष्ठाने वैचित्र्यम् । एतदेव साधनतारतम्यमित्युच्यते बुधैः । तथाच साधनेषु च भक्तेरेवोत्तमत्वोक्त्या तत्रापि तारतम्यं ब्रह्मादिषु दृश्यते । मोक्षेऽपि तदनुरोधेनैव ब्रह्मादीनामानन्दतारतम्यमिति स्थितिः । तस्मान्मोक्षेपि तदुत्कर्षवचनं शास्त्रनिष्णातधिषणतामेव प्रकटीकरोति, श्रीजयार्याणां च ब्रह्मविदाचार्यपादाश्रितत्वेन नान्धलग्नता । तवैव तन्न्यायविषयतेति गृहाण ॥

(कौ०) यच्चोक्तं—तारतम्यवचनं तूपासनाजन्यगौणमुक्तिविषयमिति चेति —

(कु०) मुक्तौ द्वैविध्यं न क्वापि भाषितं चतुर्लक्षण्यादौ । अत एवोक्तं विष्णुतत्त्वनिर्णयटीकायां — "अपरमुक्तिरेवेयमिति चेन्न, एतद्व्यतिरिक्तायां परममुक्तौ प्रमाणाभावात्" इति । तथा च भवता भवादृशेन वा कल्पिते पञ्चमाध्याये उपलभ्येत यदि, तर्हि तदपि तव मते मिथ्येति 'मिथ्या याः साधकत्वं च न सिद्धं प्रतिवादिन' इत्युक्तरीत्या असाधकं, अतः मुक्तिभेदादिकं कल्पयतस्तवैव व्युत्पत्तिशून्यता, अन्धस्येति न्यायविषयता चेति विद्वज्जनहृदयम् ॥

इति वृद्धिह्रासाधिकरणविचारः

---

## अथ प्रकृतैतावत्त्वाधिकरणविचारः (१३-अ०)

'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' (३-२-२२)

(कौ०) 'तथान्यत्प्रतिषेधाधिकरणविरोधः, भक्तेः प्रसादस्य च स्वरूपत्वाज्जन्यजनकत्वाभावश्चेति दूषणम् —

(कु०) द्वयमपीदं दूषणं निराकृतमस्माभिरधस्तादेव (१४६ पु.), तेनासङ्गतमिदमिति बोध्यम् ॥

---

## अथ तदव्यक्ताधिकरणविचारः (१४-अ०)

तदव्यक्तमाह हि (३-२-२३)

(कौ०) पूर्वोक्तमेव दूषणं पर्यायपदप्रयोगेण लिखितम् । (कु०) तत्रैवास्मत्कृतखण्डनेन खण्डितमिदमिति विपश्चितो विदन्तु ॥

---

## अथ परमताधिकरणविचारः (१६)

परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः (३-२-३२)

(कौ०) भगवति स्वगतभेदाभावाद्भक्त्युत्कर्षः कथमिति दूषणमभिहितम् —

(कु०) स्वगतभेदस्य च भक्त्युत्कर्षस्य च कथं हेतुहेतुमद्भावं ज्ञात्वा तदभावात्तदभाव इति दूषणमभिहितवानयमिति न जानन्ति । अचिन्त्याद्भुतशक्त्या सोपि व्यवहार ईश्वरविषयोऽस्त्येवेति तत्र भक्त्युत्कर्षो युज्यत एव ॥

उपरितनेषु सर्वाधिकरणेषु आपादान्तं न पूर्वोक्तदूषणातिरिक्तदूषणान्युक्तानि। तानि सर्वाणि पूर्वोक्तदूषणखण्डनेनैव दूषितानि भवन्तीति जानन्तु सूरयः ॥

इति तृतीयस्य द्वितीयः पादः ।

## अथ तृतीयस्य तृतीयः पादः

### सर्ववेदान्ताधिकरणविचारः (१)

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् (३-३-१)**

(कौ०) अत्र भक्तिप्रसादयोरात्मस्वरूपत्वादनादित्वाच्च भक्तिप्रसादयोर्जन्यजनकभावानुपपत्त्या पादारम्भो व्यर्थो माध्वमत इति —

(कु०) तृतीयाध्यायारम्भे १६८ पुटे च ईदृशं दूषणं खण्डितं सप्रमाणमतोऽसङ्गतमिदं बोध्यम् ॥

(कौ०) यच्चोक्तं — 'स्वाध्यायोऽध्येतव्य' इति विधिः, सर्ववेदाध्ययनविषय इति शाखान्तरन्यायविरोधात् उपेक्ष्यः । स्वशाखाविषयक एव अध्ययनविधिरिति मीमांसायां प्रपञ्चितः, अतो मीमांसाशास्त्रापरिज्ञानमूलकमिति —

(कु०) अत्रोच्यते—'स्वाध्यायोऽध्येतव्य' इति विधेः सर्ववेदविषयकत्वाभावे शाखान्तरन्यायस्योत्थितिरेव न स्यात् । तथाहि — स्वोऽध्यायः स्वाध्यायः, स्वत्वं च पितृपितामहादिपरम्पराप्राप्तत्वम् । ततश्च - स्वशाखाध्ययनमात्रविषयत्वे शाखान्तराध्ययनस्याप्राप्तत्वेन निषेधार्थकतदधिकरणस्यानारंभणीयताप्रसङ्गः ।

यदि स्वाध्यायविधेः स्वशाखाध्ययनमात्रविषयकत्वं, तर्हि पञ्चयज्ञान्तर्गतब्रह्मयज्ञ (नित्यस्वाध्याय) प्रतिपादकश्रुतिस्मृतिधर्मशास्त्रेषु वेदचतुष्टयविधिः तत्फलविशेषनिरूपणं च न सङ्गच्छेत, सर्ववेदाध्ययनमन्तरा तदसंभवात् । 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रम' (मनु० ३-२) मिति सर्ववेदाध्ययनविधिवैयर्थ्यं च स्यात् । 'वेदमध्यापयेदेन' (याज्ञ० १-१५) मिति सर्ववेदाध्यापनमेव विहितम् ॥

किंच — वेदत्रयात्मकसावित्रीमन्त्रोपदेशमात्रेण वेदत्रयमध्यापितमध्येयं चेतिसिद्धम् । 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः

परमेष्ठी प्रजापतिः' (मनु० २-८८) इत्यादिस्मृत्या गायत्रीपादत्रयस्य वेदत्रया-दुद्धाराभिधानात् तस्या वेदत्रयात्मकत्वं जानीमः। तस्मात् शाखान्तरन्यायस्य स्वशाखां परित्यज्य अन्यशाखाध्ययनं न कुर्यादिति तात्पर्यम्। अतएव कुल्लूकभट्टेन— 'वेदानधीत्ये' ति वचनं स्वशाखाध्ययनपूर्वकं वेदशाखात्रयं द्वयमेकां शाखा .... मधीत्य गृहस्थधर्ममनुतिष्ठेदिति व्याख्यातम्। महाभाष्योदाहृते अध्ययनविधायक 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे' त्यागमवाक्येपि वेदपद-प्रयोगोप्यनुकूलोऽत्रार्थे। स्वाध्यायेति स्वपदस्य उपनयनोत्तरं अध्येयत्वेनाश्रमोचित-तया श्रुतिप्राप्तत्वेन स्वीयेत्यर्थः। केचित्तु—अध्यायो=वेदः, सु अध्यायः स्वाध्यायः, 'अन्येषामपि दृश्यत' इति उत्तरपदस्याकारस्य दीर्घः, आङभिपूर्व-कस्येङ्धातोरयं प्रयोगो वेति वदन्ति। ततश्च स्वाध्यायाध्ययनविधेः सर्ववेदविषय-कत्वोक्तिस्समीचीनैवेति मन्तव्यम्।

ननु—सर्ववेदाध्ययनं मीमांसकानामपि संमतम्। एकैकवेदसम्बन्ध्येकैक-शाखाध्ययनमात्रस्य तैर्व्यवस्थापनात्। परंतु—एकवेदसम्बन्ध्यनेकशाखाध्ययनं न मीमांसकानां संमतमिति शाखान्तराधिकरणे स्फुटं, तत्कथमेतदिति चेत्—अत्र ब्रूमः—अशक्तान् प्रत्येव एकैकशाखाध्ययननियमः। शक्तास्तु एकवेदसम्बन्ध्यनेक-शाखाध्ययने अधिकारिण एवेत्यपि मतान्तरं तन्त्रवार्तिकपर्यालोचनया अवगम्यते। शाखान्तराधिकरणे हि — "अतश्च यो नाम अतिमेधावित्वात् एकवेदगतानि शाखान्तराण्यप्यधीते स समृद्धस्सन् व्रीहियवैरपि मिश्रैर्यजेत्" इति वाक्येन अर्थोऽयं स्फुटमवगम्यते॥

कुल्लूकभट्टोऽपि—'वेदानधीत्ये' ति श्लोकव्याख्यानावसरे "पुरुषशक्त्य-पेक्षश्चायमेकद्वित्रिशाखाध्ययनविकल्पः' - इति ब्रुवन् अमुमर्थमभिप्रैति॥

तत्सिद्धं—यो यावतीं एकवेदगतां नानावेदगतां वा शाखामध्येतुं समर्थः, स तावच्छाखाध्ययने अधिकारीति प्रमेयं मीमांसकानामपि संमतमिति। एतत्सर्वं मनसि आकलय्य श्रीमध्वाचार्याः 'स्वाध्यायोऽध्येतव्य' इति सामान्यविधेः, हि शब्दात्—'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने' ति स्मृतेः,

सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः
आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः॥

सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः ।
शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपत् ॥

इति प्रमाणोदाहरणपुरस्सरं सर्ववेदान्ताधिकरणे (३-३-१) अभाषन्तेति ॥

इति सर्ववेदान्ताधिकरणविचारः

---

## अथ उपसंहाराधिकरणविचारः (२)

### उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च (३-३-६)

(कौ०) अत्राधिकरणे उत्तराधिकरणेषु चेदं दूषणमिति प्रतिज्ञाय इत्थं मध्वमतं पर्यवस्यति स्वस्वयोग्यतानुसारेण गुरूपदिष्टमार्गेण च भाविमुक्त्यनुगुण-गुणोपसंहारः कार्य इति । अत्रेदं वक्तव्यम् — 'उभयव्यपदेशात्त्वहिकुण्डलवत्' (३-२-२८) दित्यत्रोक्तरीत्या गुणानां ब्रह्मस्वरूपात्मकत्वात् भूयोऽधिकगुणोपसंहारो दुरुपपादः । पूर्वतन्त्रोक्तशब्दान्तरादिभिरिहोपासनाभेदो दुर्वारः । तत्रतत्र व्यवस्थितानां गुणानामुपसंहारोप्ययुक्त एव । न ह्येकाग्निमुपासीनस्यायुरादिकमपेक्षितमिति 'आशास्तेऽयं यजमानोऽसौ, आयुराशास्ते, सुप्रजास्त्वमाशास्ते' इत्यादिसूक्तवाकमन्त्रार्पितायुरादिफलकं दर्शपूर्णमासाङ्गं प्रस्तरहरणं पुरुषापेक्षामात्रेणोपासनाकर्मसु उपसंहार्यं भवति ।

अतएव शङ्कराचार्यैरिहेत्थं सिद्धान्तितम् — दहरविद्या - शाण्डिल्यविद्या - वैश्वानरविद्या - षोडशकलविद्यो - पकोसलविद्या - पर्यङ्कविद्येत्यादिसंज्ञाभेदेन प्रसिद्धाः परब्रह्मविद्या यथाशब्दान्तरादिभिः परस्परं भिन्ना एव । भिन्नत्वादेव तत्तद्विद्याम्नाता उपास्या गुणाः । वाजपेयाश्वमेधादिकर्मणामङ्गकलापा यथाप्रकरणं व्यवस्थिता इति, न तासु परस्परगुणोपसंहारः, किन्त्वेकैकस्यां विद्यायां नानाशाखाम्नातगुणोपसंहार-मात्रम् । सर्वासामपि तासामुपास्यगुणतारतम्येन, उपासनाकालतारतम्येन, सहकारि-यज्ञादिकर्मतारतम्येन च फलभोगतारतम्यवती देवयानमार्गप्राप्या सगुणब्रह्मलोकावाप्तिरपरमुक्तिरूपा फलमिति । इदमेव न्याय्यत्वात्सुधीभिरादर्तव्यम् । चिरन्तन-शङ्करोपदिष्टां सरणिं विहाय माध्वीमनुसरन्तः शोचनीया उपेक्षणीयाश्चेति इति निरूपितम् —

(कु०) अत्र वदामः — 'अथैष एव परम आनन्दः (बृ० ६-३-३३) आनन्दं ब्रह्मणो विद्वा(तै० २-४)नि' त्यादिभिर्ब्रह्मतद्गुणयोरभेदेन भेदेन च व्यवहृतत्वेन श्रौतस्य तस्यान्यतरस्य अप्रामाण्यकल्पनाऽयोगेन अचिन्त्यशक्त्या उभयोरपि व्यवहारयोरणुत्वमहत्त्वादिवत् प्रामाणिकत्वात् स्वरूपत्वेपि बहुगुणवत्त्वोपपत्त्या तथोपासना कर्तुं शक्येति 'गुणोपसंहारो दुरुपपाद' इत्यसङ्गतम् ॥

यदत्र — पूर्वतन्त्रोक्तशब्दान्तरादिभिरिहोपासनाभेदो दुर्वार इति —

इत्थमापादनमसङ्गतम् । सर्वेषामपि ब्रह्मवादिनां सर्ववेदान्तोक्ता ब्रह्मविद्या एकैव, वेद्यैकत्वादिति मतम् । अथापि रामादिमूर्तिविशेषविषयकत्वे विद्याभेदः, मन्त्रप्रतिपाद्यस्यैकत्वेन तेषामेकत्वेऽपि राममन्त्रः कृष्णमन्त्रो वासुदेवमन्त्र इत्यादिवत् । एवं स्थिते को ब्रूते न विद्याभेद इति । अतो दुर्वारत्वोक्तिरविमर्शपूर्विका ॥

यच्च — तत्रतत्र व्यवस्थितानां गुणानामुपसंहारोऽप्ययुक्त इति उक्तम् —

तदप्यविचारितरमणीयम् । संभृतिद्युव्याप्तिलक्षणगुणानां अधिकारिविशेषविषयकत्वेन व्यवस्थितानां, भेदनादिगुणानां रक्षोहत्याकामनावद्भिरुपास्यत्वेन व्यवस्थितानां अस्मदीयैरन्यत्रोपसंहारानुक्तेः । व्यवस्थाहेतुर्युष्माकमन्योऽभिमतः, अस्माकं तु संमतो हेतुरन्यः । यथा राजन्यमात्रनियतो राजसूयस्तदितरैर्न कार्य इति अधिकारिभेदेनापि व्यवस्था कृता दृश्यते पूर्वतन्त्रे । अतोऽव्यवस्थितगुणस्याविरोधिनोऽन्यत्रोक्तस्यापि उपसंहारस्सुकर एव । तस्मात् 'न ह्येकाग्निमुपासीनस्याऽयुरादिकमपेक्षितमिति 'आयुराशास्ते, सुप्रजास्त्वमाशास्ते' इत्यादिसूक्तवाकमन्त्रार्पितायुरादिफलकं दर्शपूर्णमासाङ्गं प्रस्तरहरणं पुरुषापेक्षामात्रेणोपासनाकर्मसु उपसंहार्यं भवति' इति यदुक्तं — तदपि प्रतिक्षिप्तं भवति । प्रस्तरप्रहरणस्य ब्रह्मविद्योपासनायां प्रवृत्तस्य मोक्षतत्साधनापेक्षातिरिक्तायुराद्यपेक्षाया एवासंभवात् ॥

किञ्च — भाट्टदीपिकायां अष्टमे प्रथमपादे गुणकामाधिकरणे — "यत्र तु नाश्रयापेक्षा विजातीयप्रस्तरप्रहरणत्वादिनैव च आयुरादिफलं प्रति साधनत्वम्, आयुरादिप्रकाशनमन्त्रस्य च स्वप्रकाश्यफलजनकत्वेन प्रहरणाङ्गत्वम्, तत्र भवत्येव विकृतावपि तस्मात्फलोत्पत्तिः" इत्युक्तरीत्या अन्यत्राप्युपसंहारो वक्तुं शक्य इति प्रतीयते । तथा च कौस्तुभोक्तमसङ्गतम् ॥

(कौ०) यदुक्तं – अत एव शङ्कराचार्यैः इहेत्थं सिद्धान्तितं, दहरविद्या इत्यादि..........अपरमुक्तिरूपा फलमिति, इदमेव न्याय्यत्वात्सुधीभिरादर्तव्यम् । चिरन्तनीं शङ्करोपदिष्टां सरणिं विहाय माध्वीमनुसरन्तस्तु शोचनीया उपेक्षणीयाश्च' त्यन्तम् —

(कु०) इदं सर्वमसङ्गतं प्रकृतानुपयुक्तम् – तथाहि - सन्ति बहवः शङ्कराचार्यसिद्धान्तविरुद्धसिद्धान्तं सप्रमाणं व्यवस्थापयन्तो मताचार्याः, ते च दर्शिता ग्रन्थादौ । तेष्वन्यतमाः श्रीमध्वाचार्याः । तैश्च प्रायेण प्राचीनकृतसूत्रयोजनामुपमृद्यैव प्रकारान्तरेण सूत्राणां योजना दर्शिता तत्र तत्र अन्यैरिव । तस्माच्छङ्करकृतसिद्धान्तं कथमाद्रियेरन् सुधीशिखामणयः । परब्रह्मप्राप्तिरेव हि मुक्तिरित्युच्यते शास्त्रेषु सर्वत्र । ब्रह्म च सकलगुणपरिपूर्णमिति च । सगुणनिर्गुणभेदेन ब्रह्मभेदः शास्त्रे क्वापि नोक्तः । निरूपितमिदमधस्तात् । अन्यैराचार्यैः शाङ्करमतस्य दूषितत्वेन तस्य न्याय्यत्वं कथं स्यात् । सर्वेऽपि स्वस्वमताचार्यप्रदर्शितः पन्था न्याय्य इत्येव भाषन्ते । मतान्तरानुयायिनः प्रति अन्यमतप्रविष्टानामेवंभाषणं न शोभते । शंकरोपदिष्टसरणेरपि बौद्धोपदिष्टसरणिरतिचिरन्तनीति सर्वेषां सैवाश्रयणीया स्यात् न तु शाङ्करी । भगवन्मतविरुद्धा सेति त्यज्यत इति चेत् – तर्हि भगवन्मताविरुद्धोऽतिचिरन्तनो मार्ग आश्रणीयस्सर्वैः श्रेयोऽर्थिभिः । स च भगवतोपदिष्टो गीतायाम् । तत्रच - भगवानादिपूरुषो नारायणः, स च जङ्गमाऽजङ्गमात्मकं समस्तं प्रपञ्चमसृजत् । स सर्वोत्तमः सेव्यो नानाप्रकारेण । मोचयिता सर्वेभ्यः पाप्मभ्यः प्रसन्नश्च सर्वेषां सर्वानभीष्टानैहिकामुष्मिकान् प्रददातीति ॥ तथाहि —

'त्वमादिदेवः पुरुषः पुराणः' (११-३८) गरीयसे ब्रह्मणोप्यादिकर्त्रे (११-३७) प्रभवः प्रलयः स्थानम्, (९-१८) अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय (८-६, ८) वेद्यं पवित्रमोंकारः(९-१८) मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । १८-६५

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि भारत ॥ १८-६६

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ १८-६१

## अथ भूमाधिकरणविचारः (३७)

### भूम्नः क्रतुवज्ज्यायस्त्वं तथाच (हि) दर्शयति (३-३-५९)

(कौ०) 'अत्र क्रतुवदित्यस्य विवरणं दीक्षाप्रायणीयेत्यादि। तत् - मीमांसाऽनध्ययनविजृंभितमिति यदाह भट्टोजिः —

'समासान्ता' इति सूत्रे समासपदस्य लक्षणया समासार्थोत्तरपदस्येत्यर्थं वदन्, आदेशप्रत्ययोरिति सूत्रे प्रत्ययपदस्य लक्षणया तदवयवपरत्वमिव, क्रतुपदस्य लक्षणया तदवयवदीक्षणीयादिपरत्वमिति वदन्तं कथं दूषयतीति चिन्त्यम् ॥ अतो न मीमांसाविरोधः। ततः कौस्तुभकृदुक्तं परास्तम्। समुदायवाचकशब्दानामवयवमात्रे बहुलप्रयोगदर्शनात् ॥

किञ्च — 'तस्मिन् सोमः प्रवर्तेत अव्यक्तत्वात्' (मीमां० सू ८-४-२) इत्यत्रैव क्रतुः सर्वयागेष्वनुवर्तत इति व्यवहारः साधुरेव। अत्र क्रतुपदं अग्निष्टोमपरतया व्याख्यातं भावदीपे। ततश्च क्रतुः = अग्निष्टोमः, प्रकृतितासम्बन्धेन सर्वयागेष्वनुवर्तत इति भावः। अथवा क्रतुपदं दीक्षादीतिकर्तव्यताकलापपरमेव। यथा उक्तसूत्रघटकं सोमपदं सौमिकविध्यन्तपरं मीमांसकमते।

अथवा — 'सविशेषणे ही' ति न्यायेन क्रत्वङ्गान्येवात्र विवक्षितानि।

यद्वा — सौत्रेण क्रतुशब्देन न अग्निष्टोमो विवक्षितः प्रकृतेर्विकृतावनतिदेशस्य मीमांसकसम्मतत्वेन तन्मर्यादाभङ्गापत्तेः। अपितु दीक्षादीनां तदङ्गानामेवात्रग्रहणं विवक्षितमिति टीकाभिप्रायः। अत एव सौत्रं क्रतुपदमनूद्य दीक्षा प्रायणीयेत्यादिना व्याख्यातम्। वस्तुतस्तु क्रतुशब्दो न ज्योतिष्टोममात्रपरः। अपितु इष्टिपशुयागपरोऽपि, अतो न विरोधः। तथाहि - शङ्कराचार्यैः भूम्नः क्रतुवदिति प्रकृताधिकरण एव (३-३-५) क्रतुवत् - यथा क्रतुषु = दर्शपूर्णमासप्रभृतिषु इति क्रतुशब्दः इष्ट्यादिपरतया व्याख्यातः। श्रीरामानुजार्यैः 'क्रतोः वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति जातेष्टिपरतया व्याख्यातः। जैमिनिनापि— "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" (४-१-१) इत्यत्र क्रतुशब्द इष्ट्यादौ प्रयुक्तः। अन्यथा प्रयाजादीनां क्रत्वर्थताऽनापत्तेः। 'यंयं क्रतुमधीते तेनतेनास्येष्टं भवति अग्नेर्वायोरादित्यस्य

सायुज्यं गच्छती ' ति तत्तत्कर्मप्रतिपादकमन्त्रपठनमात्रेण तत्तत्कर्मानुष्ठानफलप्राप्ति-बोधकश्रुतिवाक्ये क्रतुपदं वैदिककर्ममात्रपरमिति सर्ववैदिकसार्वभौमैरभ्युपगतम् ।

' क्रतुयज्ञेभ्यश्च ' (पा. ४-३-६८) ति सूत्रे क्रतुयज्ञशब्दयोः सोमसाध्य-यागपर्यायतयाऽन्यतरग्रहणेनेष्टसिद्धावन्यतरग्रहणवैयर्थ्यमाशंक्य विनिगमनाविरहा-दुभयोपादानं असोमकनवयज्ञादिग्रहणतात्पर्यकमिति चक्रे व्यवस्था भाष्यकारादिभिः ।

किं बहुना — भवद्गुरुणा अप्पय्यदीक्षितेनापि विधिरसायनादौ क्रतुशब्दः इष्ट्यादौ बहुशः प्रयुक्तः, तस्मात् दीक्षाप्रायणीयेत्यादि क्रतुपदविवरणं श्रीजयार्यकृतं न मीमांसकमतविरुद्धमिति संक्षेप इति ॥

इति भूमाधिकरणविचारः

---

## अथ नानाशब्दाधिकरणविचारः (३८)

### नानाशब्दादिभेदात् (३-३-६०)

(कौ०) यदुक्तं — ' तारतम्यं न युक्तं वेदाऽप्रामाण्यप्रसङ्गात् । तथाहि — प्रकृताधिकरणस्य, भूमा संप्रसादात् (१-३-८) भूम्नः क्रतुवज्ज्यायस्त्वम् (३-३-५९) ब्रह्मदृष्टिरुत्कर्षात् (४-१-४) इत्यादित्वदधिकरणानां च निष्कर्षेण त्वन्मतमित्थं फलितं भवति । ' यो वै भूमा तत्सुख ' (छा० ८-१३-१) मिति श्रुतौ भूमशब्द-स्तावत् सर्वेषां ब्रह्मपरः । मध्वमते तु अयं विशेषः — भूयस्त्वे निष्पन्नोऽपि ब्रह्मणि रूढः । प्रवृत्तिनिमित्तं तु अवधिविशेषगणनानिरपेक्षं पूर्णत्वं, तच्च पूर्णत्वमानन्दा-दीनामपि तत्तद्योग्यतानुसारेण श्रवणादिषु प्रतीयते तारतम्येन । तदेतत् ब्रह्मा-नन्दादीनां पूर्णत्वे न संभवति, निरतिशयशालिनस्तारतम्यायोगात् । यस्याधिकारिणो यावद्दर्शनयोग्यता तं प्रति तावन्तमेव सातिशयं भूमशब्दो बोधयतीति त्वयाऽङ्गी-कार्यम् । ततश्चासदर्थबोधकत्वेन स्पष्टमेव मध्वमते वेदाऽप्रामाण्यम् । किंच — गुणानां स्वरूपात्मकत्वात् विशेषस्य तन्मात्रपर्यवसायित्वादसंबद्धमेव तन्मतमिति —

(कु०) अत्र प्रतिविधास्यते — महता प्रयत्नेन आयुष्मानयं मेधावी बह्वधि-करणपरिशीलनेन भूमपदार्थं निष्कृष्य वेदाऽप्रामाण्यं माध्वमत आपततीति दोषं उद्घाटितवान् । इदंतु न युक्तम् । अप्रामाण्ये हेतुतया उक्तासदर्थबोधकत्वा-

भावाद्भूमपदस्य । तथाहि – सन्ति हि भगवति निरतिशया गुणाः, पद्मरागवैडूर्यादौ गुणातिशया इव । तत्र यथा रत्नपरिरीक्षकाः केचन रत्नमादाय गुणं यथामति परीक्ष्य शतं मुद्रा अर्हतीति ब्रुवते, अन्ये तु यथामति परीक्ष्य द्विशतीमर्हतीति । इतरे तु त्रिशतीम्, परेतु पञ्चशतीमित्यादिक्रमेण सहस्रमयुतं लक्षमित्यादि वदन्ति । केचित्तु श्रेष्ठोऽयं मणिः ; सन्त्यत्र गुणा बहवः, ते सर्वे नास्माकं गोचरा भवन्ति । मूल्यं निर्णेतुं न शक्नुमो वयमिति । अन्ये पुनः अमूल्योऽयं मणिरिति निगदन्ति । तथा उपासकाः यावन्तः स्वस्वबुद्धिगोचरा भवन्ति गुणाः तदतिशयाश्च, तावतो गुणातिशयानुपासते । एतावतैव गुणातिशयतारम्यमिति विद्धि । निरतिशयपूर्णगुणानां गायका उपासकाः संख्यातारश्च न सन्ति लोके । तथाच श्रुतिः 'परो मात्रया तन्वा वृधाना, न ते महित्वमन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमापे' ति । 'शेषोऽधुनाऽपि समवस्यति नास्य पार' मिति स्मृतिरपि भगवद्गुणानां वक्ता गणयिता च नेत्याह ।

'हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे (गी० १०-१९)
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप' (''-४०) इति च ।

अनेन भगवन्महिमातिशयस्य ज्ञात्रादिपुरुषो नेत्यभिहितं भगवता । गृहीतृ-पुरुषयोग्यतातारतम्येन भागवतगुणातिशयांशो विषयो भवतीति गुणातिशयेषु तारतम्य-मिति न काप्यनुपपत्तिः । उपासकयोग्यता तद्विषयत्वमतिशयस्य च वास्तवमेव । अतो भूमशब्दस्य नाविद्यमानार्थबोधकत्वं, अतोऽप्रामाण्यहेतोरसिद्धेः । अधिकारिपुरुषाणां बुद्धितारतम्यं समुद्रतरणोद्युक्तानां वानराणां शक्तितारतम्यवत् युज्यत एव । उक्तं हि योग्यतातारतम्यं सदृष्टान्तं —

'यथोदञ्चनकुम्भादेः सरित्सागरयोरपि ।
अल्पेन महता वापि पूर्तिर्योग्यतया भवेत् ॥' इति ।

'कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलं' इत्यन्येनाप्युक्तम् ।

एतेन - ब्रह्मानन्दादीनां पूर्णत्वे न तारतम्यं संभवति इति यत्तन्निरस्तम् ॥

श्रीमन्मध्वमतेऽपि भूमशब्दो विष्ण्वाख्यब्रह्मपर एव, भावे बहुशब्दात् इमनिचि प्रकृतेर्भूभावे प्रत्ययेकारस्य लोपे निष्पत्तिरपि समानैव। महत्, निरतिशयं, बह्विति, पर्याया इति शांकरोक्तेर्गुणाद्यतिशय एव तदर्थः। व्युत्पत्त्या तु न तस्य ब्रह्मपरत्वलाभ इति ब्रह्मणि रूढ इत्युक्तं, सर्वैरपि स्वीकार्यमिदम्। अन्यथा धर्मपरस्य तस्य ब्रह्मवाचकत्वाऽसिद्धिः। तस्मात् 'सर्वेषां ब्रह्मपरः, माध्वमते तु रूढ' इति भेदेन कथनमसङ्गतमेव। तस्मादत्र कौस्तुभोक्तं सर्वमविमर्शनमूलकमिति सूरीणां मतम् ॥

इति नानाशब्दाधिकरणविचारः

---

## अथ काम्याधिकरणविचारः (४०)

**काम्यास्तु यथाकामं समुच्चीयेरन् नवा पूर्वहेत्वभावात् (३-३-६२)**

(कौ०) भगवत्तुष्टये कार्यमिति तु न भगवत्तुष्टेस्तत्स्वरूपत्वेन, तस्याऽनादित्वादिति दूषणमभिहितम् —

(कु०) अत्रोच्यते — नोपासनेन जन्म भवति तुष्टेः, किंतु नित्यं विद्यमानायाः प्रसादरूपायास्तस्याः फलप्रदानोन्मुखीभवनमेव। अतस्तस्या अनादित्वेऽपि स्वरूपत्वेपि न क्षतिरिति जानन्तु सूरय इति ॥

कौस्तुभे बहुष्वधिकरणेषु खण्डनं प्राग्वदिति दृश्यते। तद्दूषणं च अस्मदीयतत्खण्डनेनैव खण्डितं भवतीति कतिपयाधिकरणानि विशिष्य न दूषितानि ॥

इति तृतीस्य तृतीयः पादः

---

## अथ तृतीयाध्यायस्य चतुर्थः पादः

---

## अथ पुरुषार्थाधिकरणविचारः (१)

**पुरुषार्थोऽतः शब्दादिति बादरायणः (३-४-१)**

(कौ०) न ज्ञानं कर्माङ्गं, किन्तु कर्म ज्ञानाङ्गमिति सिद्धान्तः। अत्रेदं दूषणम् - दर्शनस्य साम्यात् तत्फले स्वर्गादौ वैषम्यं दुरुपपादम्। कर्मभिस्तदिति चेत् - आगतं तर्हि कर्मणोपि जनकत्वम्। 'न ह्यकार्योत्कर्षमकार्यमनुविधत्त' इतिन्यायादित्यादि यथासंभवमूह्यमिति —

(कु०) इदन्तु न संभवति — वक्ष्यमाणहेतोः । तथाहि - न ज्ञानं कर्मणोऽङ्गं, कर्म तु ज्ञानस्याङ्गमिति सिद्धान्तो न माध्वानामेव । किन्तु सर्वेषामेव वेदान्तिनाम् । अतो विशिष्यैवंकथनस्य नावसरः ॥

यदुक्तं — दर्शनस्य साम्यादित्यादि —

तदपि मन्दम् — किमत्र दर्शनं शास्त्रं, आहोस्वित् ज्ञानम् । नाद्यः — एकमेव शास्त्रमधीयानानां परस्परविलक्षणज्ञानोदयदर्शनात्, केषांचित् ज्ञानानुदयाच्च । उदितज्ञानानामेव कालभेदेन विदितविषयस्फुरणास्फुरणे भवतः । एतेन द्वितीयोऽपि निरस्तः - ज्ञाने वैलक्षण्यदर्शनात् । न च पुरुषभेदेन ज्ञानवैलक्षण्येऽपि एकस्य पुरुषस्योत्पन्नब्रह्मज्ञानस्य ज्ञाने वैलक्षण्यं न शक्यं वक्तुमिति वाच्यम् — सहकारि-कर्मवशात् जायमानज्ञानमपि फलवैषम्याधायकत्वेनैव जायत इत्यङ्गीकारात् । एतेन - 'कर्मभिस्तदिति चेदागतं तर्हि कर्मणो जनकत्व' मित्यपास्तम् । लोके सहकारिणो जनकत्वव्यवहाराभावात् । यथा देवदत्तस्तण्डुलं पचतीत्यादौ काष्ठादीनां सहकारि-कारणानां तथात्वाभावः, तथैव ज्ञानोदये कारणं तु जीवानां तथाविधयोग्यतासद्भाव एव । उक्तं हि महाभाष्ये प्रत्याहाराह्निके - 'समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न .... .... तत्र किमस्माभिः शक्यं कर्तुम् .... स्वाभाविक-मेतत्' इति । स्वस्य भावः स्वभावः योग्यता तया सिद्धं, तत्तद्योग्यतासिद्धमिति तदर्थः । एवं च कर्मणो ज्ञानद्वारा पुरुषार्थहेतुत्वमिति ब्रह्मवादिनां सिद्धान्तः । उक्तं च - भवदाचार्येणापि गीताभाष्ये 'न कर्मणामनारंभात्' (गी० ३-४) इति श्लोकावतरणे - 'कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं न स्वातंत्र्येणे' त्यादि । अतः 'न त्वकार्योत्कर्षे' त्यादि न्यायसञ्चारस्य नात्रावसरः इति ॥

इति पुरुषार्थाधिकरणविचारः

---

## अथ असार्वत्रिक्यधिकरणविचारः (२)

### असार्वत्रिकी (३-४-१०)

(कौ०) अत्रेदं दूषणं - फलीभूते ज्ञाने विध्यसंभवात् श्रवणादौ स वाच्यः, तत्राधिकारी अध्ययनवानेवायातीति नापूर्वमितः प्रतिपाद्यमस्ति ; इति —

(कु०) अत्रेदं प्रतिविधानम्-अपशूद्राधिकरणादिनाऽध्ययनवत एवाऽधिकार इति सूचितत्वेपि तत्प्रपञ्चनार्थमधिकरणारंभ इति नापूर्वमित्यादिदोषाऽनवकाश इति॥

## अथ नाऽविशेषाधिकरणविचारः (३)

### नाविशेषात् (३-४-१३)

(कौ०) अत्राऽधिकारतारतम्यात् ज्ञानतारतम्यमिति माध्वाः । इदमत्र दूषणम्—ज्ञाने तारतम्यं विषयभूतगुणाल्पत्वबहुत्वकृतमिति त्वयोच्यते । तच्च गुणानां ब्रह्मणा सहात्यन्ताऽभेदात् दुरुपपादमिति—

(कु०) एवमेव 'उपसंहाराधिकरण उक्तं कौस्तुभकृता । तत्रैव समाहितमस्माभिः । तेनैव खण्डितमिदं बोध्यम् । श्रौते प्रामाणिकेऽर्थेऽनुपपत्तिप्रतिभासे तु ईश्वराचिन्त्यशक्त्या सा परिहर्तव्येति श्रुतिशरणैर्निरणायि । शङ्कराचार्यैरपि स्वीयसूत्रभाष्ये प्रपञ्चितमेतत् । अयं तु तद्वचनेऽविश्वासात् तदनवलोकनाच्च वारंवारमेवं विलिखन् ग्रन्थं पूरयतीति तत्रतत्र सूचितमेवास्माभिः ॥

## अथ स्तुत्यधिकरणविचारः (४)

### स्तुतयेऽनुमतिर्वा (३-४-१४)

(कौ०) 'येन स्यात्केन स्या' दिति श्रुतिवाक्यमधिकारिभेदेन अर्थत्रयपरमिति भवन्मतसिद्धान्त' इत्युक्त्वा अत्रेदं दूषणं अस्य वाक्यस्येव 'यतो वा' इति (वाक्यस्यापि) शैववैष्णवाद्यधिकारिभेदेन शिवविष्णुपरत्ववर्णने संभवति विष्णुरेव जगत्कारणमित्यवधारणाऽयोगात् शास्त्रयोनित्वसमन्वयाधिकरणयोस्त्वद्रीत्या भङ्गापत्तेः । नन्विदं वाक्यं 'त्रेधा ही' त्युदाहृतवचनबलादेवं व्याख्यातं प्रामाणिकम् । समन्वयाधिकरणद्युभ्वाद्यधिकरणयोरुदाहृतशिवविरिञ्चोत्कर्षपरवचनान्मदुक्तरीत्या नेतुं शक्यत्वात् । उक्तं हि—

श्लेषप्राणे (ये) कवित्वे प्रमितपरतया श्लाघनीये च सूत्रे
नानाकर्मोपयोगश्रुतिसमधिगतानेकबोध्ये च मन्त्रे ।
एकार्थत्वव्यवस्थात्यजनमनुमतं सर्वमीमांसकाना-
मन्यत्रापीच्छया तद्यदि तव भवति ब्रह्मवाक्येष्वपि स्यात् ॥ (४५)

सृष्ट्यादिश्रवणैर्विशेषवचनान्नारायणैकान्तिभिः
स्पृश्या नेतरदेवता इति वचस्त्वेकार्थवादोचितम् ।
तस्मात्तत्परता भवेत्तव परं नान्यार्थधीवारणं
स्रष्टॄणां च विमुक्तवत्तव मते नाशक्यमीर्ष्यादिकम् ॥ (४६)

इति स्वोक्तार्थेऽप्यप्पय्यदीक्षितश्लोकद्वयमुदाहृत्य तदर्थो वर्णितः । तन्मध्ये पाञ्चरात्राऽप्रामाण्यं तप्तमुद्राधारणदूषणं चोक्तम् । आपस्तंबेन द्रोणकलशे वितन्यमानस्य पवित्रस्यानुमन्त्रणे विनियोगात् तत्परतया नेतुं शक्या श्रुतिरित्यभिधाय ब्रह्मणस्पते हे सोमेत्यादिना तदर्थ उक्तः —

(कु०) एकस्यैव शब्दस्यानेकार्थता देवमानुषाऽसुरान् प्रति **दाम्यत दत्त दयध्व**मित्यर्थक प्रजापतिकृतोपदेशवाक्येऽङ्गीकृता । तत्र हि बृहदारण्यके (५-२-१) त्रयो हि प्राजापत्याः, प्रजापतौ पितरि ब्रह्मचर्यमूषुः देवा मनुष्याः असुराः । उषित्वा ब्रह्मचर्यं देवा ऊचुः, ब्रवीतु नो भवानिति, तेभ्यो ह एतदक्षरमुवाच द इति, व्यज्ञासिष्टा इति, व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेति, ओमिति होवाच व्यज्ञासिष्टेति (१-) अथहैनं मनुष्या ऊचुः .... .... तेभ्यो ह एतदेवाक्षरमुवाच द इति .... दत्तेति न आत्थेत्यादिसमानम् ॥ २ ॥ अथहैनमसुरा ऊचुः .... .... तेभ्यो ह एतदेवाक्षरमुवाच 'द' इति .... दयध्वमिति न आत्थेत्यादि समानम् ।

अत्र देवादयः स्वस्वयोग्यतानुसारेण–दमः कार्यः, दानं कर्तव्यं, दया कार्या इति ब्रह्मोपदिष्टस्य 'द' इत्येकाक्षरात्मकपदस्यार्थमवेदिषुः । उपदेष्टा च प्रजापतिस्तत्तद्योग्यतां ज्ञात्वैव तदनुसारेणोपादिशदिति ज्ञायतेऽनेन । सद्गुणोच्छ्र्यादिरूपैश्वर्यवत्त्वेन भगवद्वात्सल्येन च अस्मादृशा न सन्तीति अहंकारो न कार्यः, दमः कर्तव्य इति बुद्धिरजायत देवानाम् । मनुष्याणां लोभस्वभावानां न लोभः कार्यः निष्कामनया हविर्दानादि कार्यमिति । क्रूरस्वभावानामसुराणां तु क्रौर्यं न कार्यं प्रजासु दया कार्येति ॥

एवं — छान्दोग्ये ( ८ · ७ - ३ ) इन्द्रविरोचनौ प्रति 'य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाचे' त्यादिनाऽऽत्मानमुपदिदेश । स तु समान उभयोः । अथापि विरोचनो देह आत्मत्वमवेत् । इन्द्रस्तु प्रकारान्तरम् ।

तत्र तत्तद्योग्यतैव कारणमिति ज्ञायते। प्रकृतेऽपि योग्यतानुगुण्येन गुणादयो भासन्तेऽधिकारिणां बुद्धौ ॥

एवं — 'विप्रतिषेधे परं कार्य' मिति पाणिनिसूत्रस्य तृजादिदृष्टान्तेन पूर्वपरसूत्रयोः पर्यायेण प्राप्तौ परमेव भवतीति नियमार्थता, एकप्रेष्यदृष्टान्तेन पूर्वपरसूत्रयोर्लक्ष्येऽप्रवृत्तौ परं भवतीति विध्यर्थतेति एकस्यैव सूत्रस्य विधित्व-नियमत्वोभयार्थकत्वं सिद्धान्ते। तथाऽत्रापि अनेकार्थकत्वं युक्तम्। पाणिनीये दृष्टान्तभेदेन पक्षभेदः, अत्राधिकारिभेदेन पक्षभेद इति विशेषः ॥

किञ्च — 'तत्प्रकृतवचने मय' (पा० सू० ५-४-२१) डिति सूत्रे वचनशब्द-स्याधिकरणल्युडन्तत्वं भावल्युडन्तत्वं च स्वीकृत्यार्थद्वयं वर्णितम् ॥

किञ्च — 'स्थानिव' दिति सूत्रे 'अनल्विधौ' इत्यस्य अला विधिः, अलः परस्य विधिः, अलः स्थाने विधिः, अलि परतो विधिरिति, 'अचः परस्मिन्पूर्व-विधावि' ति सूत्रे 'पूर्वविधा' वित्यस्य पूर्वस्य कार्ये कर्तव्ये, पूर्वस्मात्परस्य कार्ये कर्तव्ये, पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यककार्ये कर्तव्ये, पूर्वस्य स्थितौ कर्तव्यायामिति चार्थचतुष्टयं वर्णितम्। सर्वेप्यर्थास्सिद्धान्तिसंमता एव। एवं 'शेषे' (पा० सू० ४-२-९२) इति सूत्रस्य विधायकत्वं अधिकारत्वं चेति स्वीकृतम्। एषु सूत्रेषु लक्ष्य-भेदादनेकार्थत्वमङ्गीकृतं भाष्यकारैः। एवं चानेकार्थत्वं न दोषाय भवेत्। एवं मन्त्राणां विनियोगस्थलभेदेन अनेकार्थतापि युक्तैवेति निरूपितमिदमधस्तात् ॥

एतेन पवित्रं ते विततं (तै० आ० १-११-१, ऋ सं ७-३-८)' मिति मन्त्रस्य द्रोणकलशे (द्रोणकलशोपरि) वितन्यमानस्य पवित्रस्यानुमन्त्रणे आपस्तंबेन विनि-योगात् तत्परतया नेतुं शक्या श्रुतिरिति तप्तमुद्राधारणविषयकत्वं नेति दूषणं निरा-कृतम्। यतः तत्परत्वमस्तु एतत्परत्वं चाऽस्तु का हानिः ॥

'रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' (ऋ० सं० ४ ७-३३) इति ऋङ्मन्त्रस्य परमात्मेन्द्रोभयपरत्वेन योजना कृता सायणे। बाधकाभावस्थलेऽनेकार्थताङ्गीकृताऽ-स्माभिरिति तद्दृष्टान्तेन 'यतो वा' इत्यादावपि शैववैष्णवाद्यधिकारिभेदेन शिवविष्णु-

परत्ववर्णने विष्णुरेव जगत्कारणमित्यवधारणायोगादित्यभिधानमसङ्गतम् । कारणत्वोपासनापरवाक्येषु ब्रह्मादिपदानां नारायणान्यपरत्वं न, किन्तु विष्णुपरत्वमेव । स्थलान्तरे तु अन्यपरत्वे बाधकाभावेऽन्यपरत्वमस्तु इत्यस्मदीयनियमात् । कथंचिदपि यतो वा' इति कारणवाक्ये शिवादिपरत्वासंभवेन 'विष्णुरेवे' त्यवधारणायोग इत्यशक्यं वक्तुम् । अधिकारिभेदेनापि कारणवाक्यानामन्यपरत्वेन नयनमिति कथनमयुक्तम् । विस्तृतमेतत् 'श्रुतिगतिस्त्वि' त्यादिनाऽत्रैव (७२-पु०) । एतेन—'शास्त्रयोनित्वसमन्वयाधिकरणयोस्त्वद्रीत्या भङ्गापत्ते' रित्यपास्तम् । कारणवाक्यानां विष्ण्वन्यपरत्वाभावेन त्वद्दर्शिताधिकरणयोरस्मद्रीत्या भङ्गाभावात् । 'आदिकर्ता नारायण' इत्यादिभवदीयाचार्यसिद्धान्तव्याकोपस्तवैव ॥

(कौ०) यदुक्तं — समन्वयाधिकरणद्युभ्वाद्यधिकरणयोरुदाहृतशिवविरिञ्चोत्कर्षपरवचनात् मदुक्तरीत्या नेतुं शक्यत्वादिति —

(कु०) तयोरेवाधिकरणयोस्तयोरुत्कर्षाभावस्य निरूपितत्वेन विष्णूत्कर्षस्यैव सप्रमाणमुक्तत्वेन त्वद्रीतेर्निर्मूलत्वेन त्वदिच्छानुसारेण नयनायोगात् । तत्र प्रमाण तयोपन्यस्तश्लोकद्वयमपि कालानले निर्मूलमिदमिति निरूपितत्वेन नाऽत्र प्रमाणं भवितुमर्हति । उक्तं हि कालानले —

यत्र यत्र बहुलार्थतोदिता तत्र मानमुदितं विशेषतः ।
सृष्टिवाचि तदभावतस्तदावादनं न तव मन्द सङ्गतम् ॥ (५-२५)

सृष्ट्यादिश्रवणेष्वनेकपरता मानं न किञ्चाखिल-
स्रष्टृत्वेऽखिलदेशकालविषयेऽनेकस्य च व्याहतेः ।
ईर्ष्यादेर्विरहेऽपि विष्णुवचसा ब्रह्मेशयोः स्रष्टृता
व्यासेधाच्च न वल्गनं जडमते विद्वत्सु ते शोभते ॥ (२७) इति ॥

किञ्च — स्रष्टुं प्रत्येकमीशाः सकलमपि परब्रह्मभूतास्त्रयश्चेन्
संभूयैते सृजेयुः किमिति भजति तेनात्र शङ्कावकाशम् ।
स्रष्टुं शक्तो विनैव स्वयमुपकरणैरच्युतस्तद्व्यपेक्षा
सृष्टौ लीलाऽस्य दण्डग्रहणमिव गतौ जाङ्घिकस्येति गन्तुः ॥
(म० मु० ४७)

[अ]प्पय्यदीक्षितकृतं दूषणमनूद्य प्रतिक्षिप्तं कालानले (५ - १९) —

जनितमिदनेकैरस्त्वियं तर्करीतिः सहृदयहृदयं ते नो चमच्चर्करीति ।
निगमशिखरवाणी ह्यन्यकर्तुः कृपाणीत्यहमिह करवाणीशं भृशं चक्रपाणिम् ॥ इति ।

अत्र प्रसङ्गान्निरूपितं पाञ्चरात्राऽप्रामाण्यं तप्तमुद्राधारणदूषणं च प्रथमाघाते [दू]षितमस्माभिः ॥ इति स्तुत्यधिकरणविचारः

---

## अथ उभयलिङ्गाधिकरणविचारः (५)

### सर्वथापितु तएवोभयलिङ्गात् (३-४ ३४)

(कौ०) इन्द्रविरोचनयोः स्वस्वभावानुसारेण ज्ञानप्राप्तितदभावावभवतामित्यादि [मा]ध्वमतम् । दूषणन्तु - प्रागभाववादिनस्तव नित्यसंसारिणः केचिदित्यभ्युपगमस्ता[व]दसङ्गतः, प्रागभावकोशसंक्षये संसारोच्छेदस्य दुर्वारत्वात् । पुनः केचिदवशिष्यन्त इति चेत् — तदवसानानन्तरं तर्हि मुक्तिस्स्यात् । ते नश्यन्त्येव । नेति चेत् — तर्हि तेषामत्यन्ताभावत्वमेव स्यात् प्रागभावत्वं च भज्येत ।

किंच — 'शृण्वे वीर' इति श्रुतिस्त्वदभिमतार्थे न मानं व्यवहारकालपरत्वात्, [त]दुत्तरतृतीयमन्त्र एव 'इन्द्रो मायाभि' रित्यादिना व्यावहारिकार्थपरत्वस्य स्फुटीकरणात् । 'तानह' मिति श्लोकघटकः अजस्रशब्दस्तु बहुकालानुवृत्तिपरः 'अजस्रदीक्षाप्रयतस्य मद्गुरो' रितिवत् ।

अपिच — स्कान्दादिषु ब्रह्मगीतादिषु (च) अद्वैतस्यैव स्पष्टतया तदुपबृंहितलाघवतर्कोपष्टब्धश्च । सकलशिष्टपठ्यमानोपनिषद्वाक्यैरद्वैततत्वे सुस्थिते तद्विरुद्धेयं त्वत्प्रक्रियाऽनुपादेयैवेति दिगिति —

(कु०) अत्र वदामः — प्रयत्नसाम्येऽपि दृष्टाऽदृष्टफलोपलंभः तत्तद्योग्यतानुसारेणेति सप्रमाणं पूर्वाधिकरणे निरूपितं तत्र विस्मर्तव्यम् ॥

यदत्रोक्तं 'दूषणन्तु प्रागभाववादिनस्तव नित्यसंसारिणः केचिदित्यभ्युपगमस्तावदसङ्गतः । प्रागभावकोशसंक्षये संसारोच्छेदस्य दुर्वारत्वा' दिति —

इदमसङ्गतम् - 'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः' इत्यादिप्रमाणै-र्जीवानामसंख्याकत्वसिद्ध्या, 'ध्यानङ्गतान् सृतिगतांश्च सुषुप्तिसंस्थान् ब्रह्मादि-कान्कलिपरान् मनुजांस्तथैक्षत' इति स्मृत्या सृज्यजीववर्गस्य बहोः सत्त्वाभिधानेन च केषांचित्सत्त्वावगमात् नित्यसंसारित्वाभ्युपगमे प्रागभावकोशक्षयाभावात् संसारो-च्छेदाभावात् तद्दुर्वारत्वोक्तेरयोगात्। अतः प्रागभावनाशाङ्गीकारिणः प्रति 'ते नश्य-न्त्येव ने' त्यादि भाषणमनुक्तोपालम्भः। अतः प्रागभावेऽङ्गीकृतेऽपि न काचित्क्षतिः॥

किंच—प्रागभावो नैकः, किन्तु उत्पत्स्यमानकार्यभेदात् बहव एवेति प्रागभाव-कोशसंक्षय इत्युक्तिरेवायुक्ता। किंच - प्रागभाववादिनस्तवेतिभाषणमपि अनुपपन्नं, तव मतेऽपि—'स चाऽभावश्चतुर्विधः, प्रागभावः प्रध्वंसाऽभावोऽत्यन्ताभावोऽन्योऽन्या-भावश्चे' ति वेदान्तपरिभाषायामुक्तेः। अस्तु मा वा स तव मते, नास्माकमवसरस्त-द्विचारे। विस्तृतमेतत्प्रागभावोन्मज्जने श्रीनारायणाचार्यकृते।

सृज्यानां बहूनां सत्त्वादेव 'पुनः केचिदवशिष्यन्ते तदवसानानन्तरं मुक्तिः स्या' दिति परास्तम्। तदवसानस्यैवाभावात्।

यदुक्तं — किंच - 'शृण्वेवीर' इतिश्रुतिस्त्वदभिमतार्थे न मानं, व्यवहार-कालपरत्वात्, तदुत्तरतृतीयमन्त्र एव - इन्द्रो मायाभिरित्यादिना व्यावहारिकार्थ-परत्वस्य स्फुटीकरणात्। 'तानह' मिति तु बहुकालानुवृत्तिपरम्। अजस्रदीक्षाप्रयतस्य मद्गुरोरितिवत् इति —

अयं व्यवहारकालः नायं तादृशः, अयमर्थो व्यावहारिकः नायमर्थस्तथाविध इति विभागो न द्वैतिनां मते; किंतु तव मत एव। त्वन्मतप्रक्रियां नाङ्गीकुर्वन्ति श्रीव्याससिद्धान्तवेदिनः। ते हि - मुक्तिदशायामपि 'स यश्चायं पुरुषे, यश्चासा-वादित्ये, स एकः (४) स य एवंवित्, अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुप-संक्रम्य .... इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्, एतत्साम गायन्नास्ते, हा वु हा वु हा वु। अहमन्न' मित्यादिना - सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विप-श्चिते' त्यादिना सर्वव्यवहारसद्भावोक्तेः, सोपि कालो व्यवहारकाल एव, तात्कालिको-प्यर्थो व्यावहारिक एव, नित्यः पारमार्थिक एवेति वदन्ति। प्रलयकालातिरिक्तकाला-स्सर्वेऽपि व्यवहारकाला एव - तदा व्यवहर्तॄणां भगवदुदरस्थत्वेन गर्भस्थशिशोरिव

व्यवहारयोग्यताभावात् इति विद्धि । तस्मात् 'शृण्वे' इति श्रुतेः व्यवहार-कालपरत्वाभिधानेन तव नेष्टसिद्धिः, नास्माकमनिष्टप्रसक्तिः । 'इन्द्रो मायाभि' रिति तृतीयमन्त्रेण व्यावहारिकार्थपरत्वस्य स्फुटीकरणा' दित्यपि त्वदुक्तमसङ्गतं जानीहि । तथाकल्पने तत्र गमकादर्शनात् ॥

'शृण्वेवीर उग्रमुग्रं दमायन्न अन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥' ( ऋ० सं० ४-७-३१-१ ) इति श्रुतेरयमर्थः — वीरः - अध्यवसायान्तगामी, स्वनिश्चयानुसारेण स्वकार्यसंपूर्तिकर्ता नरसिंह इति वा, इन्द्रः = परमेश्वरः, उग्रमुग्रं = सर्वान् दुष्टप्रकृतीन्, दमायन् = दमयन्, नित्यनरकं प्रापयन् । यद्वा - अन्धे तमसि दण्डयन् । अन्यमन्यम् = दुष्टेभ्योऽन्यान्, तद्विरुद्धान् सर्वान सत्स्वभावान्, अति = संसारं त्याजयित्वा, नेनीयमानः = भृशं स्वपदं नयन्, एधमानद्विट् = स्वयोग्यतामतिक्रम्य वर्धमानस्य द्वेष्टा, शृण्वे = श्रूयते वेदेषु, यतः स उभयस्य = देवासुरवर्गस्य राजा । किंच - मनुष्यान् = मध्यमजीवान्, चोष्कूयते = संसार एव वर्तयति, स एवेन्द्र इति ॥ अत्र त्वदभिमतव्यावहारिकत्वज्ञापकाऽश्रवणात् व्यावहारिकार्थपरत्वकल्पनमयुक्तम् । अतएव 'तदुत्तरे' त्याद्यपि न युक्तं, तत्रापि तादृशार्थज्ञापकाभावात् ॥

अयं स मन्त्रः— 'रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ।' (ऋ० सं ४-८-३३-३) इति ।

अस्याऽयमर्थः — अस्य = परमात्मनः, रूपंरूपं प्रति 'शृण्वेवीर' इति मंत्रे प्रकृतत्रिविधजीवराशिः, प्रतिरूपः = प्रतिबिम्बो बभूव । तत् = रूपं = बिंबरूपं अस्य = प्रतिबिंबत्वेनोक्तस्य योग्यजीवस्य, प्रतिचक्षणाय=साक्षात्काराय, भवति तद्विषयो भवति । इन्द्रः = स परमात्मा, मायाभिः = स्वसामर्थ्यैः, इच्छाभिर्वा, पुरुरूपः= अनन्तजीवबिम्बरूपः, ईयते = ज्ञायते, अस्य = ईश्वरस्य, शता = शतानि, अजितायनन्तरूपाणि 'शतमनन्तं भवती' ति वचनम् । एवं दश शतानि विश्वादिसहस्ररूपाणि एवंशता 'नारायणो नरः शौरिः' इत्यादीनि, दश मत्स्यादीनि, एवं दश = बहूनि परादीनि, हरयः = हरिनामकानि रूपाणि, युक्ताः = व्यूहशस्सन्ति ति — प्रतिष्ठन्ति । अत्र प्रमाणरूपाणां बहूनां बिंबप्रतिबिंबभावस्य च निरूपणम

निरूपितस्य सर्वस्यापि वास्तवत्वेन कौस्तुभकृदभिमतव्यावहारिकत्वं न कस्यचिदपि सिद्धम्। अतो नायं पूर्वमन्त्रोक्तार्थस्य व्यवहारिकत्वास्फोरणे समर्थः।

अत्रेदं बोध्यम् — अयं मन्त्रोऽनेकार्थकतया योजितः सायणे। तथाहि - आदौ इन्द्रः कथमेकोऽनेकेषु यागेषु आहूयमानो हविर्ग्रहणाय गच्छतीति शङ्कां, मायाभिः ज्ञानैः (स्वसंकल्पैः) बहुरूपो भूत्वा बहून् यजमानान् गच्छतीति मन्त्रार्थं वर्णयित्वा परिजहार माधवः। ततः - इदि परमैश्वर्ये इति धातोरर्थानुगमात्, इन्द्रः = परमेश्वरः स्वसामर्थ्येन उपाधिभिः सदानन्दरूपः बहुरूपो बभूवेत्याद्यर्थान्तरं चाऽवर्णयत्। एतेन विचित्रतमभगवन्महिमातिशयो दर्शितः। मघवत्परत्वे मायापदस्य ज्ञानपरत्वं, परमेश्वरपरत्वे मायापदस्य सामर्थ्यपरत्वमित्युक्तत्वेन उक्तमखिलं मन्त्रद्वयोक्तं न व्यावहारिकं, किंतु पारमार्थिकमेवेति निष्कर्ष इति॥

ननु सन्ति केचनाऽसुरस्वभावा इति 'तानह' मिति भगवद्वचनपरामर्शेन ज्ञायते। ये द्विषन्ति भगवन्तं तानहमासुरयोनौ क्षिपामि, न पुनस्तेषामुत्थितिरिति वचनार्थः। ततश्च नित्यमधोगतिरेवेत्युक्तेः, जीवस्वभावभेदावगमात् जीवविभागो युक्त इति शंकावारणाय यदुक्तं कौस्तुभे — 'तानहमि' ति बहुकालानुवृत्तिपरमिति —

बहुकालानुवर्तनमेव आसुरत्वज्ञापकम्, दीर्घद्वेषाभावस्य सात्विकजनस्वभावत्वात्। पुनरुत्थित्यभावकथनं तु तस्य (असुरयोनिक्षेपणस्य) नित्यत्वव्यञ्जकम्। अत उक्तविभागः समीचीन एव। बहुकालानुवृत्तिं वयमपि वदामः, परंतु पूर्वोत्तरावधिरहितकालानुवृत्तिरित्यभ्युपगच्छामः, तद्वचनस्वारस्यादिति।

शङ्कराचार्यैरपि अजस्रमजस्रपदं सन्ततमिति व्याख्यातं, न तु बहुकालमिति॥

अपिच यदुक्तम् स्कान्दादिषु ब्रह्मगीतादिषु अद्वैतस्यैव स्पष्टतया तदुपबृंहितैर्लाघवादितर्कोपष्टब्धैः सकलशिष्टपठ्यमानोपनिषद्वाक्यैरद्वैततत्त्वे सुस्थित इत्यादि —

इदमसंगतम् — अद्वैतस्य श्रुतिगीतासूत्रानुकूल्यं नास्तीत्युपन्यस्य असकृन्निराकृतत्वेन, प्रामाणिकस्य द्वैतस्य लाघवसहकृतकेवलशुष्कतर्कैर्बाधायोगात्, स्कान्दादिगतभवदभिमतवचनानां भवन्मतीयप्राक्तनग्रन्थेषु क्वाप्यनुदाहरणात्, जीवेशभेदपरसूत्रप्रणेतृव्यासाभिप्रायविरुद्धत्वात्, तदुपष्टम्भोऽपि अप्रयोजक एव। तस्मात् द्वैतमेव शास्त्रसंमतमिति स्थितिः॥

यदुक्तं — सकलशिष्टपठ्यमानोपनिषद्वाक्यैरद्वैततत्त्वे सुस्थिते तद्विरुद्धेयं स्वप्रक्रियाऽनुपादेयैवेति दिगिति —

इदमपि भाषणमसङ्गतमिति मदीयैतद्ग्रन्थसमालोचनेन सुधियां सुविदितमेव भविष्यति। अथापि किंचिदुच्यते स्पष्टप्रतिपत्तये — दशस्वपि ईशावास्याद्युपनिषत्सु श्वेताश्वतरसहितासु न सन्ति अद्वैतसाधकानि, सन्ति च द्वैतसाधकानि। अत एवोक्तं 'न चाऽभेदे कश्चिदागमः, सन्ति च भेदे सर्वागमा' इति। प्रसिद्धासु सर्वासूपनिषत्सु प्रतिविद्यं भेदस्यैवोक्तत्वेन द्वैतमेव औपनिषदं सूत्रगीतादिसिद्धं च इति प्रतिविद्यगतं वाक्यमुपादाय स्पष्टमुपपादितं तत्वनिर्णयादौ। तत्र—भगवता सूत्रकृता सतीषु सर्वासूपनिषत्सु यामुपनिषदमनुसृत्य ब्रह्ममीमांसा प्रारभ्यत, तस्यां 'ब्रह्मविदाप्नोति परम्, तदेषाऽभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिते' त्युपक्रमे जिज्ञास्यस्य प्राप्यस्य च ब्रह्मणः, जिज्ञासोः प्राप्तुर्जीवस्य च भेद एव स्पष्टं निरूपितः। तदुपनिषदन्ते च 'अस्माल्लोकात्प्रेत्य' 'एतत्साम गायन्नास्ते' इत्यादि सामगानेन भगवन्तमस्तुवन्नित्यर्थकेन परमात्मनो मुक्तानां च भेदः प्रपञ्चितः। मध्ये च सृष्ट्यादिनिरूपणेन ब्रह्मप्रपञ्चयोर्भेद एव विशदीकृतः। सूत्रकृता च जीवब्रह्मणोर्भेद एव सूत्रगीतयोरुक्त इति स्पष्टं प्रतीमः। नायमर्थः तिरोहितः सर्वेषामिति व्याख्यानं नापेक्षते। 'सामगायन्नास्त' इत्यत्र सामपदं ब्रह्मेति (शांकरे)। एवं प्रत्युपनिषद्विद्यं ब्रह्मजगतोर्भेद एव प्रतिपादित इति स्पष्टं प्रत्यपादि आकरेषु। विस्तरभीरुणा मया न प्रपञ्च्यते। तस्मात् जीवब्रह्मणोर्भेद एव शास्त्रमुख्यतत्वं, तदितरत् सर्वशास्त्रविरुद्धमिति विदाङ्कुर्वन्तु। अतोऽद्वैतप्रक्रिया सर्वोपनिषद्विरुद्धा नादरणीया श्रेयोऽर्थिभिः। किंतु — द्वैतप्रक्रियैव सादरं समाश्रयणीया ॥ इत्युभयलिङ्गाधिकरणविचारः ॥

---

## अथ आधिकारिकाधिकरणविचारः (६)

### न चाधिकारिकमपि पतनानुमानात्तदयोगात् (३-४-४१)

(कौ०) 'अतोऽविरुद्धकामस्स्यादकामस्तेन भण्यते' इति माध्वाः। इह परीक्ष्य लोकानित्यादिना आब्रह्मलोकं विरक्तस्यैवाऽधिकारलाभात् तं प्रतीदं कथनं व्यर्थम्। अविरक्तं प्रत्यपि व्यर्थम्, तत्तदकामनया तत्तत्कर्म कार्यमिति श्रुत्या-

दिषु दर्शनात् नाकांक्षेदित्यसङ्गतम् । अयोग्यं नाकांक्षेदित्यपि न युक्तं, अनधिकारी नाकांक्षेदिति प्राप्तम् । अधिकार्यनधिकारिविभागस्तु पूर्वतन्त्रे (६-) अध्याये प्रथमपादोक्तरीत्याऽवसेयमिति —

(कु०) अत्रेदं वक्तव्यम् — नायं भट्टोजिः प्रसिद्धकौमुद्यादिकर्ता पण्डितः, यत एवं शास्त्रासंबद्धं भाषते । अतोऽन्योऽयं तस्य सनामा कश्चित् । अस्तुनाम स एव वा, अथापीदं सर्वमुन्मत्तप्रलापः । तथाहि — श्रुतिसिद्धमपि ब्रह्मजिज्ञासुभिरवश्यं ज्ञेयमनुष्ठेयं चेति बोधनाय अधिकारस्य वक्तव्यत्वात्सूत्रकृतोक्तं, स्पष्टीकृतं च भाष्यकृता । अत एव हि भवद्भाष्यकारेण जिज्ञासाधिकरणेऽथशब्दार्थवर्णनावसरे - 'नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वं चे' ति अधिकार उक्तः । यदि 'परीक्ष्य लोका' निति श्रुत्यैवाधिकारलाभात् कुतो वक्तव्यमाचार्यैरिति आक्षिप्यते । तर्हि — भवदाचार्याणामधिकारभाषणमपि व्यर्थमेवेत्यवेहि । ननु श्रुतिसिद्धार्थस्यैवानुवादः स शाङ्करभाष्यग्रन्थ इति चेत्, तर्हि परेऽपि एतत्सूत्रं भाष्यं च अनुवाद एव श्रुत्यर्थस्येति वदन्तीति विद्धि ॥

किंच — श्रुत्यैव लाभात् सूत्रकारादिवचनं व्यर्थमिति मन्यसे, तदा - 'तत्र प्रथमे पादे तावत् पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते वैराग्यहेतो' रिति तृतीयप्रथमपादारंभस्थभवद्भाष्यकारवचनं तृतीयपादारंभश्चेति द्वयं व्यर्थं भवेत् ।

किंच — ब्रह्ममीमांसाप्रतिपादितसर्वप्रमेयस्य श्रौतत्वेन तयैव तत्सर्वावगतिलाभात् एतच्छास्त्रस्यैवानारंभणीयत्वापत्तिः ॥

किञ्च—'तस्मात् एवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' (बृ० ४-४-२३) इति श्रुत्यैव विद्याङ्गत्वेन शमादीन्यनुष्ठेयानीति सिद्धत्वेन तेषां तथात्वेनानुष्ठातव्यत्वबोधकं 'शमदमाद्युपेत' इति सूत्रं च व्यर्थमेव भवेत् ॥

अविरक्तं प्रत्यपि व्यर्थं, तत्तत्पदकामनया तत्तत्कर्म कार्यमिति श्रुत्यादिषु दर्शनादिति यदुक्तम् —

एतदपि चिन्त्यं 'राजा राजसूयेन स्वाराज्यकामो यजेते' ति राजन्यातिरिक्तब्राह्मणादिना स्वाराज्यकामनायामपि राजसूयो न क्रियेतेति बोधितत्वेन

स्वाराज्ये विप्रो वैश्यश्च कामनामेव न कुर्यादिति सिद्धेः। कामनायामपि अविरुद्ध एव कामना कार्या न विरुद्ध इति नियमाय - विरक्तं प्रति नाकांक्षेदिति विधेः सार्थक्यात् ॥

एतेन – 'नाकांक्षेदित्यसङ्गतम्, अयोग्यं नाकांक्षेदित्यपि न युक्त' मिति त्वत्प्रलापः परास्तः। योग्याऽविरुद्धकामनाया एव कर्तव्यताबोधनावश्यकत्वात्। अतएव - 'धर्माऽविरुद्धो भूतेषु कामोऽस्मी' (गी० ७-११) ति - भगवानाह। धर्मेण=शास्त्रार्थेन धर्मेणाऽविरुद्ध इति तदर्थः। स्वस्ववर्णाश्रमोचितत्वेन विहितत्वमेव शास्त्रीयत्वं, ततश्च - परनारीदर्शनकामना नोचिता पुरुषस्य। तथा कलञ्जभक्षणकामना निषिद्धा 'न परदारान् गच्छेत्, न कळञ्जं भक्षये' दिति तयोर्गमनभक्षणनिषेधात्, तदुभयकामनापि न कार्येति बोध्यम्। 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यत' (गी० ३-६) इति विषयस्मरणादीनामपि निषेधात् ॥

यदुक्तमनधिकारी नाकांक्षेदिति प्राप्तम्, अधिकार्यनधिकारिविभागस्तु पूर्वतन्त्रे षष्ठोक्तरीत्याऽवसेय इति —

तत्तुच्छम् — अनाघ्रातवेदान्तग्रन्थगन्धभाषितत्वात्। अनधिकारी नाकांक्षेदिति प्राप्तमिति तु सम्यगेव, कर्मणि ब्रह्मविद्यायां च शूद्रस्यानधिकारोक्तेः। तस्य उपनयनाध्ययनादिरूपवैदिककर्मणि तादृशब्रह्मविद्यायां च अधिकाराभाववत्। तादृशकर्मब्रह्मज्ञानस्योत्तमपदकामनापि न कार्यैवाऽधिकाराभावात् इति शास्त्रकृतां तात्पर्यावधारणात्। 'अधिकार्यनधिकारिविभागः पूर्वतन्त्रोक्तरीत्ये' त्युक्तिस्तु चिन्त्यैव। अत्रैवोदाहृतश्रुत्या 'अध्ययनमात्रवत' इत्यादिसूत्रैः भाष्योदाहृतस्मृतिभिश्चाऽधिकारस्य निर्णेतुं शक्यत्वेन, सूत्राद्यनुसारेण भाष्यादावधिकारस्योक्तत्वेन च तन्त्रान्तरोक्तरीत्याऽधिकारनिर्णयो ज्ञेय इति कथनस्य श्रुत्यन्ताविमर्शननिबन्धनत्वावगमात् ॥

किंच – पूर्वतन्त्रे तावत् - कर्माधिकार उक्तः 'समर्थोऽर्थी विद्वा' निति। तत्र सामर्थ्यं विष्णुक्रमणाद्यङ्गक्रियाहाङ्गपाटवादिमत्त्वम्। अर्थित्वं फलकामनावत्त्वम्, विद्वत्ता तु क्रतूपयोगिज्ञानम्। तत्र तु तन्त्रे ब्रह्मविद्याधिकारो नोक्तः। तत्रोक्तोऽधि-

कारो ब्रह्मविद्यायां नोपयुज्यते । पङ्गोरपि ज्ञानाद्युदयसंभवात् । कामनाराहित्यस्यैव ज्ञानाङ्गत्वेनाऽङ्गीकारात् । सामान्यविद्वत्ता तु अधिकारकोटौ प्रवेशमर्हति । ततश्च पूर्वतन्त्रोक्ताधिकारस्याऽनुपयोगात् पूर्वतन्त्रोक्तरीत्याऽवसेय इत्यन्तमसङ्गतम् ॥

पूर्वमीमांसाशब्दश्रवणमात्रेण स्वस्य तत्तन्त्रवैदुष्यमस्तीति ज्ञात्वा परे बिभ्यतीत्यभिमानेन अयमेवं पदेपदे कौस्तुभे वदति । स चाभिमानोऽस्माभिस्तत्तत्र निराकृत एव ॥

यच्चोक्तम् — अस्तुनाम तन्निर्णयो येन केनापि । इह तु फलेच्छामेव निषेधाम इति चेन्न, संति विषयसौन्दर्यज्ञाने निषेधसहस्रेणापि इच्छाया दुर्वारत्वादिति दिगिति —

इदमसङ्गतम् — विषयसौन्दर्यज्ञानमात्रेण इच्छाया अनिवृत्तौ 'न परदारान् गच्छे' दित्यादिनिषेधशास्त्राणां वैयर्थ्यमेव स्यात् । तस्मात्तदन्यथाऽनुपपत्त्या पुत्रदारादिविषयेभ्यो मनो निगृह्य विषयास्मरणपूर्वं परमात्मनि विन्यस्य सदा परमात्मानं स्मरन्नासीत । एवं प्रत्यहं कुर्वतो विषयस्मरणमेव नश्यति तदभावे क्रमेण विषयेच्छापि नोत्पद्यते । उक्तं हि भागवते — (४-१०-१२)

ते न स्मरन्त्यतितरां प्रियमीशमाद्यं स्वान्संपदः सुतसुहृद्गृहवित्तदारान् ।
ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ इति ।

अयमर्थः – हे अब्जनाभ ये जना भवत्पादभक्तभक्ताः ते जनाः, आद्यं प्रीतिपात्रं भक्तिविषयम्, ईशं = त्वां स्मरन्ति अतितरां (नितरां) ते सुतादीन् स्वीयान् संपदश्च न स्मरन्ति इति ।

भगवद्भक्ततद्भक्तसाधुजनसङ्गात् सदा भगवत्स्मरणशीलाः सुतादिविषयणाभावस्मरणवन्तो विषयेच्छां न कुर्वन्त्येव इच्छाकारणस्य स्मरणस्यैवाभावात् । उक्तश्च मनोनिग्रहप्रकारो गीतायां षष्ठे —

'असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥' (३५) इति

विषयसौन्दर्यज्ञाने सत्यपि तत्र कामना न कार्येति बोधनाय हि निषेधवचनानि

प्रवृत्तानि । मनोनिग्रहप्रकारश्च शास्त्रे प्रदर्श्यते । ततश्च इच्छाया दुर्वारत्वोक्तिरसमंजसैवेति मन्तव्यम् ॥ इत्याधिकारिकाधिकरणविचारः ॥

---

## अथ स्वामिनःफलश्रुत्यधिकरणविचारः (७)

स्वामिनः फलश्रुतेरित्यात्रेयः (३-४-४४)

(कौ०) इदं दूषणम् — सप्तान्नविद्योपासनाप्रीतभगवद्दत्तमिन्द्रियतत्फलेषु अवान्तरस्वामित्वमिन्द्रियप्रेरकाणां देवानां स्वीकृतम् । लोके तत्तदिन्द्रियतत्तत्फलस्वामित्वेनाभिमतानां मनुष्याणां, तत्र स्वामित्वं नास्तीति त्वदीयैतदधिकरणे पर्यवस्यति । पूर्वपक्षे बहूनां देवानां स्वामित्वतारतम्यानुसारेण फलतारतम्यमुक्त्वाऽपि कर्तुः फलप्रतिषेधात् । सिद्धान्ते - पूर्वपक्ष्यभिमतं कर्तुः सर्वथाऽस्वामित्वमङ्गीकृत्यैव राजगुरुस्वामिकपालनव्याख्यानदृष्टान्तेन ज्ञानकर्माऽस्वामिनामपि मनुष्यादीनां किंचित्फलमिति फलोपपादनाच्च । एवंच — जीवस्य सुखदुःखादिस्वामित्वाभावे सिद्धे शास्त्रारंभवैफल्यमिति 'कर्ता शास्त्रार्थवत्त्वा' दित्यधिकरणभंगे प्रपञ्चितमिति —

यत्त्विह सूत्रेऽयजमानानामप्यृत्विजां फलमित्युक्तं तत् पूर्वमीमांसाऽनभिज्ञानमूलकम् । तत्र यजमानानामृत्विक्कार्यविधानात् । मध्वादिभिर्बहुधा शाब्दिकमीमांसकमर्यादाऽनवबोधात् व्यवह्रियत इति प्रागेव प्रपञ्चितम् इति —

(कु०) अत्र वदामः — अधिकरणार्थपर्यवसानं यथास्वबुद्धिविलासं निर्णीय दोषस्तावदुद्घाटितः कौस्तुभकृता । तथाहि - अत्र कर्मकर्तुः प्रयोज्यस्य देवदत्तादेर्व्यापारस्याप्रधानत्वेन, तस्य चाऽल्पफलत्वेन, प्रयोजकव्यापारादेरेव मुख्यत्वादिना च प्रयोज्यकर्तृत्वमविवक्षित्वा, अल्पस्वे निःस्वत्वव्यवहारवत् अल्पफले तदभावं च विवक्षित्वा देवानामेवेति पूर्वपक्षः कृतः, न तु प्रयोज्यदेवदत्तादेः कर्तृत्वाद्यभावाभिप्रायेण । अत एव 'कर्मादिफलं किं प्रेरकत्वाद्देवानां भवति, उत कर्तृत्वाद्देवदत्तस्येति संशयः प्रदर्शितस्सुधायामत्राधिकरणे । देवानामेवे' त्येवकारेण फलमात्रस्य व्यावृत्तिः न तु कर्तृत्वस्य । फलव्यापारयोर्व्यधिकरणत्वस्य लोके देवदत्तः पचतीत्यादौ दर्शनात् ।

सिद्धान्ते तु देवदत्तादेः कर्तृत्वं फलं चाङ्गीकृतमेव 'कर्तुरपि भवती' ति सुधोक्तेः कर्तृत्वं फलं चाङ्गीकृतमिति तदर्थः । ततश्च 'सिद्धान्ते पूर्वपक्ष्यभिमतं कर्तुः

सर्वथाऽस्वामित्वमङ्गीकृत्यैवे ' ति तदुक्तिः पराहता । सुधायां कर्तुरित्युक्त्यैव कर्तृत्वमस्तीति प्रतीतेः । न च तेन कर्तृत्वेन देवदत्तादेः फलमिति कुतो नोक्तमिति वाच्यम् - सहकारित्वमात्रेणापि लोके फलदर्शनेन राजगुर्वादिदृष्टान्तेन फलोक्तेः । एतेन सत्कर्मकृतां साहाय्यकरणेऽपि कर्मकरणफलप्राप्तिर्भवति । अतएव अभिज्ञाः प्रवचनादिकर्तृणां द्रव्यवितरणादिसाहायकमाचरन्ति, विद्यार्थिनामन्नादिकं दित्सन्ति ददति च ।

यथा — आरण्यकतपस्विजनतपश्चरणान्तरायकृद् दुष्टप्राणिभयनिवारणेन तपःकारयितृत्वेन राज्ञां तपोजन्यपुण्यषड्भागभागित्वम्, तथा — सत्कर्मकारयितृणां तत्त्वाभिमानिनामपि जीवकृतसत्कर्मजन्यसुकृतरूपफलभागित्वमिति शास्त्रनिष्कर्षो बोध्यः। राज्ञां मुनिजनतपोजन्यपुण्यभागभागित्वं मन्वादिस्मृतिषु राजधर्मप्रकरणे, इतिहासादौ च प्रसिद्धम् । उक्तं च कालिदासेन शाकुन्तले, रघुवंशेऽपि —

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ (अ. २-१३) इति ।
तपो रक्षन् स विघ्नेभ्यस्तस्करेभ्यश्च सम्पदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ (१७-६५) इति च ॥

अत एव—राजा स्वसन्दर्शनायाऽऽगतान्मुनिजनान् प्रथमतः आगमनप्रयोजनप्रश्नेषु किं भवतां मखादिसत्कर्मानुष्ठानस्य प्रत्यूहो जात इति पृच्छति, ततोऽन्यदिति प्रबन्धविमर्शे ज्ञायते । तथाहि अनर्घराघवे —

कच्चित्कान्तारभाजां भवति परिभवः कोपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि ।
कर्तुं वा कच्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तुः
यत्संप्राप्तोऽसि किंवा रघुकुलतपसामीदृशोऽयं विवर्तः॥ १-अ. इति।

षड्भागभागित्वं राजधर्म इति भारते (आनु० १५०-३०) —

" कृतदारक्रियः श्रीमान् राज्यं प्राप्य च धर्मतः ।
प्रजाः पालयते सम्यक् षड्भागकृतसंविधिः ॥ " इति ॥

एतेन — ज्ञानकर्माऽस्वामिनामपि फलोपपादनाच्चेत्यादि यदुक्तं तत्परास्तम् । अकर्तुः फलानभिधानाच्च ॥

कर्तृत्वाभावाभिधानस्य भ्रममूलकत्वात्, 'एवंच जीवस्येत्यादि प्रपञ्चित' मित्यन्तमुपरितनमपि परास्तं वेदितव्यम् । 'कर्ता शास्त्रे' त्यधिकरणे कृतप्रपञ्चनमपि खण्डितमस्माभिस्तत्रैव । तस्मात् कौस्तुभोक्तं सर्वं माध्वीयग्रन्थार्थाऽज्ञानमूलकम् ॥

यदुक्तमत्र — 'यत्त्विह सत्रेऽयजमानानामपि ऋत्विजां फलमित्युक्तं, तत् पूर्वमीमांसाऽनभिज्ञानमूलकम् । तत्र यजमानानामृत्विक्कार्यविधानादिति —

अत्रेदं वक्तव्यम् — अत्र टीकायां अयजमानानामपि ऋत्विजां फलमित्युक्तम् । सत्रिणां सर्वेषामपि फलिसंस्कारकर्तव्यताव्यवस्थापनाय प्रवृत्तमधिकरणं 'सत्रे ग्रहपतिरसंयोगाद्धौत्रवदाम्नायवचनाच्च' (१२-४-३५-अ १४) इति। तत्र सप्तदशसु एको गृहपतिरिति कल्प्यते याज्ञिकैरिति 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादिनाऽवगम्यते । स तु यजमानस्थानीयः । तत्राधिकरणे हि — गृहपतेरेव फलित्वप्रयोजकाञ्जनादिसंस्काराः कार्या इति न, किंतु सर्वेषामपि तद्भिन्नानामृत्विजां फलित्वात् सर्वेषामपि ते कार्या इति व्यवस्थितम् । सत्राधिकारिणां सप्तदशानां मध्ये यजमानस्थाने (कार्ये) कल्पितस्यैकस्य गृहपतिरिति नाम, यजमानस्थानीयत्वात् । स यजमानपदेनापि व्यपदेशमर्हतीति विवक्षयाऽयजमानानामित्युक्तम् । गृहपतिव्यतिरिक्तानामिति तदर्थः । अतो जैमिनीयविरोधशङ्काऽनवकाशः । एतत्सर्वं मनस्याकलय्यैव मीमांसकमूर्धन्याः तत्वप्रकाशिकाव्याख्यानभावदीपकाराः — 'अयजमानानामपीति = गृहपतिव्यतिरिक्तानामित्यर्थः, तेन ये यजमानाः ते ऋत्विज इति वाक्यविरोधो न' इति प्राहुः इति ॥

किंच —मीमांसकमर्यादाऽनभिज्ञोऽयमेव दीक्षितः । तथाहि — अत्राधिकरणे मतद्वयं 'सत्रे गृहपति' रित्यारभ्य 'वचनपर' मित्यन्तं सप्तसूत्र्यात्मकमेकमधिकरणम् । आद्या चतुस्सूत्री एकमधिकरणम्, परा त्रिसूत्री अधिकरणान्तरमिति न्यायमालाशास्त्रदीपिकादौ । गृहपतिभिन्नानामपि फलित्वात्तत्प्रयोजकाऽञ्जनाभ्यञ्जनसंस्कारविधायकमाद्यं, फलस्यान्येन सिद्धौ तदनुवादेन संस्कारमात्रविधिपरम् । फलस्यान्येनाऽसिद्धौ फलतत्प्रयोजकसंस्कारोभयविधिपरम् । उत्तराधिकरणन्तु—सर्वेषां फलित्वे आर्त्विज्यं केन कार्यमिति विशये गृहपतिभिन्नानामार्त्विज्ये विनियोगपरमिति अधिकरणद्वयवादिनामाशयः । सप्तसूत्री एकमधिकरणमिति पक्षे तु — आद्यं सूत्र-

चतुष्टयं गृहपतिभिन्नानामपि फलित्वमञ्जनादिभिः संस्कार्यत्वं च बोधयति । तर्हि फलस्वामित्वे आर्त्विज्यं कुर्वाणाः के इति शङ्कायां फलस्वामित्वेपि आर्त्विज्यमपि तेषामेव बोधयति उत्तरसूत्रत्रयमिति विवेकः । जैमिनीयसूत्राभिप्रायं सम्यगजानानोऽयमेव कौस्तुभकृत् व्यवहरति यथेच्छं, परान् दूषयतीति विजानन्तु विपश्चितः।

शाब्दिकमर्यादामपि उल्लङ्घ्य व्यवहरत्ययं दीक्षित इति ईक्षत्यधिकरणे निपुणं न्यरूरुपम् । शेखरादौ महाभाष्यकारादिकृतां व्यवस्थां दूरीकृत्य व्यवहरत्ययमिति नागेशादिभिः प्रपञ्चितमित्यलं स्वैरवृत्तेः स्वभावोद्घाटनेन ॥

इति स्वामिनःफलश्रुत्यधिकरणविचारः ॥

## अथ कृत्स्नभावात्तुगृहिणोपसंहाराधिकरणविचारः (८-अ०)

### कृत्स्नभावात्तु गृहिणोपसंहारः (३-४-४७)

(कौ०) गृहस्थाश्रमः सन्यासादुत्कृष्टः, छन्दोगोपनिषदि 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयान' इति गृहस्थाश्रममुपक्रम्य 'स खल्वेवं वर्तयन्यावदायुषं, ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते' इति तन्मोक्षमुक्त्वा उपसंहारात् । उपसंहारेण च तत्र तात्पर्यावगमादिति पूर्वपक्षः । सिद्धान्तस्तु—सन्यास एव गार्हस्थ्यादधिकः, तन्मोक्षस्य गृहस्थमोक्षादधिककालसाध्यत्वेन, तदतिशायित्वात् । गृहिणोपसंहारस्तु देवविषयः न मानुषविषयः । 'कृत्स्ना ह्येव गृहिणो देवाः कृत्स्ना ह्येते यतय' इति पौत्रायणश्रुतौ, 'देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनयः, एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्ती'ति कौण्ठरव्यश्रुतौ च, सर्ववर्णाश्रमाचारवत्तयोक्तानां देवानां गृहस्थानामपि सतां मनुष्यसंन्यासिभ्योऽधिकत्वादिति भाष्याधिकरणम् ।

अत्राऽऽश्रमचतुष्टयस्य वर्णचतुष्टयस्य च युगपदेकत्राभ्युपगमः श्रुतिन्यायादिविरुद्धः । पौत्रायणकौण्ठरव्यादिवचनानि तु त्वदेककल्पितानि, सर्वसंमतप्रत्यक्षश्रुतिविरुद्धानीति दिगित्युक्तम् —

(कु.) अत्र ब्रूमः — अत्राधिकरणे मानुषाश्रमिभ्यस्त्रिभ्यो मानुषयतेरतिशयसमर्थनं, तस्य अनन्यमानसतया भगवद्ध्यानसाधनत्वात् । नन्वेवं 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याऽहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः, स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा० ८-१५-१) इति छान्दोग्ये श्रुतौ सूत्रे च गृहिणोपसंहारदर्शनादिति सिद्धान्तकथनमयुक्तमिति चेत्, उच्यते—देवगृहमेधिनो मानुषयत्यपेक्षया स्वत उत्तमत्वान गुणाधिकत्वाच्च तथोपसंहारः कृत इति, देवानां च मानुषेभ्य उत्तमत्वं श्रुतिस्मृतिसिद्धम् । अतः देवेष्वपि अस्ति वर्णाश्रमभेद इति श्रुत्यादितो विज्ञायते । तथाहि — 'ब्रह्म वा इदमग्र आसीदेकमेव, तदेकं सन्नव्यभवत्, तच्छ्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणि, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति, (बृ० १-४-११) स नैव व्यभवत्, स विशमसृजत, यान्येतानि देवजातानि, गणश आख्यायन्ते, वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति (१२) स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणम्, इयं वै पूषा इयं हीदं सर्वं पुष्यति यदिदं किंच (१३) स नैव व्यभवत् श्रेयोरूपमत्यसृजत धर्मम् (१४) इति (श्रुत्या वर्णसद्भावः — )

'एकशतं हि वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच (छा० ८-११-३) 'मघवन्मर्त्यं वा इदं शरीरं' (छा० ८-१२-१) 'अश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजताम्, इन्द्रश्च सा सरस उत्थाय सरस्वतीमभिजगाम, बृहस्पतिश्चाश्वमेधमहाक्रतुमिन्द्रायाहरत्' (शां० १५१) इति,

सुतप्तं वस्तथा देवा ममाराधनकाम्यया ।
भोक्ष्यथाऽस्य महासत्त्वास्तपसः फलमुत्तमम् ॥ ५० ॥
एष ब्रह्मा लोकगुरुः सर्वलोकपितामहः ।
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ॥ ५१ ॥
सर्वे भागान् कल्पयध्वं यज्ञेषु मम नित्यशः ।
तत्र श्रेयोऽभिधास्यामि यथाऽधीकारमीश्वराः ॥ ५२ ॥

श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः ।
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ॥ ५३ ॥
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।
तस्मिन्सत्रे सदा ब्रह्मा स्वयं भागमकल्पयत् ॥ ५४ ॥
देवा देवर्षयश्चैव स्वं स्वं भागमकल्पयन् ॥ (भार. शां. ३४९)

इत्यादिश्रुतीतिहासादौ मघवतो ब्रह्मचर्याद्याश्रमधर्माचरणस्य प्रतिपादनात् (आश्रमसद्भावश्च ।)

ब्रह्मक्षत्रादिवर्णेषु पूर्वपूर्वस्य श्रैष्ठ्यं, ब्रह्मचर्याद्याश्रमेषु उत्तरोत्तरस्य, देवास्तु मनुष्येभ्यः गुणबाहुल्यात् वरिष्ठाः, आश्रमाश्च वर्णभेदेन व्यवस्थिताः ब्राह्मणेषु चत्वारः, क्षत्रियेषु त्रयो, द्वौ वैश्ये, एकः शूद्रे, यद्वा त्रिषु त्रय इति । अग्निस्तु ब्राह्मणजातिरित्यन्यत्र इति च ।

तत्र मानवीयाश्रमेषु मानवयतेः श्रेष्ठता मानवगार्हस्थ्यात्, मानवयत्यपेक्षया देवगृहिणां श्रेष्ठता गुणाधिक्यात्, स्वतो देवजातेरुत्तमत्वाच्च । न च—देवेषु वर्णादिभेद एव नेति वाच्यम्—पूर्वमुदाहृतश्रुत्यादिना तदुभयसद्भावस्य सिद्धत्वात् सर्ववैदिकैरङ्गीकार्यत्वात् ॥

किञ्च—आश्रमिणां श्रेष्ठत्वे न तत्तदाश्रमोक्तलिङ्गधारणमात्रं निमित्तम्, किन्तु आश्रमोचितसंपूर्णधर्मानुष्ठातृत्वं, तच्चाऽस्ति आदेहपातं देवेषु । सन्ति च अरागलोभादयः संपूर्णयतिधर्मास्तेषु । न चाश्रमद्वयधर्मसत्त्वे तुर्याश्रमेण कुतो नोपसंहारः कृत इति वाच्यम्—देवेष्वपि आश्रमसद्भावेन देवगृहमेधिषु सन्ति आश्रमद्वयधर्माः पुष्कलाः। अतस्ते मानवयत्यपेक्षया श्रेष्ठा इति वस्तुस्थितिबोधनाय देवगृहिणोपसंहारात् । न चैवं वर्णचतुष्टयस्याश्रमचतुष्टयस्य च युगपदेकत्राभ्युपगमोऽसंगतः श्रुत्यादिविरुद्धत्वादिति वाच्यम्। अस्मद्भाष्यकारादिभिः सर्ववर्णाश्रमधर्मान् देवा युगपदनुतिष्ठन्तीत्यनभिधानात् । अस्मदीयभाष्योदाहृतवचनानां सर्ववर्णाश्रमोचित धर्मानुष्ठानयोग्यताशालिनो देवा अनुतिष्ठन्ति धर्मान् यथासमयमिति तात्पर्यं, न तु तान्धर्मान् युगपदाचरन्तीति । न च 'कर्मकुर्वन्ती' ति श्रुतिवाक्यशेषेण कर्मकरणमेव प्रतीयते इति वाच्यम् — यथासमयं यथासंभवं यथारुचि कुर्वन्तीति तदर्थेन तदा-

चरणार्हतायामेव पर्यवसानात् । ततश्च सर्ववर्णाश्रमधर्मानुष्ठानयोग्यताऽस्ति देवानामित्येव गृहिणोपसंहारतात्पर्यमिति सिद्धम् ॥

एतेन—आश्रमचतुष्टयस्य वर्णचतुष्टयस्य चैकत्र युगपदभ्युपगमः श्रुतिन्यायविरुद्ध इत्युक्तिर्गलहस्तिता । श्रीमध्वभाष्यादौ तथा काप्यनभिधानात् । अथवा—किमु वक्तव्यमाजानसिद्धानां देवानाम् । अनेकरूपप्रतिपत्तिसंभावाच्च एकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति देवताधिकरणीय शांकरोक्तदिशा देवानां विचित्रशक्त्यानेकरूपैः युगपत् सर्ववर्णाश्रमधर्मानुष्ठानमपि संभवति । अनुक्तमसूचितं चाभ्युपगममुक्तं मत्वाऽनूद्य तद्दूषणमकारि दीक्षितेन । अत्राग्रहं श्रीमाध्वग्रन्थाऽर्थापरिज्ञानं चान्तरा नाऽन्यत्कारणं पश्यन्ति सूरयः ॥

इदं तु समालोचनीयं निर्मत्सरैर्विचारनिपुणैः—दैनंदिनेषु दन्तधावनादि शयनान्तकर्मसु । "अध्यापयन्त्यधीते च यजन्ते याजयन्ति च ।

दददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ॥ (भार.शां. ७७-११)

कर्म विप्रस्य यजनं दानमध्ययनं तपः ।

प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः ॥" (अत्रि. १-१३)

इत्यादिस्मृतिबोधितयजनादिषु षट्सु कर्मसु ज्योतिष्टोमादिषु श्रौतस्मार्तकर्मसु अनेकक्रियासमूहात्मकेषु सर्वासां क्रियाणां यौगपद्येनानुष्ठानमसंभवीति दीक्षणीयेष्ट्याद्यवभृथान्तव्यापाराणां क्रमः कल्पितो याज्ञिकैः । ततश्च सर्ववर्णाश्रमधर्मानुष्ठानयोग्यतैव यथासमयं सर्वधर्मानाचरन्ति देवा इति तत्त्वम् ॥

शाङ्करे तु–'बहुलायासानि बहून्याश्रमकर्माणि यज्ञादीनि, तं प्रति=(गृहिणं प्रति) कर्तव्यतयोपदिष्टानि, आश्रमान्तरकर्माणि च यथासंभवमहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते, तस्मात् गृहमेधिनोपसंहारो न विरुध्यते' इत्युक्तम् । अनेनाऽऽश्रमधर्माणां यौगपद्यसंभवो दर्शितः ॥

रामानुजीये तु—कृत्स्नभावात्=कृत्स्नेषु भावात्, कृत्स्नेष्वाश्रमेषु विद्यायाः सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः, तस्मात्सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्राय इति सूत्रार्थ उक्तः । अनेन यतेरेव ब्रह्मविद्याधिकार इति नियमो निरस्तः, आश्रमधर्माणां यौगपद्यं च दर्शितं भवति ॥

यच्चोक्तं—पौत्रायणादिवचनानि त्वदेककल्पितानीति—

इयं च श्रुत्वा गीतिरस्य दीक्षितस्य। एतादृशं वचनं तव नोचितं, यतः समाधातुमसामर्थ्यं द्योतयतीत्थं भाषणमिति प्रतिपदमवोचामाधस्तात्। किञ्च एतच्छ्रुतिबोधितप्रमेये उदाहृतवाजसनेयश्रुत्यादिसंवादसद्भावेन वचनमेतत् प्रमाणमेवेत्यवगन्तव्यम्। शाखान्तरसिद्धप्रमेये शाखान्तरीयश्रुतिसंवादोऽस्तीति निरूपणमात्रेण शाखान्तरवचनं कल्पितमिति न शक्यते वक्तुम्। तथा सति भाष्यकारादीनां स्वोक्तार्थे प्रमाणसंवादोऽस्तीति बोधनाय शाखान्तरादिवचनोदाहरणादिकमनुचितं स्यात्। ततश्चेत्थं भाषणमयुक्तमेव भवादृशानाम्।

एतेन—यच्चोक्तं 'सर्वसंमतप्रत्यक्षश्रुतिविरुद्धानी'ति तदपि निरस्तं, देवेषु वर्णाश्रमसद्भावस्य वाजसनेयश्रुत्यादिसिद्धत्वोपपादनात् प्रत्यक्षश्रुतिविरोधाभावात्। लोकत्रयसिद्धवेदस्यासत्त्ववादिनस्तवैव शोभते एवं प्रजल्पनम्॥

इति कृत्स्नभावाधिकरणविचारः।

---

## अथ अनाविष्काराधिकरणविचारः (९-अ.)

### अनाविष्कुर्वन्नन्वयात् (३-४-४९)

(कौ०) 'एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवती'ति स एतां मनुष्येषु विब्रूयात् यथायथा हवै ब्रूयात्तथातथाऽधिको भवतीति माठरश्रुतौ विद्यादानं श्रूयते। तच्च बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्यम्। अन्वयात्=युक्तेः, आविष्कारे अयोग्यानामपि स्वीकारप्राप्तिः तच्च निषिद्धम्। 'विद्या हवै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि। अनार्यकायाऽनृजवे शठाय न मां ब्रूया ऋजवे ब्रूहि नित्य'मिति श्रुतेः॥

### ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् (३-४-५०.)

(कौ०) 'आत्मा वा अरे द्रष्टव्य' (बृ. ४-५-६) इत्यादिना दर्शनार्थं श्रवणादि विधीयते। तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे 'श्रुत्वाऽऽत्मानं मतिपूर्वं त्वुपास्येहैव दृष्टिं परमस्य विन्देत्। यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्ये'ति सौपर्णश्रुतौ दर्शनात्।

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । (३-४-५१)**

(कौ०) एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः । तद्भावे जन्मान्तराणीति नियमः । 'धर्मी स्वर्गं विधर्मी निरयमेत्येव, ब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थोऽमृत' मिति ब्रह्मसंस्थस्य मोक्षस्यैवाऽवधारणात् ॥

विद्वानमृतमाप्नोति नात्र कार्या विचारणा ।
अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ।
न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः ॥ इति

नारायणाध्यात्म इति माध्वाः । अनाविष्कुर्वन्नन्वयादित्यारभ्य यदुक्तं तन्नातीवाऽस्माकं विरुद्धम् । सामान्यखण्डनैर्गतार्थं चेति दिक् इति —

(कु०) यदुक्तमत्र दीक्षितेन 'नातीवाऽस्मकं विरुद्धमि' ति तदत्यन्तं मन्दम् । अविरोधे तत्खण्डनाऽयोगात् 'सामान्यखंडनैर्गतार्थ' मिति कथनस्यायुक्तत्वात् ॥

किञ्च — अयोग्यानामपि ज्ञानप्राप्तिप्रसंगादित्युक्त्या आत्मनां भेदः, साधुजनोपदेशादिसद्व्यापारानुष्ठानस्य अयोग्यानां ज्ञानोदयानुकूलव्यापारानुष्ठानस्य पुण्यपापसाधनत्वं तत्प्रयोज्यस्वर्गनरकप्राप्तिलक्षणं फलं प्रामाणिकं, तद्बोधक 'विद्या हवै ब्राह्मणमाजगाम, न शूद्राय मतिं दद्या' दित्यादि श्रुतिस्मृत्यादीनां प्रामाण्यम् । श्रीमन्नारायणस्य परदेवतात्वं, जीवब्रह्मणोर्भेदः, श्रुत्यादिप्रमाणसिद्धब्रह्मतद्गतजगत्कर्तृत्वादिधर्मजातस्य वास्तवत्वं चेति श्रीमध्वाचार्यादिसंमतमतस्थितिरिति ।

भवदीयमते तु—श्रुत्यादिकं प्रमाणमेव नास्ति, तद्बोधितं यावत्प्रमेयजातमवास्तवं अंतःपरदेवतापि काचन नास्ति 'यतो वा' इत्यादिबोधितजगत्कारणत्वादिकं ब्रह्मणि नास्ति तस्य निर्गुणत्वात् । श्रुतिसिद्धं ब्रह्म निर्गुणं, कल्पितं तु शबलं ब्रह्म मायावच्छिन्नं कारणत्वादिविशिष्टं, आत्मनां च न भेद इत्यादिप्रमेयाणीति च प्रबन्धविमर्शिभिरवसीयते । अतः तव मतस्य सर्वथा श्रीमध्वाचार्यसिद्धान्तविरुद्धत्वात् कथं 'नातीवास्मकं विरुद्ध' मिति भाषणं सङ्गच्छेत । तस्माद्दीक्षितीयं सर्वं शब्दजालं पृथक्जनमोहकमेव ॥

यच्चोक्तं सामान्यखंडनैरिति — तान्यपि खण्डितान्येवास्माभिस्तत्र तत्र ॥

इति तृतीयस्य तुर्यः पादः — **तृतीयोऽध्यायश्च** ॥

## अथ चतुर्थोऽध्यायः ।

(कौ०) इत्थं मध्वाभिमतेषु समन्वयाऽविरोधसाधनेषु खण्डितेषु फलनिरूपणार्थश्चतुर्थाध्यायो निरालम्बनत्वादेव परास्त इति —

(कु०) इदमसङ्गतमिति स्मृत्यधिकरणविचारे (१३५-पु०) दीक्षितोक्तनिरालंबनत्वादिदूषणानामस्माभिः निर्मूलितत्वेन अस्मदाचार्योक्तस्य मार्गस्य निष्कण्टकत्वेन साफल्यमस्याध्यायस्येति जानन्तु ॥

### अथ आवृत्त्यधिकरणविचारः (१)

**आवृत्त्यसकृदुपदेशात् (४-१-१)**

(कौ०) अधिकरणार्थमनूद्य अविरुद्धमेतदित्युक्तम् —

(कु०) एतद्विरोधाऽविरोधौ न किञ्चित्कराविति इदमसङ्गतमिति बोध्यम् । नायं सर्वसमाश्रयणीयमतप्रवर्तको लोके । नाप्ययं निष्पक्षपाती पण्डितः 'तुष्टेन रुष्टेन कि'मिति न्यायेन न कस्याप्ययं माननीयो नापि विश्वसनीयः ॥

### अथ आत्माधिकरणविचारः (२)

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च (४-१-३)**

(कौ०) विष्णुरिति ध्यानेन विना मोक्षो नेति तन्मतम् । तन्न - आत्मशब्दस्य जीवसाधारणताया वेदान्तानामखण्डार्थताया श्चोक्तत्वादित्युक्तम् —

(कु०) आत्मशब्दस्य नानार्थकत्वेपि प्रकरणादिना परमात्मपरत्वस्यैव वक्तव्यत्वात् । साधारणतेत्युक्तिरयुक्ता, अत्र तु "आत्मानमेवाहं विजानीयामात्मानमुपासे आत्मा हि ममैष भवति, आत्मेत्येवोपास्व, आत्मेत्येव विजानीहि, नान्यं किंचन विजानथ आत्मा ह्येवैष भवती" ति, ज्ञानोपासना, तदुपदेशवाक्ये च जीवग्रहणे उपासनादिविधिरनुपपन्नस्स्यादिति न जीवग्रहणं, तस्योपास्यत्वायोगात् । अतः परमात्मग्रहणमेष्टव्यम् । कारणवाक्ये उपासनाविधिवाक्ये च उपास्यबोधकात्मादिपदानि विष्णुपराण्येव नान्यपराणीति अस्मत्सिद्धान्तात् । भवन्मतीयप्रक्रियाश्रयणेन अस्मन्मतदूषणायोगात् । प्रकृतसूत्रयोजनादौ आवयोर्महदस्ति वैषम्यम् । तच्च दुष्परिहरमाकल्पान्तम् ॥

तस्मात्स धरण्योक्तिरयुक्ता ॥

' वेदान्तानामखण्डपरतायाश्चोक्तत्वा ' दिति हेत्वन्तराभिधानमप्यसङ्गतम् —

जिज्ञासाधिकरणे शाङ्करभाष्ये ब्रह्मशब्दस्य निर्वचनेन नित्यबुद्धत्वादिलाभ इत्युक्तेः, " आत्मा वा इदमेक एवाग्रे आसीदि " ति ( १-१-१ ) ऐतरेयवाक्य व्याख्यावसरे शाङ्करे — ' आत्मा = आप्नोतेः, अत्तेः, अततेर्वा परः सर्वज्ञः सर्वशक्तिः ' इत्युक्तेः, " उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम्, आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते । ' स आत्मा तत्त्व ' मिति श्रुतेः । अमृतत्वाऽभयत्वे च तस्मिन्नसकृच्छ्रूयते " ( १-२-१३ ) इति त्वदीयभाष्यकारोक्तेश्च, महाभारते — ' यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिति । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ' इत्यात्मशब्दस्य निरुक्तत्वेन ब्रह्मणोऽनेकगुणवत्त्वलाभेन ब्रह्मणोऽखण्डत्वाभावात् । किंचाऽखण्डत्वं आत्मशब्देन ' न विष्णुपरिग्रह ' इत्यत्र कथं हेतुभावं भजेत ।

एतेन पामरजनव्यामोहकशब्दजालविलेखनेनैव पूरयत्ययं ग्रन्थमिति सुधीभिराकलनीयम् ॥ इत्यात्माधिकरणविचारः ।



## अथ नप्रतीकाधिकरणविचारः (अ० ३)

### न प्रतीके न हि सः (४-१-४)

(कौ०) अत्रेदं वक्तव्यं - ' सर्वार्था प्रथमा यस्मा' दित्यसङ्गतम् । प्रातिपदिकार्थमात्रे प्रथमेत्युक्तत्वात्, कात्यायनेन च अभिहिते प्रथमे युक्तत्वात् । नामार्थयोश्चाभेदसंसर्गस्य व्युत्पत्तिसिद्धत्वात् । अत एव च त्वयाऽपि ' तत्त्वमसी ' ति वाक्यं भङ्क्त्वा व्याचक्षाणेन तच्छब्दस्य तन्नियम्ये लक्षणा स्वीकृता । अथ छन्दसि व्यत्ययानुशासनमभिप्रेत्य सप्तम्यर्थे प्रथमेति ब्रूषे, तर्हि व्यत्ययानुशासनस्य नायं विषयः । व्यत्ययं विना निर्वाहे सति तदुपन्यासानर्हत्वात् । आरोपितेनापि स्वरूपेणोपासनोपपत्तेः । ' यत्तु - तस्मादतत्त्वं नोपास्यमिति वेदविदां मत ' मित्यनुव्याख्यानं तत् प्रागुक्तरीत्या भूमत्वोपासने व्यभिचारीति ॥

(कु०) अत्रेदमुच्यते — श्रोतॄणां तावत् भ्रमहेतुरिदं शब्दजालम् । निस्सारोऽयमुपन्यासः — तथाहि - अत्राभेदवादिनो भेदवादिनश्च वादिप्रतिवादिभावमापन्नाः । तत्राभेदवादिनस्तावत् तत् त्वमिति समानविभक्तिश्रवणात् नीलो घट इत्यादाविव अभेदसंसर्गेण तदभिन्नोऽसि त्वमिति वाक्यार्थं वर्णयन्ति ।

भेदवादिनस्तु — समानविभक्तिश्रवणेऽपि सिंहो माणवकः, आदित्यो यूप इत्यत्र सिंहसदृशो माणवक आदित्यसदृशो यूप इतिवत् तत्सदृशोऽसि त्वमिति वाक्यार्थं वदन्ति । एवं वाद्यभिमतं सामानाधिकरण्यमभ्युपेत्य वाक्यमिदं भेदपरमेव भवतीत्युक्त्वा, सामानाधिकरण्यमेव नेति दर्शयन् वाक्यं भेदपरमेवेत्याहुराचार्याः ।

तत्र प्रमाणं—

नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते ।
सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता ॥ इति ।

वचनार्थः स्पष्टः । प्रकृते तच्छब्दाद्विहितसप्तम्याः 'सुपां सुलु' गिति सूत्रेण सुर्भवति । छान्दसत्वात् त्यदाद्यत्वं 'तदोः सः सा' विति सत्वं च न भवति । हल्ङ्यादिलोपश्च भवति । एवंच तदिति अधिकरणसप्तम्यन्तं, तदाधारकोऽसि त्वमिति वाक्यार्थः । 'सुपां सुलु' गिति विहितः सुः प्रथमैकवचनसुरेव । अत एव 'ऋजवः सन्तु पन्था' इत्यत्र जसःस्थाने सावादेशे, तस्मिन् परे पथिमथोति आत्वं सर्वनामस्थानकार्याणि च भवन्ति । (प्रकारान्तरेण 'तत्त्वमसी' त्यस्य भेदपरत्वेन व्याख्यानमन्यत्रोक्तम् ।)

एतेन — 'प्रातिपदिकार्थमात्रे प्रथमे'त्यादि व्यत्ययेन विनापि निर्वाहे सति तदुपन्यासानर्हत्वा' दित्यन्तं प्रतिक्षिप्तम् । अधिकरणे प्रथमा, अभिहिते च तस्मिन् प्रथमेति, नाऽऽचार्यादिषुः । किन्तु अधिकरणसप्तम्याः 'सुपा'मिति सूत्रेण सुरादेशः, तस्य स्थाने जातत्वादधिकरणार्थकतां तस्येत्यब्रुवन् । यथा 'सन्तु पन्था' इत्यत्र जसःस्थाने जातस्य सोर्बहुत्वार्थकत्वं, यथा वा परस्मैपदस्थाने जातस्य णलः परोक्षत्वाद्यर्थकत्वम् । व्यत्ययेन प्रथमेत्यपि नाऽवोचन् । अतो 'व्यत्ययेन विनापि निर्वाह' इत्यपि ग्रन्थाशयानभिज्ञानमूलकम् ॥

यदुक्तं आरोपितरूपे गोपासनोपपत्तेरिति—

इदमतितुच्छं लोकगर्हितं च। राज्ञि भृत्यत्वाद्यारोपेण जनन्यां आरोपित-जायात्वरूपे गोपासने महतोऽनर्थस्य प्रत्यवायस्य च संभवात् ॥

यच्चोक्तं – यत्तु तस्मादतत्त्वं नोपास्यमित्यनूद्य उक्तरीत्या भूमत्वोपासने व्यभिचारीति दूषणम्—

तदप्यसंगतम्। अतत्वोपासनमित्यस्य अविद्यमानधर्मोपासनमित्यर्थः। भूमोपासनं तु नाविद्यमानोपासनम्। भूम्न्येव विद्यमानभूमत्वोपासनाविधानात्। स्फुटीकृतं चैतत्तत्रैवाधिकरणे, अतो न व्यभिचारः ॥

इति नप्रतीकाधिकरणविचारः



## अथ ब्रह्मदृष्ट्यधिकरणविचारः (अ० ४)

### ब्रह्मदृष्टिरुत्कर्षात् (४-१-५)

(कौ०) आदित्यादिमतयश्चाङ्ग उपपत्तेः (४-१-६) आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता....तदाश्रिताश्च ते नित्यं, ततश्चिन्त्यं विशेषतः' इति माध्वाः। अत्रेदं वक्तव्यम् — तदाश्रिताश्च ते नित्यमिति वदता देवानां स्वोत्पत्त्यङ्गे प्रवेशो दुरुपपादः। नहि रूपरसादयो घटं प्रविशन्तीति सुवचम्। एवं च–तेषां तत्र प्रवेशो हि मुक्तिरिति त्वदुक्तमपि निरालंबनमेव। किंच–भगवदवयवानां व्यापकत्वात् जीवानां चाऽणुत्वात् त्वदभिमतनित्यतमोयोग्या अपि सदा तत्र प्रविष्टा एवेति नित्यं मुक्ता एव स्युः। किंच–प्रवेशः क्रियाविशेषः, स च जीवस्वरूपेण सहात्यन्ताऽभिन्न इति त्वद्रीत्या सर्वेषां नित्यमुक्तता दुर्वारैवेति दिगिति—

(कु०) अत्रोच्यते – नात्र प्रवेशो गेहं प्रविशतीत्यादाविवान्तः प्रवेशः। किंतु संबन्धमात्रम्। स च आश्रयत्वरूप एव। अङ्गदेवतास्तत्तदङ्गं प्राप्नुवन्ति (आश्रयन्तीत्येवार्थः)। 'भेजे खगेन्द्रध्वजपादमूल' मिति भगवच्चरणप्राप्तेरेव

मुक्तित्वोक्तेः। ततश्चोक्तं दुरुपपादत्वं, निरालंबनत्वं च, पराहतं वेदितव्यम्। आश्रितत्वप्रवेशपदार्थयोरत्राऽविशेषात्। एतेन — रूपरसादिदृष्टान्तोऽपि निरस्तो बोध्यः, तेषां द्रव्यविशेषवृत्तिगुणत्वेन घटे प्रवेशायोगात्तद्दृष्टान्तोक्तिरसंगता ॥

नित्यतमोयोग्या अपि अणवः व्यापकभगवदङ्गेषु सदा प्रविष्टा इति नित्यमुक्ता भवेयुरित्यापादनं न युक्तम्। यतः शास्त्रार्थतत्वविदां न हृद्यतामावहति तावकं वचनम्। अनभिज्ञा एव हि शास्त्रार्थस्यैवं प्रजल्पेयुः। शास्त्रे हि शमदमभक्तिशास्त्राभ्यासादिना भगवति सर्वोत्तमत्वज्ञानवतां जगत्कर्तृत्वादिगुणवत्त्वेन भगवन्तमुपास्य संपादितभगवदनुग्रहवतां भगवत्पादतदङ्गभाजां जीवानां मुक्तत्वव्यवहारः, तेषामेव आनन्दानुभवश्चेति निर्णीतम्। यथा श्रवणदर्शनादिना संजातपरस्परानुरागयोः देशकालविशेषे जातपरस्पराङ्गसङ्गादिना जायमानवाङ्मनसाऽगोचरस्सुखविशेष एव आनन्दविशेष इति लोके।

यथा — चिकित्सकानां नारीशरीरसंबन्धेन, देवयात्रादौ एकशकटमारुह्य ग्रामान्तरगमनकाले आकस्मिकगात्रैक्यसङ्गेऽपि स्त्रीपुंसयोर्न सुखविशेष उत्पद्यते नानुभूयते चानन्दोऽन्यतरस्यक्तया; तथा — 'न तदस्ति विना यत्स्यान्मया भूतं चराऽचरम्' (गी० १०-३९) इत्यादि। चराचरभूतसामान्यस्य भगवत्संबन्धे नित्यं सत्यपि, तस्य संबन्धस्य शास्त्रजन्यज्ञानपूर्वकत्वाभावेन मुक्तिरिति न व्यवहारः, उक्तनित्यसंबन्धेन सुखविशेषश्च नोत्पद्यते।

एवं भवदुक्तरीत्या तमोयोग्यजीवानां नित्यं भगवत्संबन्धेऽपि मुक्तत्वं न भवत्येव ॥

किंच — प्रवेशस्य क्रियात्वेनेत्यादि —

तदतीव तुच्छम्। क्रियारूपप्रवेशस्य यावद्द्रव्यभावित्वाभावेन उक्तदोषानवकाशात्।

किञ्च देवानामेव भगवति प्रवेशो मुक्तिरित्युच्यते, ते च न नित्यसंसारिणः। ये च नित्यसंसारिणो मध्यमा मनुष्याः, न तेषां भगवति प्रवेशो मुक्तिरित्यभिहितम्। अतो भवदुक्तमसङ्गतमेव ॥ इति ब्रह्मदृष्ट्यधिकरणविचारः।

## अथ आसीनाधिकरणविचारः (६)

### आसीनः संभवात् (४-१-७)

(कौ०) आसीनत्व - अचलत्व - एकाग्रत्वादि सर्वसंमतम् । इति—

(कु०) नात्र वक्तव्यमस्ति ॥

---

## अथ आप्रायणाधिकरणविचारः (७)

### आप्रायणात्तत्रापि हि दृष्टम् (४-१-१२)

(कौ०) स्वत एव ततः परमिति माध्वाः । अत्रेदं वक्तव्यम्—'स्वत एव ततः पर' मिति ब्रह्माण्डत्वाभिमतश्लोकशेषेण मोक्षकालेऽपि भक्तिरिति यदवादीः । तत्तुच्छम् — मुक्तौ भक्तिरुच्यमाना तत्स्वरूपात्मिकैवेति त्वदभिमतं त्वत्प्रक्रियानुकूलं च । तच्च व्याहतं संसारिसाधारण्यात् । पुत्रादिस्नेहव्यावृत्त्यर्थं हि माहात्म्यज्ञान-पूर्वकत्वेन विशिष्टं स्नेहं भक्तित्वेन निरवोचः । अनादेस्तु कथं माहात्म्यज्ञानपूर्व-कता स्यात् । सौपर्णश्रुतिर्ब्रह्माण्डवाक्यं च यदि प्रामाणिकं तर्हि ब्रह्मलोकावाप्तिरूप-गौणमुक्तिपरमिति दिक् इति —

(कु०) अत्रेदं प्रतिविधानम् — इत्थमभिहितमनेन बहुकृत्वः । खण्डित-मस्माभिस्तत्र तत्र । तथापि किंचिदस्ति वक्तव्यमिति ब्रूमः । मोक्षकालेऽपि भक्तिरिति भाषणं तुच्छमिति यत्तव वचः तदेव तुच्छम् । तुच्छस्वभावस्य शास्त्रसिद्धभगवद्गुण-राशेस्तुच्छत्वं वदतस्तवैव शोभेत । न तु सत्स्वभावस्य भगवद्भक्तस्य शब्दप्रमाण-कस्य । 'स्वतएव ततःपर'मिति वचनशेषेण मुक्तास्सन्तः फलाभिसन्धानपूर्वं न भक्तिं कुर्वन्ति, किंतु इच्छयेति ज्ञायते । किंच—'सामगायन्नास्ते, इति श्रुतिर्भगवन्तं साम्ना स्तौति मुक्त इत्याह । स्मृतिरपि —

'कृष्णो यज्ञैरिज्यते यायजूकैः कृष्णो वीर्यैरिज्यते विक्रमद्भिः ।
कृष्णो वन्यै (वाक्यै)रिज्यते संमृशानैः कृष्णो मुक्तैरिज्यते वीतमोहैः' ॥

(भार. अनु. १८-६.) इति ।

स्तवनपूजनयोः भक्तिकार्यत्वमुक्तं भागवते —

'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥' (७-५-२३.) इति।

श्रवणादीनि नव भक्तिकार्याणि कारणभूतभक्तिं ज्ञापयन्ति । न त्वेतानि भक्तिरूपाणि इति व्याख्यातारः । यथा वह्निकार्यो धूमो वह्निज्ञापक इति दृष्टान्तोऽत्र बोध्यः ।

किंच – संसारदशायामुत्पन्नज्ञानभक्तिवैराग्यादीनां मुक्तिदशायां विनाशानुक्तेः 'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन्' (गी० ६-४४) इत्युक्तन्यायेन पूर्वाभ्यासपाटवशात् "कृष्णो मुक्तैरिज्यते वीतमोहै" रिति महाभारताख्यपञ्चमवेदगतवचनेन मुक्तकर्तृकभगवद्यजनोक्तेश्च मुक्तौ भक्तिरस्तीति शास्त्रसंमतं नासङ्गतं च । वीतमोहैः मुक्तैरित्यर्थः ॥

यच्चोक्तं अनादेस्तु भक्तेर्माहात्म्यज्ञानपूर्वकत्वोक्तिर्व्याहतेति —

इदमप्यसङ्गतम् —भक्तिस्तावत् रसस्थायिभावरत्यादिवत् सूक्ष्मभावेन वर्तते । ततश्चाऽनादिरिति भावः यथा विभावादिसमवधानवशात् दिने दिनेऽभिवर्धमानः रसभावमापद्यते । तथा सूक्ष्मतया विद्यमाना माहात्म्यज्ञानमननादिसंबन्धवशेन अभिवर्धमाना तत्कार्यानुमेया परिपक्वा मोक्षसाधनप्रसादस्य फलप्रदानोन्मुखीकरणसमर्था । सापि मुक्तावपि विद्यत इति मुक्तकर्तृकभगवदर्चनवन्दनादिनाऽनुमिमते शास्त्रप्रामाण्यवादिनः ।

यथा धातुश्रेष्ठं सुवर्णं स्वतः कमनीयमुपादेयमपि, मणिश्रेष्ठं च पद्मरागवैडूर्यादिकं स्वत एव तथाविधमपि परस्परं संबद्धं सदतिशोभामावहत् कमनीयतममुपादेयतमं भवति, तथाऽनादिरपि भक्तिर्नित्यसिद्धभगवन्माहात्म्यज्ञानसंबन्धा भगवत्प्रीतिविषयतातिशयाधायकगुणवती भवति । एवं च – नाऽनादित्वभङ्गो भक्तेः ॥

यदुक्तं – सौपर्णश्रुत्याद्युक्तमित्यादि —

एतेन इदमप्रमाणमिति भवदभिप्रायः स्फोरितः । समस्तश्रुतिस्मृतीतिहासादेरप्रामाण्यं वदन् कथं भगवद्भागवतमाहात्म्यप्रतिपादकश्रुत्यादेः प्रामाण्यं भवानङ्गीकुर्यात् । प्रमाणानां प्रामाण्यानभ्युपगम एव तव भूषणं, गत्यन्तराभावात् ॥

यच्चोक्तं ब्रह्मलोकावाप्तिरूपगौणमुक्तिपरमिति —

इदं सर्वथाऽसङ्गतम्—शास्त्रे गौणमुक्तिः मुख्यमुक्तिरिति विभागादर्शनात्। भवदभिमतप्रक्रियानिर्वाहाय परमङ्गीकृतोऽयं विभागो भवता। अर्चिरादिमार्गत्वत् मार्गत्वेन कथितो ब्रह्मलोकः। अत एव अर्चिरादिलोकवत्तत्रापि कंचित्कालमुषित्वा तेन सह परमात्मानमाप्नोति ज्ञानीत्याह —

'स्मृतेश्चे' (४-१-११) ति सूत्रं, ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते परात्मानः प्रविशन्ति परं पद' मिति स्मृतिश्च। शाश्वतस्थानप्राप्तिर्हि मोक्षः। चतुर्मुखब्रह्मलोकस्तु न शाश्वतः। उक्तं हि भगवता —

'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः' ॥ (गी.८-१५.)

आब्रह्मभु(भ)वनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥' (गी. ८-१६.) इति।

तस्माद्गौणमुक्तेरभावेन तद्विषयत्वकल्पनायोगात्, कौस्तुभोक्तं सर्वमसमञ्जसमित्याकलनीयं सूरिभिः ॥ इत्याप्रायणाधिकरणविचारः

---

## तदधिगमाधिकरणविचारः (अ० ८.)

### तदधिगम उत्तरपूर्वयोरश्लेषविनाशौ तद्व्यपदेशात् (४-१-१३)

(कौ०) तमो वेत्यंशो नित्यनरकनिराकरणेनैव निराकृत इति —

(कु०) 'तमिस्रश्चाऽन्धतामिस्रौ द्वौ नित्यौ संप्रकीर्तितौ।' इति तृतीयाद्यपादे 'अपि सप्ते' (१६) ति सूत्रभाष्योदाहृत स्मृतिप्रसिद्धं नित्यनरकं कथं निराकर्तुं शक्नोति भवान्मेधावी ॥

किंच—यत्र मानवसुखलेशरहिते पतिताः पुनरुत्थितिरहिताः जननमरणाभ्यां परिवर्तमानाः क्लेशमेवानुभवन्तो वर्तन्ते इति 'अनेकचित्तविभ्रान्ताः (गी. १६-१६) ततो यान्त्यधमां गतिम्' (१६-२०) इत्यन्तश्लोकपञ्चकव्याख्याने भवदीयैराचार्यैरुक्तम्।

'न तृतीये तथोपलब्धे' (३-१-१८) रिति सूत्रभाष्ये शङ्कराचार्यैर्जननमात्रेण यामीर्यातना अनुभवन्त्येतत्तृतीयं स्थानं', 'जायस्व म्रियस्वे' (छा. ५-१०-८) ति श्रुतिसिद्धे तृतीये स्थान 'इत्युक्तं च। एतदेव नित्यनरकमिति शक्यं वक्तुं, पुनरुत्थितेरभावकथनात्तत्रत्यानाम्। कथं भवान् तादृशं स्थानं निराकर्तुं पारयति॥

(कौ०) यदप्युक्तं—ज्ञानिकृतं कर्म महत्तरमनन्तं च भवति 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०) अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान्। महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत्' इति भारत इति ज्ञानिकर्मणो वीर्यवत्तरत्वमिति — न तद्युक्तम् — यदेव विद्ययेत्येतत् न ज्ञानिपरं, किन्तु देहातिरिक्तात्मविषयकपरोक्षज्ञानिपरम्। अवेक्षणेनाऽऽत्मस्येवोपनिषज्जन्यदेहातिरेकज्ञानेन जीवसंस्काराभ्युपगमात्। संस्कृतस्य च कर्माङ्गत्वात् तत्त्वज्ञानं तु स्वतन्त्रफलसाधनं न त्वङ्गं, तदुक्तं व्याकरणाधिकरणे भट्टपादैः — "सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते। पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्" मिति —

(कु०) इदं तु तुच्छम्—मीमांसककृतश्रुत्यर्थस्य व्यवस्थायाश्च ब्रह्ममीमांसाविचारपरैरादरणीयत्वनियमाभावस्य सहेतुकं पूर्वमेवोक्तत्वात्। व्याख्यातं हि 'विद्यये' ति ब्रह्मज्ञानिपरत्वेन शाङ्करे, तज्ज्ञानं परोक्षं वाऽपरोक्षं वेति विचारोऽन्यः। एतेन—'अद्वैतमत' इत्याद्युत्तरो ग्रन्थोऽपि निरस्तः। उपनिषद्भाष्ये शाङ्करे उद्गीथाख्याक्षरविज्ञानं(कर्माङ्गोंकारविज्ञानं)ओंकारः कर्माङ्गभूतस्तत्र मतिं कुर्यात्, स च परमात्मप्रतीकभूतः, तदपचितिः परमात्मापचितिरेव ओमित्युच्चार्य कृतं कर्मैव समाप्तिमत् अधिकफलवच्च भवतीति निरूप्य, 'विद्यये' त्यस्य विज्ञानेनेत्यर्थोक्त्या च, ब्रह्मज्ञानेनेत्यर्थ एव न्याय्यः न तु देहातिरेकात्मज्ञानेनेति। 'उपनिषदे' त्यस्य योगेनेत्यर्थ उक्तः, स चात्रोपासनं, ततश्च परमात्मविज्ञानोपासनयुक्तेन कृतं कर्म वीर्यवत्तरमधिकफलमिति चोक्तम्।

ज्ञानिकर्म अधिकफलं, अविद्वत्कर्म तु न्यूनफलम्। 'निष्फलं' इति श्रीमध्वाचार्योदाहृतवचनस्यापि अयमेवाभिप्रायः। अयमर्थः 'अहं हि सर्वयज्ञानाम्, यान्ति देवव्रता देवा' निति श्लोकाभ्यामभिहितो नवमे गीताचार्यैः। निरूपितश्चास्माभिरधस्तात्॥

एतेन—'तरपो दौर्लभ्यं स्वार्थे तर'मित्यादि प्रत्याख्यातम्। स विचारः परकृतो ह्यत्र लिखितः; न स्वाभिमतार्थसाधकः। सर्वैर्ब्रह्मवादिभिर्मध्वाचार्यप्रभृतिभिः 'विद्यासंयुक्तं कर्म विद्याविहीनात्कर्मणो विशिष्टं, विद्वानिव ब्राह्मणो विद्याविहीनात्। वीर्यवत्तरं = महाफलं, विशिष्टफल'मिति वदद्भिरातिशायनिकतरबेव अभिप्रेयते। श्रीमध्वाचार्यैरेवाऽऽतिशायनिकार्थकत्वमङ्गीकृतमिति भ्रान्तो युक्ताऽयुक्तविवेकविकलो मार्जारक्षीरपानन्यायेनाऽहंतामात्रेणाऽन्यदीयं ग्रन्थमलिखत् स्वसाधकत्वबुद्ध्या। वस्तुतस्तु नायं विचारो महाभाष्योक्त इति वदता नागेशेन – 'तरप्तमपौ घ' इति सूत्रीयकैयटादिकं तु भाष्यानुक्तेः चिन्त्यमेव। यतोऽतिशायने संभवति कुतः स्वार्थे तरप् वक्तव्यः, 'अल्पाच्तर'मित्यत्रापि अतिशायनमेव विवक्षितमिति महाभाष्य' इति विवृतं शेखरे तत्सूत्रे। ततश्च – 'यदेव विद्यया करोती'ति ब्रह्मज्ञानिपरमित्येव न्याय्यम्। कर्म ब्रह्मज्ञानाङ्गमिति 'वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे। नैष्कर्म्यां लभते सिद्धिं रोचनार्थां फलश्रुतिः'॥ (भाग. ११-४-४६) इति श्लोकव्याख्याने श्रीधरीये व्यवस्थापितम्।

एतेन 'अद्वैतमते तु – उपनिषदा विद्ययेत्यनेनाऽङ्गावबद्धोपासनोच्यते, मतद्वयेपि न तत्वज्ञानम्, युक्तं चैतत् 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारते'-त्यादिवचनस्वारस्यात्। अन्यथा—कृतकृत्यत्वमौपचारिकं स्यादिति दिगिति कौस्तुभे वक्ष्यमाणं परास्तम्। 'विद्यया=विज्ञानेन, उपनिषदा=योगेने'त्यर्थकथनात् शाङ्करे॥

यदत्र 'मतद्वयेपि न तत्वज्ञानमित्युक्त्वा 'एतद्बुध्वे'ति वचनमुपन्यस्यता शङ्करमतेऽपि 'यदेव विद्यये'ति श्रुतिगतं विद्ययेतिपदं, गीतापीति द्वयं न तत्वज्ञानपरमित्युक्तं भवति, इति कौस्तुभोक्तम्—

इदमयुक्तं 'भगवत्तत्वे विदिते कर्तव्यं कृतं भवे'दिति शाङ्करगीताभाष्योक्त्या, कर्माङ्गत्वेन तत्फलत्वेन च ब्रह्मज्ञानमेव संपादनीयमित्यद्वैतमतप्रमेयसिद्ध्या, तथैव श्रीधरादिभिर्व्याख्याततत्वेन च गीतोपनिषदोर्ब्रह्मज्ञानपरत्वस्यैव युक्तत्वात्। इतरज्ञानोपासनाभ्यां कृतकृत्यत्ववर्णनस्याऽयोगात्। ब्रह्मज्ञानातिरिक्तज्ञानपरत्व एव कृतकृत्यत्वस्योपचरितत्वं, न तु ब्रह्मज्ञानपरत्वे इति वेदितव्यम्। तस्मात्तरप आतिशायनिकार्थत्वे न पाणिनीयानुशासनव्याकोप इति सिद्धम्॥

'न तृतीये तथोपलब्धे' (३-१-१८) रिति सूत्रभाष्ये शङ्कराचार्यैर्जननमात्रेण यामीर्यातना अनुभवन्त्येतत्तृतीयं स्थानं', 'जायस्व म्रियस्वे' (छा. ५-१०-८) ति श्रुतिसिद्धे तृतीये स्थान 'इत्युक्तं न। एतदेव नित्यनरकमिति शक्यं वक्तुं, पुनरुत्थितेरभावकथनात्तत्रत्यानाम्। कथं भवान् तादृशं स्थानं निराकर्तुं पारयति ॥

(कौ०) यदप्युक्तं—ज्ञानिकृतं कर्म महत्तरमनन्तं च भवति 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०) अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान्। महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत्' इति भारत इति ज्ञानिकर्मणो वीर्यवत्तरत्वमिति — न तद्युक्तम् — यदेव विद्ययेत्येतत् न ज्ञानिपरं, किन्तु देहातिरिक्तात्मविषयकपरोक्षज्ञानिपरम्। अवेक्षणेनाज्यस्येवोपनिषज्जन्यदेहातिरेकज्ञानेन जीवसंस्काराभ्युपगमात्। संस्कृतस्य च कर्माङ्गत्वात् तत्त्वज्ञानं तु स्वतन्त्रफलसाधनं न त्वङ्गं, तदुक्तं व्याकरणाधिकरणे भट्टपादैः — "सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते। पराङ्गञ्चात्मविज्ञानादन्यत्रेत्यवधार्यता" मिति —

(कु०) इदं तु तुच्छम्—मीमांसककृतश्रुत्यर्थस्य व्यवस्थायाश्च ब्रह्ममीमांसाविचारपरैरादरणीयत्वनियमाभावस्य सहेतुकं पूर्वमेवोक्तत्वात्। व्याख्यातं हि 'विद्यये'ति ब्रह्मज्ञानिपरत्वेन शाङ्करे, तज्ज्ञानं परोक्षं वाऽपरोक्षं वेति विचारोऽन्यः। एतेन—'अद्वैतमत'इत्याद्युत्तरो ग्रन्थोऽपि निरस्तः। उपनिषद्भाष्ये शाङ्करे उद्गीथाख्याक्षरविज्ञानं(कर्माङ्गोंकारविज्ञानं)ॐकारः कर्माङ्गभूतस्तत्र मतिं कुर्यात्, स च परमात्मप्रतीकभूतः, तदपचितिः परमात्मापचितिरेव ओमित्युच्चार्य कृतं कर्मैव समाप्तिमत् अधिकफलवच्च भवतीति निरूप्य, 'विद्यये'त्यस्य विज्ञानेनेत्यर्थोक्त्या च, ब्रह्मज्ञानेनेत्यर्थ एव न्याय्यः न तु देहातिरेकात्मज्ञानेनेति। 'उपनिषदे' त्यस्य योगेनेत्यर्थ उक्तः, स चात्रोपासनं, ततश्च परमात्मविज्ञानोपासनयुक्तेन कृतं कर्म वीर्यवत्तरमधिकफलमिति चोक्तम्।

ज्ञानिकर्म अधिकफलं, अविद्वत्कर्म तु न्यूनफलम्। 'निष्फलं' इति श्रीमध्वाचार्योदाहृतवचनस्यापि अयमेवाभिप्रायः। अयमर्थः 'अहं हि सर्वयज्ञानाम्, यान्ति देवव्रता देवा' निति श्लोकाभ्यामभिहितो नवमे गीताचार्यैः। निरूपितश्चास्माभिरधस्तात् ॥

एतेन—'तरपो दौर्लभ्यं स्वार्थे तर'बित्यादि प्रत्याख्यातम्। स विचारः परकृतो ह्यत्र लिखितः; न स्वाभिमतार्थसाधकः। सर्वैर्ब्रह्मवादिभिर्भवदाचार्यप्रभृतिभिः 'विद्यासंयुक्तं कर्म विद्याविहीनात्कर्मणो विशिष्टं, विद्वानिव ब्राह्मणो विद्याविहीनात्। वीर्यवत्तरं = महाफलं, विशिष्टफल'मेति वदद्भिरातिशायनिकतरबेव अभिप्रेयते। श्रीमध्वाचार्यैरेवाऽऽतिशायनिकार्थकत्वमङ्गीकृतमिति भ्रान्तो युक्ताऽयुक्तविवेकविकलो मार्जारक्षीरपानन्यायेनाऽहंतामात्रेणाऽन्यदीयं ग्रन्थमलिखत् स्वसाधकत्वबुद्ध्या। वस्तुतस्तु नायं विचारो महाभाष्योक्त इति वदता नागेशेन – 'तरप्तमपौ घ' इति सूत्रीयकैयटादिकं तु भाष्यानुक्तेः चिन्त्यमेव। यतोऽतिशायने संभवति कुतः स्वार्थे तरप् वक्तव्यः, 'अल्पाच्तर'मित्यत्रापि अतिशायनमेव विवक्षितमिति महाभाष्य' इति विवृतं शेखरे तत्सूत्रे। ततश्च – 'यदेव विद्यया करोती'ति ब्रह्मज्ञानिपरमित्येव न्याय्यम्। कर्म ब्रह्मज्ञानाङ्गमिति 'वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे। नैष्कर्म्यां लभते सिद्धिं रोचनार्थां फलश्रुतिः'॥ (भाग. ११-४-४६) इति श्लोकव्याख्याने श्रीधरीये व्यवस्थापितम्।

एतेन 'अद्वैतमते तु – उपनिषदा विद्ययेत्यनेनाऽङ्गावबद्धोपासनोच्यते, मतद्वयेपि न तत्वज्ञानम्, युक्तं चैतत् 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारते'-त्यादिवचनस्वारस्यात्। अन्यथा—कृतकृत्यत्वमौपचारिकं स्यादिति दिगिति कौस्तुभे वक्ष्यमाणं परास्तम्। 'विद्यया=विज्ञानेन, उपनिषदा=योगेने'त्यर्थकथनात् शाङ्करे॥

यदत्र 'मतद्वयेपि न तत्वज्ञानमित्युक्त्वा 'एतद्बुध्वे'ति वचनमुपन्यस्यता शाङ्करमतेऽपि 'यदेव विद्यये'ति श्रुतिगतं विद्ययेतिपदं, गीतापीति द्वयं न तत्वज्ञानपरमित्युक्तं भवति, इति कौस्तुभोक्तम्—

इदमयुक्तं 'भगवत्तत्वे विदिते कर्तव्यं कृतं भवे'दिति शाङ्करगीताभाष्योक्त्या, कर्माङ्गत्वेन तत्फलत्वेन च ब्रह्मज्ञानमेव संपादनीयमित्यद्वैतमतप्रमेयसिद्ध्या, तथैव श्रीधरादिभिर्व्याख्यातत्वेन च गीतोपनिषदोर्ब्रह्मज्ञानपरत्वस्यैव युक्तत्वात्। इतरज्ञानोपासनाभ्यां कृतकृत्यत्ववर्णनस्याऽयोगात्। ब्रह्मज्ञानातिरिक्तज्ञानपरत्व एव कृतकृत्यत्वस्योपचरितत्वं, न तु ब्रह्मज्ञानपरत्वे इति वेदितव्यम्। तस्मात्तरप आतिशायनिकार्थत्वे न पाणिनीयानुशासनव्याकोप इति सिद्धम्॥

(कौ०) यत्तु—भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते (४-१-१९) ब्रह्म-द्विट् ब्रह्मदर्शी च तमोमोक्षाववाप्नुत' इत्यनुव्याख्यान इति माध्वाः इति । अत्रापि तमो वेत्यंशो नित्यनरकनिराकरणेनैव निराकृतः । अंशान्तरन्त्वविरुद्धमिति —

(कु०) एतदधिकरणारंभ एव नित्यनरकनिराकरणस्य सप्रमाणं दूषितत्वेनेद-मसङ्गतं बोध्यम् । अंशान्तरन्त्वविरुद्धमित्यपि मन्दम्—एतत्संमत्यसंमत्योरप्रयोजक-त्वादिति संक्षेपः ॥ इति तदधिगमाधिकरणविचारः ।

इति चतुर्थस्य प्रथमः पादः ॥

## अथ चतुर्थाध्यायस्य द्वितीयः पादः



### अथ वाङ्मनोधिकरणादिविचारः (१)

वाङ्मनसि दर्शनाच्छब्दाच्च (४-२-१)

(कौ०) 'अतोऽग्नौ देवा विलीयन्ते' इत्यत्र निर्दिष्टानामेव लय इत्यादीनि माध्वाधिकरणानि । अत्रेदं वक्तव्यम् प्रागुक्तरीत्याऽद्वैते सुस्थे त्वयोच्यमानं तारतम्यं स्वोत्कृष्टदेवतासु अपकृष्टानां लय इत्यादि च सर्वमसङ्गतमेव । तथा च श्रुतिः— इंद्रं मित्रं वरुणमग्निमाहुः । न च व्यावहारिकं तारतम्यम्—मोक्षे व्युत्पाद्यमानत्वात् । त्वया सत्तात्रैविध्यानभ्युपगमात् । किंच त्वदुक्तं तारतम्यमनेकोपनिषद्विरुद्धम् । तथा हि—तलवकारोपनिषदि अग्निवायुमघोनां दुरभिमानभङ्गः, पार्वत्या अनुग्रहाद्भय-निवृत्तिश्चेत्यादि श्रूयते 'वायुर्वा अहमस्मीत्यादौ हैमवती'मित्यादौ च । अथर्वशिरसि च 'ते देवा रुद्रमपृच्छन् को भवानिति, सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यादि, समन्वयाधिकरणद्यु-भ्वाद्यधिकरणयोः भङ्गे उक्तमपीहानुसंधेयम् । एतेन — वक्ष्यमाणं मुक्तौ तारतम्यं गुणोपसंहारे अनुव्याख्यानादौ व्युत्पादितं च सर्वमपास्तमित्युक्तम् —

(कु०) अत्रोच्यते — 'प्रागुक्तरीत्याऽद्वैते सुस्थे उक्ततारतम्यम्, उत्तमेषु अपकृष्टस्य लय इति द्वयमसङ्गतमिति तावन्मन्दमतिवचनम् — अद्वैते प्रमाणाभावेन

सूत्रकृतस्तत्र तात्पर्याभावेन च तत्सिद्धेरेवाभावात् तस्य मुख्यत्वोक्तेरयुक्तत्वात् । श्रुतिस्मृतिसिद्धत्वेन द्वैतस्यैव शास्त्रतात्पर्यविषयत्वेन मुख्यत्वात् भाष्यादावुक्ततारतम्यादेर्युक्तत्वात् । 'इन्द्रं मित्र'मिति श्रुतिरस्ति अद्वैत इत्यपि न । तस्याः श्रुतेरद्वैतपरत्वाभावस्य पूर्वमेवोक्तत्वात् । न च व्यावहारिकेत्याद्याक्षेपसमाधाने अपि असङ्गते—तथा व्यवहाराभावादस्मन्मते ।

किञ्चेत्यप्ययुक्तम्—सर्वासूपनिषत्सु तारतम्यं जीवेशभेदश्च निरूप्यत इति असकृदस्माभिःप्रतिपादितत्वात् । त्वदुदाहृतोपनिषद्येव यक्षरूपस्य ब्रह्मणः सकाशात् वाय्वादीनां अहङ्कारभङ्गप्रतिपादनात् यक्षस्योत्तमत्वम्, इन्द्रादीनां तदपेक्षयाऽधमत्वं परस्परं तारतम्यं च स्पष्टम् । अत्र पार्वत्या उपदिष्टो मघवान् तदुपदिष्टावग्निवायू च निरभिमानाः प्रशान्तचित्ता ब्रह्मज्ञानिनोऽभूवन्निति निरूपणात् पार्वत्यपेक्षयाऽपि मघवदादीनामप्यवरत्वसिद्ध्या जीवभेदतारतम्यसिद्धिः । सर्वास्वप्युपनिषत्सु प्रकारभेदेन भेदतारतम्यमेव निरूपितमिति बोध्यम् । 'ते देवा' इति अथर्वशिरोवचः, उक्तनयद्वये नोदाहृतम् । अनेन वचनेन रुद्रस्य कालत्रयवर्तित्वं, न तस्मादन्य उत्तम इति च लभ्यते । तेन च तरतमभावो भेदश्च सिध्यतीति शक्यं वक्तुम् । अतो जीवानां भेदाभावे तरतमभावाऽभावे कथमिदं प्रमाणं स्यादिति विभाव्यताम् ॥

एतेनेदमपि परास्तम्—यत् मुक्तौ वक्ष्यमाणं तारतम्यं, गुणोपसंहारे अनुव्याख्यानादौ व्युत्पादितं च सर्वमपास्तमिति भाषणम् ।

किञ्च कठवल्लीगीतयोः स्पष्टमुक्तं तारतम्यम्—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ (क० ३-व)

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनस्तु परा बुद्धिर्यो बुद्धेःपरतस्तु सः ॥ (गी० ३-४२)

एवं बुद्धेः परं बुध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ (गी० ३-४३) इति ।

आभ्यां च देवानामुत्तमत्वं तारतम्यं च स्पष्टं भगवानेवाह । अत्रेन्द्रियादिपदानि तत्तदभिमानिदेवतापराण्यपि । तेनेन्द्रियादिसर्वजडेभ्यः, अभिमानिसर्वदेवताभ्यश्च परत्वं परमात्मन इति वाक्यार्थः । ततश्च चेतनाऽचेतनसर्वप्रपञ्चात् आत्मनो भेदस्तारम्यं च सिद्धमिति सर्वोत्तमत्वसिद्धिरात्मनः । अन्यथा — जडमात्रात्परत्वबोधने नानेन वाक्येनार्थः, आत्मनश्चेतनत्वेन स्वत एव जडात्परत्वसिद्धेः । श्रौतेऽर्थे भगवति तद्वचने च विश्वासमकुर्वाणानां पुरतः सर्वं भाषणमरण्यरोदनसदृक्षतामियात् । अत एतावतैवात्र विषये लेखः पूर्यते ॥

इति वाङ्मनोधिकरणविचारः ।

एतेन पञ्चाधिकरणी व्याख्याता ॥

---

## अथ समनाधिकरणविचारः (६ अ०)

समना चाऽसृत्युपक्रमादमृतत्वं चाऽनुपोष्य (४-२-८)

(कौ०) 'द्वौ वाव सृत्यनुपक्रमौ .... एतौ ज्ञात्वा विमुच्यत' इति परमतमनूद्य खण्डनं प्राग्वदिति यदत्र दूषणाभिधानम् —

(कु०) इदमसङ्गतम् । पूर्वाधिकरणे त्वदुक्ततारतम्याभावस्याऽप्रामाणिकत्वात्, 'यदेव विद्यया करोती' ति श्रुतिबोधितविद्यायुक्तस्य कर्मणो वीर्यवत्तरत्वं तरतमभावापन्नफलहेतुत्वमिति सर्वैरभ्युपेयत्वेन तारतम्यस्य प्रमाणसिद्धत्वात् 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहु' (ऋ. स. २ - ३ - २२) रित्यादेरन्तर्यामिपरत्वेनाऽभेदे तात्पर्याभावात्, व्यावहारिकतारतम्यमिति श्रीमध्वमतीर्थैः क्वाप्यनुक्तत्वात्, केनोपनिषदादिषु सर्वासु तारतम्यस्यैव प्रतिपादनात्, अग्निवायुमघोनामभिमानभञ्जनेन तेषां यक्षस्य च भेदनिबन्धनतारतम्यस्यैव सिद्धत्वात् भवदभिमताऽथर्वशिरोवचनतात्पर्यस्य पूर्वा-

धिकरण एव दूषितत्वात्, 'ये तु सर्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ते ते तु नावर्तन्त' इति 'अहं हि सर्वयज्ञाना' मिति श्लोकीय भवदाचार्य व्याख्यानोक्तदिशा इन्द्रं मित्रमित्यादेरन्तर्यामिपरतया भवतापि अवश्यं योजनीयत्वात्। मोक्षे तारतम्यस्य, गुणोपसंहारप्रकरणेऽनुव्याख्यानादौ मध्वाचार्यैः निरूपिततारतम्यस्य च प्रमाणसिद्धत्वात् पूर्वाधिकरणे त्वदुक्तस्याऽप्रामाणिकत्वेनाऽत्र तदतिदेशाऽयोगात्। अत्र द्वित्वस्य व्यावहारिकत्वादिति त्वन्मतं, न तु मध्वाचार्याणाम्, तस्मात् एतेन त्वद्भाषणेन त्वया 'एतदधिकरणार्थः, पञ्चपञ्चजना आकाशश्चेति श्रुतेरर्थोऽस्मदाचार्योक्तश्च न बुद्ध इत्येवाऽवधार्यते।

ब्रह्मात्मातिरिक्तचेतनाभाववादिनस्तव मते तावत् सर्वस्य मिथ्यात्वात् ब्रह्मणि सर्वस्य व्यावहारिकत्वं त्वयाऽभ्युपेयम्, नाऽस्माभिः। नियामकबहुरूपाऽपेक्षया, अवतारबहुत्वापेक्षया च बहुत्वं परमात्मनि वास्तवमेव॥

एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः।
एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान्'' (भाग. ११-३-४) इति।

नियामकान्तर्यामिरूपेण प्रविष्टः, जुषते = जोषयते' जीवं विषयानित्युक्तेः नियामकरूपाणां बहुत्वं प्रमितं, अवताराणां बहुत्वं सर्वत्र प्रसिद्धमिति युक्तं चेति बोध्यम्। पञ्चपञ्चजना इत्यत्र नियामकबहुरूपापेक्षया बहुत्वमुक्तम्। अत्र तु रमारमापतिव्यक्तिद्वयापेक्षया 'एतौ ज्ञात्वा विमुच्यत' इत्युक्तम्, न तु ब्रह्मणो रूपद्वयविवक्षया। अतः त्वद्रीत्या पञ्च पञ्चजना इति कदुपपत्ते' रिति श्रीमध्वाचार्यान्प्रति भाषणमसंगतम्।

'समाना चे' ति सांप्रदायिकं प्राचीनैरभियुक्तैर्व्याख्यातं च पाठं विहायेत्यपि त्वद्भाषणमत्यन्तमयुक्तम्। संप्रदायकोलाहलस्य निरवधिकत्वात्, उभयवादिसंमताऽभियुक्तपुरुषनिर्णयस्य च ब्रह्मणापि दुष्करत्वात्, इत्थं भाषणमयुक्तमिति निरूपितमधस्तादेव॥

(कौ०) यदत्रोक्तम्—'नद्यृतश्चे' ति कपि समनृकेति प्रयोगापत्तेश्च। न च समासान्तविधिरनित्य इति कथंचित्समाधातुं युक्तं, शैषिके कपि सिद्धे सूत्रारंभस्य नित्यत्वदार्ढ्यार्थत्वादिति —

(कु०) इदं च कत्रापादनं; 'ऋतश्छन्दसी' (५-४-१५८) ति पाणिनि सूत्रविस्मरणमूलकम्। ऋदन्तोत्तरपदाद्बहुव्रीहेः छन्दसि न कबिति तदर्थः। न च-तत्र छन्दसीत्युक्तं नेदं छन्द इति वाच्यम् - 'छन्दोवत्सूत्राणि भवन्ती' ति भगवत्पतञ्जलिसुभाषणात् सूत्राणामपि छन्दस्त्वाविशेषात्। न च—वेदाङ्गत्वात् पाणिनिसूत्राण्येव तत्र विवक्ष्यंते, तथा कैयटोक्तेरिति वाच्यम्, कैयटोक्तवचनादरेण 'श्येण्या च शल्ल्ये' ति गृह्य' मिति कौमुदीव्याख्याने ङीप् णत्वं च छान्दसत्वादिति मनोरमाशब्दरत्नादौ गृह्यसूत्रस्यापि छन्दस्त्वेन व्यवहारदर्शनात्। यच्च प्रकृतितद्गुणनियामकत्वं न परमात्मनो युक्तं, नियामकत्वस्य जनकत्वरूपत्वे, प्रकृत्यादेरनादित्वेन तज्जनकत्वायोगः, न च व्यापकत्वं तदिति वाच्यम्, समव्याप्तत्वेनाऽविशेषादिति कथितम् — तदनेन पराहतम् — 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।' (गी० १३ १९) इति श्लोकव्याख्याने शांकरे 'तदसत् - प्राक् प्रकृतिपुरुषयोरुत्पत्तेः, ईशितव्याभावात् ईश्वरस्याऽनीश्वरत्वप्रसंगात्' इत्युक्तेर्जनकत्वाद्व्यतिरिक्तः कश्चन नियामकत्वरूपो धर्मोऽस्ति निखिलभुवनेशस्येश्वरस्येति सिद्धः। तेन हि सत्यभूतनित्यप्रकृत्यादिनियामकत्वमीश्वरस्योक्तं भवति। अन्यथा 'ईश्वरस्येश्वरत्वमेव न स्या' दिति तद्भावस्तत्रैव स्पष्टः।

किंच लोके जनकः पिता, नियामको राजगुर्वादिरिति शास्त्रलोकप्रसिद्धं सार्वजनीनम्। अतस्तयोरनतिरिक्तत्वाभिभाषणं मूर्खप्रलपनम्। शास्त्रसिद्धे चेतननानात्वाऽनुग्राह्याऽनुग्राहकादिपुरुषसद्भावपक्षे महापुरुषपरमानुग्रहादिना प्रपञ्चसत्त्वाऽसत्त्वादि सर्वं प्रसिद्धमेव। अतो 'यदनुग्रहतः सन्ती' त्यादि सर्वं युक्तमेव। सिसृक्षायां सत्यां प्रपञ्चसृष्टिः निजिघृक्षायामवान्तरप्रलयो महाप्रलयः, सति तस्मिन् न दृश्यन्ते पदार्थाः, ततएव न सन्तीति व्यवहारो युक्त इति नाप्रसिद्धिग्रासः। त्वदुक्तेरेवाऽप्रसिद्धिग्राहग्रासो निर्मूलचेतनैकत्वपक्षमूलकत्वात् त्वद्भाषणस्य निर्मूलत्वात्।

प्रामाणिकचेतननानात्वमूलकोपरितनश्रीमाध्वभाष्यादिः, चेतनबहुत्वमसहमानस्य तव द्वेषाऽसूयावतश्चेतसे न रोचते। युक्तमिदं उक्तं हि श्रीहर्षेण - 'पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंसे' ति ॥

एतेन — 'एतेन - अस्यैव चे' ति प्रघट्टकोपि परास्तः, खण्डनन्तु प्राग्वदिति उपरितना कौस्तुभोक्तिर्निरस्ता वेदितव्या ॥

(कौ०) यच्चोक्तम् सच्चिदानन्दनित्यत्वादिना जीवा अपि समाः, सर्वसमा तु रमापि, न मत्स्यादीनां च साम्यं दुर्वचममेदात्, सादृश्यस्य भेदगर्भत्वात्। अन्यथा निरञ्जनः 'परमं साम्यमुपैती' ति श्रुत्या जीवब्रह्मणोरभेद एव सिध्येत्। साम्यशब्दबलादेव भेदसिद्धिरिति त्वदीयानां वल्गनं च गर्भस्रावेणेव गच्छेत्। अतो निष्फलो दुरुपपादश्च त्वदुक्तो विभागश्चेति दिगिति —

(कु०) इदं सर्वमसंबद्धप्रलपनमुन्मत्तभाषणवत्। तथा हि — वेदान्तिनां, मम्मटविश्वेश्वरपण्डितप्रभृतीनां काव्यप्रकाशालङ्कारकौस्तुभादिकाराणामालङ्कारिकाणां मते, मीमांसकानां वैयाकरणानां मते च सादृश्यमतिरिक्तः पदार्थः। सत्त्वादयः, आह्लादकत्वादयश्च धर्माः सादृश्यप्रयोजका एव। केन साम्य(सादृश्य)मित्येव लौकिकवैदिकमर्यादाविदामभिज्ञानां व्यवहारदर्शनात। इदमेव युक्तमिति शास्त्रेषु निरूपितम। साम्यं भवता जीवस्य एकत्वं विवक्ष्यते यदि, तदसङ्गतं शास्त्रसंमतत्वाभावादेकत्वस्येत्यसकृदुक्तत्वात्। सादृश्यं विवक्ष्यत इति चेत्, ओमिति ब्रूमः। नाऽनेनाऽस्मत्सिद्धान्तभङ्गः। जीवेश्वरभेद इति हि द्वैतिनां राद्धान्तः। सर्वेश्वरस्य त्रिभुवननियमनशीलस्य नारायणस्य लक्ष्मीपते रमानियामकत्वस्यापि सिद्धया तस्याः सर्वसाम्यायोगात्। एकत्वं तु दूरतोऽपास्तं, चेतनैक्यस्याशास्त्रीयत्वात्।

मत्स्याद्यवताराणां तु भगवन्नारायणावतारत्वात् एकत्वमेव न भेदः, तत्र साम्योक्ति भेदाऽभावपरा, समशब्दस्य एकत्वसादृश्योभयार्थकत्वात् मूलरूपाऽवताररूपाणां च भेदाभावस्य शास्त्रसिद्धत्वात्। यथाशास्त्रमेव शब्दप्रमाणकैरङ्गीकार्यत्वात्। अत एव—अभेदेऽपि 'समोऽहं सर्वभूतेषु' (गी. ९.२९) इत्यत्र समपदप्रयोगो भगवति सङ्गच्छते। समस्तुल्य इति तत्र शांकरे भाष्ये। एवंच सादृश्यं भेदव्याप्यमिति तु बाधकाभावस्थल एव।

अतोऽसति बाधके भेदनिबन्धनमेव सादृश्यमिति 'साम्यशब्दबलादेव भेदसिद्धि' रित्यसदाचार्यभाषणं युक्तमेव। रामकृष्णाद्यवताराणां भगवन्नारायणावतारत्वं

भारतादौ बहुषु स्थलेषु । भवदाचार्यैरपि गीतावतरणभाष्ये स्पष्टं प्रतिपादितम् । इत्थं हि तद्भाष्यम् — ' जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव.... नित्यशुद्धबुद्धमुक्तस्वभावस्सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यत'इति । एतेन–मूलरूपस्य अवतारभूतकृष्णरूपस्य च भेदाभावः, नित्यशुद्धेत्यादिविशेषणस्वारस्यात् कृष्णाद्यवताररूपाणामाद्यन्तराहित्यं शुक्रशोणितसंसर्गाऽजन्यत्वं च स्वरूपतस्सदाऽस्ति स्वेच्छया तु मानवदेहवानिवात्मानं दर्शयति । इदं च सर्वाऽवतारसाधारणं बोध्यम् । इत्थमवताराणां साम्योक्त्युपपत्तिः ॥

किंच—" गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ इति,

सन्त्येव जगति बहवोप्यर्थास्तेजस्त्वजात्यवच्छिन्नाः । तदपि प्रसिद्धमेव खल — विवस्वानिव विवस्वान् , इन्दुरिन्दुरिव श्रीमान् " इत्यादावुपनिबद्धं, उपमानान्तरनिषेधप्रयोजनकाऽनन्वयालङ्कारं कविलोकसमयसिद्धमाश्रित्य स्मृतिकारैरिहावताराणां साम्यमुपनिबद्धम्,

आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ (का. ३-३) इत्यादौ

शास्त्रतत्त्वं सुलभेन बोधयितुं आत्मादौ रथित्वादिरूपणवत् । अत एवोक्तमसति बाधक इति । भेदगर्भं सादृश्यमिति तु बहुलाभिप्रायेण । एतेन साम्यशब्दबलादेव भेदसिद्धिरिति जीवविषयेऽसदाचार्योक्तिः समीचीनैव । जीवेशयोर्भेदस्यैव शास्त्रसिद्धत्वात् ॥

केचित्तु – मूलरूपावताररूपाणां सर्वप्रकारेण साम्येपि शब्दभेदात्साम्यं सुवचमिति वदन्ति । अन्येतु विशेषबलात् सिद्धं भेदमादाय साम्यं सुवचमिति प्राहुः ॥

एतेन — यच्चोक्तं कौस्तुभे – 'परमं साम्यमुपैती'तिश्रुत्या जीवब्रह्मणोरभेद एव सिध्येदित्यादि —– इदमसंगतम् – असति बाधक इत्याद्युक्तेः । समशब्दस्तावत् " अथ समं सर्वम् , वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः, सदृक्, समानाः सत्समैके स्युः, समानं सत्समैकेषु त्रिषु ना नाभिमारुते " इत्यमरमेदिन्यादिकोशतः सर्वसमानसदृशपर्याय इत्यवगम्यते । प्रयोगोपि तस्य सदृशार्थ एव बहुलमुपलभ्यते ।

यथा – यथासंख्यमनुदेशः समानाम् ( पा. सू. १-३-१० ) समोऽहं सर्वभूतेषु (९-२९ गी.) न त्वत्समोऽस्त्यभ्यधिकः (गी. ११-४३) इत्यादौ । अत्र तु साम्यश्रुतौ साम्यपदं सदृशार्थकसमशब्दाद्भावे ष्यञन्तं सादृश्यार्थकम् । तत्रश्चायमर्थः–दिव्यतेजोविशिष्टब्रह्मादिसर्वप्रपञ्चसृष्टिनियमनादिकर्तृपरमात्मविज्ञानी विधूतसमस्तपुण्यपापस्सन् यथायोग्यभगवद्धर्मसदृशधर्मं प्राप्नोतीति । भगवद्धर्मस्य केनाप्यन्येनाप्तुमशक्यत्वादिति एवमर्थो वर्णितो ब्रह्मवादिभिः । अत एवोक्तं भागवते —

गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ (८-४- ) इति ।

अत्र रूपपदं धर्मोपलक्षणम् । तेन दुःखाऽसंभिन्ननित्यसुखादिप्राप्तिर्मुक्तानाम् । आह च भगवती श्रुतिरेतमर्थम्– ' एष परम आनन्दः........तस्य मात्रामुपजीवन्ती'ति । परमात्मानन्दैकदेशसदृशानन्दकणभाक्त्वं मुक्तानामिति श्रुतितात्पर्यम् ।

एतेन–समशब्दस्य समानशब्दपर्यायत्वेनाऽन्यत्रऽन्यपरत्वेऽपि पूर्वतन्त्रे त्रिवृच्चवैश्वत्वाधिकरणे (१-३ ५) चरुशब्दस्य लोकप्रसिद्धस्थालीवाचित्वं विहाय वाक्यशेषरूपशास्त्रप्रसिद्धौदनपरत्वाभ्युपगमवत् जीवपरमात्मनोर्भेदप्रतिषेधपरशास्त्रबलात् अन्यपरत्वं विहाय सदृशार्थकत्वमभ्युपगम्यते । जीवपरयोरैक्यनिषेधपराणि वचनानि, भेदे प्रमाणानि च उदाहृतानि । तस्मात् ' परमं साम्यमि' श्रुत्याऽभेद एव सिध्येदित्युक्तिः पराहता ॥ तयोरेकत्वस्य शास्त्रसिद्धत्वाभावात् । सिध्येदिति लिङो विध्याद्यर्थकत्वासंभवेन संभावनायां स इति संभावनामात्रं, न तु सिद्धिरित्यर्थः । अतएव सिद्धिप्रकारो नोपपादितः कौस्तुभकृतेति मन्यन्ते विपश्चितः ॥

किंच – मुक्तौ मुक्तब्रह्मणोरैक्याङ्गीकारे श्रुतिसूत्रव्याकोपः । तथाहि – ' अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा ' (बृ० ४-५-१४) इति मुक्तव्यक्तितद्धर्माणां नाशाभावः श्राव्यते । तच्च मत्यैक्ये मुक्तब्रह्मणोरनुपपन्नं सत् भेदं बोधयति । अन्यथा ऐक्येनैव मुक्ततद्धर्माणामभावसिद्धौ पुनः तद्बोधनस्यानर्थकत्वात् । सति भेदे तु कदाचिच्छङ्का स्यात् मुक्तव्यक्त्यादीनां किं भवेद्विनाश इति, तत्परिहाराय सार्थकं श्रुतिवचनम् । ' सोऽश्नुते सर्वान्कामान सह ब्रह्मणा विपश्चिता ' (तै० १०) इत्यादीनि कामानुभवपराणि सन्ति बहूनि मुक्तौ भेदज्ञापकानि । यदि मुक्तौ भेदं नाङ्गीकरोषि

तर्हि निर्धर्मकब्रह्मणा एकीभूतानां मुक्तजीवानामपि निर्धर्मकत्वाऽवश्यंभावेन श्रौतसर्वकामानुभवस्याऽप्रसक्त्या एताः श्रुतयोऽपार्थास्स्युरिति गृहाण ॥

ननु मिथ्यावादिनो मम इष्टमेवेदमिति चेत् — तदा नास्तिकवादिमते तव प्रवेशो भवति। भगवतो मुक्तलोकप्राप्यत्वबोधक 'मुक्तोपसृप्यव्यपदेशात्' (१-३-२) इति सूत्रस्य, मुक्तानां जगत्सृष्टिव्यापाराऽभावप्रतिपादक 'जगद्व्यापारवर्जं' (४-४-१८) मिति सूत्रस्य च व्याकोपो मुक्तावैक्याङ्गीकारे अपरिहार्यः। तस्मात् 'परमं साम्य'मिति श्रुत्याऽभेद एव सिध्ये'दिति बालभाषितमेवेति विदाङ्कुर्वन्तु विद्वन्मणयः। अत्र श्रुतौ साम्यपदं सादृश्यार्थकमेवेति महासिद्धान्तप्रकरणे श्रुतप्रकाशेपि विस्तरेणोपपादितम् ।

ननु – इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ (गी, १४-२)

इति परमात्मसाधर्म्यप्राप्त्यभिधानस्य परमात्मनो निर्धर्मत्वेन अनुपपत्त्या निर्धर्मकस्वरूपे पर्यवसानेनाऽभेदसिद्ध्या अत्रापि साम्योक्तिः ब्रह्मस्वरूपमात्रपर्यवसायिनीति अभेदसिद्धिरिति चेत्—अत्र वदामः—अस्ति किंचिद्वस्तु निर्विशेषं (समस्तधर्मविधुरं) प्रस्तरप्रायं ब्रह्माख्यं तज्ज्ञेयं तदुपास्यं प्राप्यमिति श्रुत्यादौ क्वापि नोक्तं, परन्तु प्राप्यं वस्तु ब्रह्माभिधेयं समस्तधर्मरत्नाकरभूतं तदेव ज्ञेयमुपासितव्यं श्रेयोऽर्थिभिरिति निखिलनिगमवचनानि रोरुवति ।

तत्र तैत्तिरीयारण्यके 'ब्रह्मविदाऽऽप्नोति पर'मिति सूत्रस्थानीयवाक्येन ब्रह्मविदः परब्रह्मप्राप्तिं संक्षेपेणोक्त्वा, प्राप्यब्रह्मपदार्थविवरणपर 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिना सत्यत्वादिविशिष्टमिति ब्रह्मस्वरूपं दर्शयित्वा तन्मन्त्रव्याख्यानभूते वल्लीद्वये 'आत्मन आकाशः संभूत'इत्यादिना प्राप्यस्य ब्रह्मणः सृष्टिकर्तृत्वादिबहुगुणवत्त्वं बोधयित्वा वल्लीद्वयान्ते सर्वकारणत्वादिविशिष्टब्रह्मज्ञानोपासनयोर्ब्रह्मानुभवलक्षणं फलमभिहितम् । अतः प्राप्यस्यैव गुणाभिधानादत्र प्राप्यं निर्विशेषमिति नाङ्गीकर्तुं शक्यम् । सर्ववेदार्थसारसंग्रहे महाभारतेऽनेकत्र, गीतायां च—

'कविं पुराणमनुशासितार मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्' ॥ (गी. ८-९)

इति भगवद्वचनं च प्राप्यस्य वेद्यस्य च पुरुषस्य सर्वज्ञत्वादिबहुधर्मवत्तां प्रतिपादयति। अयं श्लोकः 'परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्नि' ति ध्येयतया प्राप्यतया चोक्तस्य परमपुरुषस्य स्वरूपमाह । तत्र कवित्वं सर्वज्ञत्वम्, तमसः परस्तादित्यनेनाज्ञानराहित्यमुच्यते । शिष्टं स्पष्टम् । 'प्रयाणकाल' इत्युत्तरश्लोकगत 'तं' इत्यनेन कवित्वादिगुणविशिष्टपुरुषपरामर्शः । सर्वज्ञत्वादयो हि धर्मा ब्रह्मणः स्वतस्सिद्धाः, 'स्वाभाविकी ज्ञानबले'ति श्रुत्या तथा बोधनात् । ततश्च ब्रह्मणः सधर्मतायाः प्रमाणसिद्धतया सधर्मकमेव ब्रह्मेति सिद्धम् । अतो निर्विशेषत्वं न ब्रह्मणः शास्त्रसिद्धम् । ततश्च तदन्यथाऽनुपपत्तेरभावेन साधर्म्यस्य 'स्वरूपमात्रे पर्यवसानवर्णनस्याशक्यत्वात् अभेदः सिध्ये'दिति न युक्तम् । 'केवलो निर्गुणश्चे' त्यत्र निर्गुण इत्यस्य सत्वरजस्तमोगुणरहित इत्यर्थ इति शाङ्कर उक्तमिति अवोचाम । किंच—निश्चिता गुणा यस्मिन्निति व्युत्पत्त्या वेदादिशास्त्रोक्तगुणवत्त्वनिश्चयविषयो देव इत्यर्थः । न चेदं सर्वं प्रमाणमारोपितं गुणजातं ब्रूते इति वाच्यम्—'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतिविरोधात् । त्वदुत्प्रेक्षाया अकिञ्चित्करत्वात् । न च 'कविं पुराण' मित्यादि सगुणोपासकविषयम्, न तु निर्गुणब्रह्मविद्विषयमिति वाच्यम्—अस्या अपि व्यवस्थाया भवदुपज्ञत्वात् ॥

किंच — त्वदुक्तोपासनाद्वैविध्यमेवायुक्तम् — सर्वेषामुपासनाविधीनां सगुणविषयत्वस्यैव दर्शनात् । न च — गीतायां (१२-अ.) 'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा' (२) इति पार्थकृतयोगिश्रैष्ठ्यप्रश्नं समादधता भगवता प्रकृतविश्वरूपोपासकानां 'मय्यावेश्य मनो ये '(१२-२) इति अक्षरोपासकेभ्यः श्रेष्ठतामभिधाय, अक्षरोपासकानां 'क्लेशोऽधिकतरस्तेषा' (१२-५) मिति क्लेशाधिक्यं निरूपयता अक्षराख्यब्रह्मोपासना, विश्वरूपिभगवदुपासना चेति द्विविधोपासना दर्शिता । तत्राद्या निर्विशेषविषया, द्वितीया सविशेषविषयेति वाच्यम् — उभयोरपि मोक्षलाभाविशेषादुत्कर्षाऽपकर्षायोगेन प्रश्नसमाधानयोर्निर्दलत्वात् । न च विदेहमुक्तितदभावाभ्यां विशेषः—अक्षरोपासकानां विदेहमुक्तिः विश्वरूपाद्युपासकानां सा नेति क्वाप्यनभिधानात् । विदेहमुक्तिर्नाम किं, जन्मान्तराभावः उत मुक्तौ देहाभावः ? नाद्यः—ब्रह्म प्राप्तानां सर्वेषां तस्य समत्वात् 'मामुपेत्य

तु कौन्तेय पुनर्जन्म न विद्यते ' (गी. ८-१६) इत्युक्तेः । द्वितीयोऽपि न, चिद्देहस्य तदा सत्त्वाभ्युपगमात् । 'भावे जाग्रद्वत्' (४-४- ) इति सूत्रात् । अन्यथा शास्त्रोक्त-सर्वकामानुभवाभावप्रसङ्गेन कामानुभववचनासाङ्गत्यात् ॥

किंच—' ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ' (गी. १२-३) इत्यक्षरोपासकानुवादश्लोके सर्वत्रगत्वस्य, ध्रुवत्वस्य च श्रवणात् अक्षरोपासनापि व्याप्तत्वध्रुवत्वादिविशिष्टविषयैवेति तस्या अपि सविशेष-विषयत्वलाभात् । ततश्च — ' परमंसाम्य ' मिति श्रुत्या जीवब्रह्मणोरभेद एव सिध्ये'दिति कौस्तुभभाषणमयुक्तमिति अलं प्रसक्तानुप्रसक्त्या । एवं च — ' सादृश्यं भेदव्याप्यमिति सिद्धम् । तेन यत्र साम्यवचनं तत्र प्रायः प्रतियोग्यनुयोगिनोर्भेदेन भाव्यमिति व्याप्तिसिद्ध्या ' साम्यशब्दबलाज्जीवपरमात्मनोर्भेदसिद्धि'रिति श्रीमध्वमतीयानां भाषणं सुभाषणमेव, सर्वतन्त्रसिद्धत्वादस्या व्याप्तेः । अतो गर्भस्रावन्यायोपन्यासः सर्वलोकतन्त्रसिद्धमर्यादाऽनभिज्ञाननिबन्धनः । तस्माच्छ्रीमध्वाचार्यदर्शितो जीवेशादिविभागः तारतम्यादिविचारः साधुः । तारतम्यादिज्ञानपुरस्सरं भगवान् श्रियः पतिः सर्वोत्तमत्वेन ज्ञेय उपास्य इति श्रीमध्वाचार्यसिद्धान्त एव श्रुतीतिहासपुराणादि-सर्वशास्त्रसंमतः । अतो गुरुदेवताभक्त्या श्रेयोऽर्थिभिर्गुरुं कंचिद्वैष्णवमाश्रित्य श्रवणादिना श्रीमाध्वसिद्धान्तोऽवश्यमादरणियः ॥

श्रीमदाचार्योऽनुगृहीतप्रमेयसारः सुबोधसुकुमारपदनिचयैः श्रीमज्जयतीर्थार्यैराचार्यकल्पैः सुष्टु उपपादितः श्रीतत्वसंख्यानटीकादौ, ततोऽवसेयं विस्तरजिज्ञासुभिः । तत्र हि मुमुक्षुणा खलु परमात्मा जगदुदयादिनिमित्तत्वेनाऽवश्यमवगन्तव्य इति सकलसच्छास्त्राणामविप्रतिपन्नोऽर्थः । इदं चानन्तराऽनेकभेदभिन्नस्य जगतो विज्ञानमपेक्षते इति जगदपि तथावगन्तव्यम् । तदिदं प्रधानाङ्गभूतं तत्वद्वयं शास्त्रे विशिष्य प्रदर्शितमत्र संगृह्य प्रतिपाद्यत इति ॥ नित्यमनुसंधेयमित्थमिति संगृहीतमत्र ॥

(कौ०) (समानाधिकरण एव) 'नोपमर्देनाऽत' (१०) इति सूत्रे—' प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना । नियता नैव केनापि नियता हि हरेर्गुणाः ' इतीति माध्वाः । अत्र वक्तव्यम् । प्रकृतिं प्राकृतगुणाँश्च प्रति नियामकत्वं दुर्वचम् । तद्धि न जनकत्वं, तस्या अनादित्वात् । नापि व्यापकत्वं, समव्याप्तत्वेनाऽविशेषादिति—

(कु०) इत्थमेव दूषणमभिधीयते क्रियासमभिव्याहारेण । अस्य च खण्डनमपि कृतमस्माभिः तत्र तत्र । अन्तर्यामिब्राह्मणे पृथिव्यादिपदानां तत्तदभिमानिदेवता-परत्वमभ्युपेत्य तन्नियामकत्वं नारायणस्योक्तं तद्भाष्ये शांकरे । 'प्रकृतिं पुरुषं चैवे' (गी. १३-१९.) ति गीतायां प्रकृतिपुरुषयोर्नित्यत्वमुक्तं भगवता । नित्ययोस्तयोर्नियाम-कत्वमीश्वरस्येति गीताभाष्ये(शां) । तत्र नित्यत्वं च प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं, ततश्च जन्मनाशौ न भवतस्तयोरिति वक्तव्यम् । अनादेरुत्पत्त्य-भावेन कथं भवान् नित्यवस्तुनियामकत्वं भगवत आहेति प्रष्टुं गच्छ भवदाचार्यानेव । लोके तावत् जनकोऽन्यो नियामकोऽन्य इति सर्वजनविदितम् । अत एव जनकत्वनियामकत्वयोरपि अर्थान्तरता च सुज्ञा । अस्य दीक्षितस्य तु अर्थान्तर-त्वधीर्नोत्पन्ना । अत्र तु कारणं तदीयविधिविलासः ॥

(कौ०) 'यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'ति वचनमपार्थकं, पञ्चम्यर्थस्य बाधात्, न सन्तीत्यस्याप्रसिद्धिग्रस्तत्वाच्चेति दिगिति —

(कु०) लोके प्रभो राजादेः प्रजासु प्रीतिसद्भावे निरुपद्रवाः सुखिनः सन्तीत्युच्यते ; प्रभुप्रसादाभावे तु दुष्टजनपरिपीडिता दुःखभाजो न सन्तीति । दुःखितया सत्त्वमसत्प्रायमिति तथोक्तं; अत एव—दुःखिजीवान्प्रति कश्चिदाह —

वृद्धस्य मृतभार्यस्य पुत्राधीनधनस्य च ।
स्नुषावचनदग्धस्य जीवनान्मरणं वरम् ॥ इति ।

पुत्रादिप्रीतिविषयत्वाभावादसत्प्रायः पुरुष इति भावः ।

अत्र पंचम्यर्थो हेतुः तस्य कथमपि न बाधस्संभवति । अतः पंचम्यर्थस्य बाधोक्तिरसङ्गता । सत्त्वाऽसत्त्वयोः ईश्वरानुग्रहतदभावहेतुकत्वेन लोकसिद्धत्वान्नाऽ-प्रसिद्धिग्रस्तत्वम् । अतो दीक्षितोक्तं सर्वमसमञ्जसमिति बोध्यम् । ततश्च यत्र भगव-दनुग्रहः तस्य सत्त्वेन व्यवहारः, यत्र तु स न, तस्यासत्त्वेन व्यवहार इत्युक्तमुपपन्नम् ॥

यदुक्तं – 'एतेन अस्यैव चेति प्रघट्टकोऽपि परास्त' इति —

एतदादिसूत्रत्रये समाऽसमादिर्निरूप्यते । अत्रोक्तेन नियामकत्वा-भावादिति हेतुना समादिनिर्णयासाङ्गत्यं कथं वक्तुं शक्यमिति विभावयन्तु ।

समाया रमायास्तदधीनत्वेन नियम्यत्वम् । अवतारायां नियम्यनियामकभावो लोकविडंबनायेति श्रीरामायणभारतादौ स्पष्टम् । अयन्तु दीक्षितः श्रीमध्वभाष्याद्यर्थमबुध्वैव अद्वैतप्रक्रियावलम्बनेन यत्किंचिदुक्तव्यमिति कृत्वा वल्गति वारंवारम् । अत्र दीक्षितोत्प्रेक्षितदं षेषु नैकोऽपि लगतीति बोध्यम् ॥

इति सम्पन्नाधिकरणविचारः ॥

---

## अथ पराधिकरणविचारः (७)

तानि परे तथा ह्याह (४-२-१५)

(कौ०) "प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते"। "सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्ये" इति माध्वाः । खण्डनं तु प्राग्वदिति –

(कु०) अत्र प्राक्पदेन यस्य कस्याप्यधिकरणस्य प्राक्तनस्य विवक्षा भवतु । दीक्षितोक्तखण्डनानां तत्र तत्र कृतदूषणैरेव इदमपि खण्डितं भवतीति ज्ञेयम् ॥

## अथ अविभागाधिकरणविचारः (८)

अविभागो वचनात् (४-२-१६)

(कौ) 'मुक्तानां सत्यसङ्कल्पत्वं सामर्थ्यं च परस्य तु ।
कामानुकूलकामत्वं नान्यत्तेषां विधीयते ॥' इति माध्वाः ।

खण्डनं तु पूर्ववत् । किंच – त्वद्रीत्या कामादेः स्वरूपात्मकत्वात् अनुकूल्यादिकं दुर्वचमिति दिगिति —

(कु०) जीवब्रह्मैक्यस्य शास्त्रकृतैव बादरायणेन श्रुतिसूत्रगीतासु 'जगद्व्यापारवर्ज' मित्यादिना प्रतिषिद्धत्वात् मुक्तावपि जीवानां भेदस्यैव सत्त्वात् परमात्मपरतन्त्रत्वस्य श्रुत्याद्यवगमेन च 'तेन विना न तृणमपि चलती' ति न्यायेन मुक्तानां सर्वव्यापारस्य परमात्मसङ्कल्पायत्तत्वसिद्ध्या भगवत्कामानुकूलकामत्वं युक्तमेवेति

पूर्वोक्तखण्डनस्य कस्यापि नात्रावकाश इति प्राग्वदित्युक्तिरयुक्ता। न चैक्याज्जीव-ब्रह्मणोरिदमखिलमयुक्तमिति वाच्यम् - तत्र प्रमाणाभावात्। न चास्ति तत्त्वमसी' ति वाक्यमिति वाच्यम् - तस्यैक्ये तात्पर्याभावस्य बहुधा निरूपितत्वात्।

किंच — तत्त्वमसीत्यत्र तदिति न प्रथमान्तं, न वा त्वमित्यनेन समानाधिकरणम्। किंतु द्वितीयान्तम्। तु अमसीति छेदः। तुरेवार्थे, 'अम गत्यादिष्वि' ति गत्यर्थकाम्धातोर्लटि मध्यमपुरुषः। तद्बलात्संबोधनबलाच्च त्वमिति लभ्यते। अयमर्थः - हे श्वेतकेतो सत्पदार्थमहिमज्ञानवान् त्वं, तत् = तु = सत्पदार्थं ब्रह्मैव अमसि प्राप्नोषीति। यथा - 'ब्रह्मविदाप्नोति पर' मित्यादेः प्राप्यप्रापकभावेन भेद एव तात्पर्यं, तथाऽस्य वाक्यस्यापि। 'ब्रह्मवि' दिति वाक्यं तु - स्वार्थविवरणपर 'सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां, परमे व्योमन्, सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते' ति मन्त्रस्वारस्येन भेदपरमित्यभ्युपगम्यते प्रामाणिकैः। मन्त्रस्तु भेदमेवाह जीवब्रह्मणोरित्यतिरोहितं सर्वेषाम्।

ननु — यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येत्, तत्केन कं जिघ्रेत्, तत्केन कं विजानीयात्, येनेदं सर्वं विजानाति तं च केन विजानाति, तं च केन विजानीयात्, विज्ञातारमरे केन विजानीया' (बृ० ४-५-१५) दिति मुक्तौ सर्वाभावप्रतिपादनपूर्वमात्मैक्यस्य श्रावितत्वेन तत्र भक्तिसद्भावः तत्कार्यभगवद्यजनादिकं च कथं संभवेदिति चेत् — शृणु — यदि मुक्तौ मुक्तानां ज्ञानादिधर्माभावतात्पर्यकत्वं 'यत्रे' ति वाक्यस्य; 'तदा - अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मे (४-५-१४) ति मुक्तस्य ज्ञानादिधर्मसद्भावप्रतिपादकपूर्ववाक्यविरोधः। अस्य त्वयमर्थः—अरे मैत्रेयि, अयमात्मा मुक्तो जीवः, अविनाशी = स्वरूपनाशाभाववान्, अनुच्छित्तिधर्मा = न उच्छित्तिः नाशो येषां ते अनुच्छित्तयः, नाशरहिताः, अनुच्छित्तयो धर्मा यस्य सः, अनुच्छित्तिधर्मा इति बहुव्रीहिगर्भबहुव्रीहिः। 'धर्मादनिच् केवला' दिति (५-४-१२४ पा०) अनिच्। नाशरहितधर्मवानिति॥ तस्मात् 'यत्र त्वस्ये' ति वाक्यस्य न सर्वाभावतात्पर्यकत्वं, किन्तु - केन कं पश्येत्, केन कं जिघ्रेत्, केन कं विजानीयादित्याक्षेपेण, पश्यति जिघ्रति जानातीत्यर्थः। तस्मात्सर्वं करणादिक-

मस्तीति तात्पर्यम् । अन्यथा - 'सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिते', त्यादौ सर्वकामानुभवः, मुक्तानां शतगुणितानन्दानुभवः, (तै० बृ०) जक्षन् क्रीडन्निति जक्षणादयश्च (छा० ८ अ०) उपनिषत्सु श्राविताः प्रकुप्येयुः, इति अनिष्टापादनारूपप्रसङ्गतात्पर्यकत्वम् । एवंजातीयेष्वन्यत्रापि एवमेव तात्पर्यं वर्णनीयम् ।

ननु — अनुच्छित्तिधर्मेत्यस्य न उच्छित्तिरनुच्छित्तिः, विनाशाभावः, स धर्मो यस्य सः = नाशाऽभावरूपधर्मवान् नाशरहित इति यावत् इत्यर्थ इति चेत्, न — अविनाशीत्यनेनैवास्यार्थस्य लाभेन अस्य विशेषणस्य वैयर्थ्यापातात् । न च अविनाशीति विकाररहित इत्यर्थकं, इदं तु स्वरूपनाशाभावरूपार्थलाभायाऽऽवश्यकमिति वाच्यम् - तर्हि 'अनुच्छित्ति' रित्येतावतैवेष्टसिद्धौ धर्मपदवैयर्थ्यात् । अविनाशीत्यस्यैव सर्वविधविकारशून्यार्थत्वाङ्गीकारे स्वरूपनाशाभावस्यापि तेनैव सिद्ध्या अनुच्छिधर्मेत्यस्यैव निष्प्रयोजनत्वादित्यलम् । नायं भेदो व्यावहारिको मिथ्येति शक्यं वक्तुं, मुक्तौ मायाया अभावादिति शास्त्रे विस्तृतम् ॥

(कौ०) यदुक्तं — किंचेत्यादि — (कु०) तदतिमन्दम् - नित्यवस्तुनोपि परमात्मनियम्यत्वस्य शास्त्रसिद्धत्वेन स्वरूपात्मकत्वेपि कामादेः तदानुकूल्यं सुवचं शास्त्रसिद्धत्वात् । सविशेषाऽभेदाङ्गीकारात् । उक्तं हि भवदाचार्यैरपि — 'भेदनिर्देशस्त्वभेदेप्युपचर्यते' 'स भगवः कस्मिन् प्रतिष्ठित 'इति स्वे महिम्नी' (छा० ७-२४-१) आत्मरतिः आत्मक्रीड' (छा० ७-२५-१) इति चैवमादिदर्शनादिति अविभागेने (४-४-४) तिसूत्रे। उपचारवचनं न सहन्ते भेदवादिन इत्यलमधिकेन ॥ इति अविभागाधिकरणविचारः ॥

---

## अथ तदोकोऽधिकरणविचारः (अ० ९)



तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया (४-२-१७)

(कौ०) इत्यादि सूत्राणां माध्वव्याख्यानं प्रायेणाऽस्माकमपि संवादित्वान्नोट्टङ्कयत इति यदाह कौस्तुभकृत् —

(कु०) सर्वमुच्छास्त्रं वदतो भवतः संवादविसंवादावकार्यकारिणाविति 'अस्माक' मित्यादिभाषणं तव न शोभनम् ॥

अतश्चायनेपि हि दक्षिणे (४-२-२१)

(कौ०) 'अत्युत्तमानां केषांचिन्न विशेषोऽस्ति कालत' (४-२-२१) इति नारायणाध्यात्म इति माध्वाः । खण्डनं प्राग्वत् । न हि ज्ञानिनो गमनादिकमस्ति, 'अत्र ब्रह्म समश्नुते' इति श्रुतेः । उक्तवचनानि तु ब्रह्मलोकाख्यगौणमुक्तिपराणीति दिगिति—

(कु०) इदं तदोकोधिकरणान्तिमसूत्रम् । प्राग्वदित्यसङ्गतं बोध्यम् । अधस्तादस्मत्कृततदीयखण्डनदूषणैरेव दूषितत्वात् ॥

यच्चोक्तं 'नहीत्यादि .... दि' गित्यन्तम् —

यद्यप्यत्र बह्वस्ति वक्तव्यम् । संक्षिप्य तु किंचिद्वदामः—ज्ञानिनां गमनं नेति तावच्छ्रुतिसूत्रगीतादिप्रमाणविसंवादगोचरः । "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहः, अन्ह आपूर्यमाणपक्षं, आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् (१) मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्थाः (छा. ५-१०) इति । ते य एवमेतद्विदुः, ये चामी अरण्ये श्रद्धां सत्यमुपासते, तेऽर्चिः....मासेभ्यः देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतान्पुरुषो मानवः (मानसः) एत्य ब्रह्मलोकान् गमयति, ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" (बृ. ६-२-१५) इत्यादयः श्रुतयो ज्ञानिनां गतिमाहुः । प्रवाहणो राजा पंचालानां वक्ता, गौतमश्वेतकेतू प्रति । मानसः ब्रह्मणा मनसा निर्मितः पुरुषः ।

उपकोसलविद्यायामपि अर्चिरादिमार्गः श्रूयते 'अर्चिषमेवाभिसंभवन्ति अर्चिषोऽहः (छा० ४-६-१५) इत्यादौ । एषु त्रिष्वपि ब्रह्मस्वरूपं तत्प्राप्तये गतिश्चोपदिश्यते । तत्र प्रथमवाक्ये, पूर्वोक्तप्रकारेण पञ्चाग्निविदां, श्रद्धापूर्वकतपःप्रभृतिनिवृत्तकर्मानुष्ठानपूर्वं भगवद्ध्यानिनां च अर्चिरादिमार्ग उक्तः । विद्युतं = तदभि-

मानिलोकम् । अभिमानी तु = भारती । तत्पुरुषः = भारतीपतिः, मानवः = वायुः । ब्रह्म गमयतीत्यस्य = परब्रह्म प्रापयतीत्यर्थः । सर्वत्रात्र पुनरावृत्त्यभावस्य श्रावितत्वेन परमात्माऽपरपर्यायपरब्रह्मप्राप्तिरेव श्रुत्यभिमतेति जानन्ति ब्रह्मविदः। बृहदारण्यके मानस इति क्वचित्पाठो दृश्यते । ब्रह्मणा मनसा सृष्ट इति तदर्थ इति केचित् । ब्रह्म गमयतीत्यस्य चतुर्मुखं प्रापयतीत्यर्थस्तु प्रकरणाननुगुणः । पुनरावृत्तिनिषेधविरुद्धश्च । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने' ति तत्प्राप्तुः पुनरावृत्त्युक्तेः ।

अयं भावः – सत्यकाम उपकोसलाय परब्रह्मस्वरूपं संपूर्णमुपदिश्य तत्प्राप्ति· साधनगतिमुपदिशति । सोऽमानवः पुरुषो ज्ञानिनोऽर्चिरादिलोकाभिमानिसहित उपर्युपरि लोकान्नयन् परं ब्रह्म प्रापयति । तत्तल्लोकाभिमानिदेवानामुपर्युपरि लोकप्राप्तिहेतुत्वेन, ब्रह्मप्राप्तिमार्गत्वेन च देवपथो ब्रह्मपथ इति नाम्नाऽस्य श्रुतौ प्रसिद्धिः। देवयान इत्यपि व्यवहारोऽस्य । अतः सत्यलोकाधिपतिं कार्यब्रह्माणं प्रापयतीत्यर्थं वर्णयित्वा तल्लोकगमनोपदेशोऽयमिति न युक्तम् । ब्रह्मप्राप्त्यनन्तरं न पुनरधोलोकमायान्ति ज्ञानिन इति 'एतेने' त्यादिवाक्यशेषेणाऽवसीयते । अर्चिरादिमार्गेण परं ब्रह्म प्राप्ता इमं मानवमावर्तं संसारं नावर्तन्ते नाप्नुवन्तीति तदर्थः । परब्रह्मप्राप्तिमार्गोपदेश एवानेन कृत इति ॥ 'अत्र ब्रह्मसमश्नुत' (बृ० ६-) इत्यत्र मार्गानुक्तिस्तु – शाखान्तरे विद्यान्तरे च प्रतिपादितत्वान्मार्गस्येति बोध्या । अतएव – चतुर्लक्षण्यां तुर्यतृतीयपादारंभस्सार्थकः। यदि – ज्ञानिनां ब्रह्मप्राप्तौ न गमनमपेक्षितं, तर्हि स पादोऽनारंभणीय एव स्यात् । एतच्छ्रुत्यर्थाऽपरिज्ञानेनाज्ञता च स्यात् सूत्रकारस्य । मार्गोपदेशस्यान्यविषयकत्वकल्पने श्रुतिसूत्रादिकं न दृढं मानमुपलभ्यते ।

न च – 'न तस्य प्राणा उत्क्रामन्ती (बृ० ४-४-६) ति मुक्तस्य प्राणोत्क्रमणाऽभावबोधकं वाजसनेयिनामाम्नायवचनम् । तत्रैव 'ब्रह्मैव सन् ब्रह्माप्ये' तीति मुक्तस्य ब्रह्मभावापत्तिवचनं च गमनाभावे सद्यो मुक्तौ च मानमिति वाच्यम् । कामिनां यथा पुनरागमनहेतुभूतमृतिः तथा अकामत्वादिविशिष्टपुरुषस्य पुनरागमनाय न मृतिरिति उत्क्रमणाऽभावबोधक 'न तस्ये' ति वाक्यतात्पर्यात् । (कामानुकूलकर्माणि कर्तुमिमं लोकं अकामयमाना नागच्छन्तीति) तर्हि ते किं न म्रियन्त इत्यत आह - ब्रह्मैव सन्नित्यादि । जीवभावाऽपरित्यागेनैव परं ब्रह्म प्राप्नोतीत्यर्थः । मुक्तो भूत्वा प्रलये भगवदुदरं

विशतीति तात्पर्यम् । अत्रार्थे मन्त्रमुदाहरति - तदेष इति । 'तदेष श्लोको भवति - यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुत ' इति । अस्य अकामयमानस्य मुमुक्षोः सर्वे कामाः यदा प्रलीयन्ते । अथ सर्वकामविलयात्परं मर्त्यः पूर्वं मरणशीलो विलीनसर्वकामः, अमृतः जन्मान्तराधायकमृतिरहितः । तर्हि कथं कुत्रास्ते इत्यत आह - अत्र ब्रह्मेति । परं ब्रह्म प्राप्य भगवदुदरे वर्तत इत्यर्थः । अथवा — अत्र = इह जन्मन्येव मुक्तो भवतीति । अत्र मार्गमकथयतो वेदपुरुषस्याशयः । शाखान्तरे विद्यान्तरे चोपदिष्टो मार्गो ग्राह्योऽविरोधादिति । अतः — ' अत्र ब्रह्मे ' ति वाक्यं न ज्ञानिनां गमनाभावबोधकम् । न सद्यो मुक्तिबोधकम् । ततो गतिः क्रममुक्तिश्च सिद्धा ॥

किंच — प्राणा उत्क्रामन्त्येवेत्यङ्गीकार्यं अत्रोपनिषदि दर्शितदृष्टान्तबलेन । तथाहि— 'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते' (बृ.४-४) इति दृष्टान्तवाक्यम् । ब्रह्मभावं प्राप्तः सर्वात्मना मुक्तो यदि अस्मिन्नेव शरीरे वर्तेत, तर्हि पुनः संसारित्वमेव तस्य स्यादिति आक्षेपपरिहारायायं दृष्टान्त उपन्यस्तः। अस्यायमर्थः — अहिः आत्मना विनिर्मुक्तो निर्मोकः निर्जीवो (मृतः) सर्पेण च परित्यक्तः वल्मीके शयीत (वर्तेत), एवं इदं शरीरं सर्पस्थानीयेन मुक्तेन अनात्मभावेन परित्यक्तं मृतमिव शेते इति । अस्य पर्यालोचनायां आत्मना त्यक्तदेहे पुनरात्मनो वर्तनस्याऽसंभावितत्वेन अत्र देहे त्वदभिमतसर्वात्मभावरूपमोक्षानुपपत्तेः आत्मना त्यक्तदेहात्प्राणानामपि उत्क्रमणमपि युक्तमेव । अनुत्क्रमणवचनं तु सर्वसाधारणमरणाऽभावपरमिति जानन्तु कोविदाः । अतो नेदं वाक्यं गमनाभावसाधकम् । मुक्तव्यवहारस्तु निवृत्तसर्वकामतया मुक्तसादृश्येन । भगवत्प्राप्तिस्तु देहपातानन्तरं अर्चिरादिमार्गेणैव । देहपातात्पूर्वं न भगवत्प्राप्तिः, ऐक्यं तु न मोक्ष इति प्रागेव निरूपितम् । किंच — एतद्देहावच्छिन्नस्य विशिष्टत्वेन विशिष्टशुद्धयोरैक्यायोगात्, सर्वात्मभावरूपमोक्षोऽनुपपन्न एवेत्यलं पल्लवितेन ॥

यच्चोक्तम् — उक्तवचनानि तु ब्रह्मलोकाख्यगौणमुक्तिपराणीति दिगिति — परब्रह्म प्रकृत्य प्रवृत्तत्वादुपनिषद इदमसङ्गतं बोध्यम् । गीताचार्योऽपि भगवान् अर्चिरादिमार्गेण गतानां ज्ञानिनां न पुनरावृत्तिरित्याह —

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" (गी. ८-२४) इति ।

एतेन क्रममुक्तिरेव न सद्योमुक्तिरित्युक्तं भवति ॥ इति तदोकोऽधिकरणविचारः ॥

## अथ योग्यधिकरणविचारः ( १० अ.)

योगिनः प्रति स्मर्येते स्मार्ते चैते (४-२-११)

(कौ०) 'अननुस्मरतः काले स्मरणं प्राप्य वै गति' रित्यध्यात्म इति । खण्डनं तु प्राग्वदिति —

(कु०) पूर्वाधिकरणे गमनस्य सहेतुकं सिद्धान्तितत्वेन गमनाभावो दूषित इति दीक्षितोक्तमिदमसङ्गतं बोध्यम् ॥ इति चतुर्थस्य द्वितीयः पादः ॥

---

## अथ तुर्यस्य तृतीयः पादः

(कौ०) मार्गो गन्तव्यं च निरूप्यते इति माध्वाः । मार्गश्च गौणमुक्तेरेव, परममुक्तेस्तु न संभवतीति प्रागेवोक्तमिति —

(कु०) गौणमुक्तिरिति शास्त्रे क्वापि न व्यवहार उपलभ्यते । श्रीनारायण-पदप्राप्तिः मोक्ष इति श्रुतौ सूत्रे गीतायां च स्पष्टमभिधीयते ।

'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥"

इति वचनेन परमात्मप्राप्तेरेव मोक्षत्वोक्तेः । ये महात्मानो मां प्राप्य वर्तन्ते ते पुनर्जन्म न प्राप्नुवन्ति, संसारिणो न भवन्ति । कुत इति चेत्, यतस्ते परां सिद्धिं मोक्षं गताः । अतो भगवत्प्राप्तेरन्या न परब्रह्मप्राप्तिरिति सर्वशास्त्रसिद्धान्तः । श्रुतिस्मृतिसूत्राणि भगवत्पदप्रेप्सुज्ञानिसामान्यविषयाण्येव, न तु चतुर्मुखप्राप्तिविषयाणि । तत्प्राप्तेरपि तटिदादिवन्मार्गकोटिप्रविष्टत्वेन मुक्तित्वाभावात् । सर्वमिदं पूर्वपादान्त एव निरूपितं विस्तरेण । अतो 'मार्गश्चेत्यादि' दीक्षितोक्तिरसाध्वी ॥

यदपि — सूत्राणां पाठोऽर्थश्च प्रायेण संवादी क्वचित्तु विशेष इति—

इदमपि वचनं न श्रद्धेयं, सर्वं मिथ्येति वादिनोऽस्य दीक्षितस्य एतत्संवाद-विसंवादावकिंचित्करावित्यधस्तादेवाऽवोचाम ॥

यदपि "अतिवाहिकः" 'आतिवाहिका' इति माध्वात्प्राचां पाठ इति—

इदमपि न युक्तं पाठसाधुत्वाऽसाधुत्वनिर्णयेऽल्पज्ञत्वेनाऽस्याऽनधिकारात् ॥

(कौ०) ततो वायुं परं प्राप्य तेनैति पुरुषोत्तम' मिति माध्वा इति। पादार्थखण्डनं प्राग्वदिति —

(कु०) अत्र एवंवदताऽनेन श्रीव्यासोऽपर्यालोचयन् श्रुत्यादिकं शास्त्रं पाद-मेतमतानीदिति सूचयता शास्त्रप्रवर्तकमूलाचार्या एव प्रदूषिता भवन्तीति विदन्ति विपश्चिद्वराः। आचार्यदूषणं तु सर्वेभ्यो दोषेभ्यो महापातककृदिति शास्त्रविदां निर्णयः। आचार्यं दूषयता साकं संलापो न कार्य इति शास्त्रमनुसरन् एतावतैवाल-मिति मन्ये। एतत्पदार्थस्तु भगवत्प्राप्तिलक्षणमोक्षस्य मार्गनिरूपणमिति स्पष्टं सर्वेषाम्। ज्ञानिनां गतिरेव न मोक्षप्राप्ताविति तेनोक्तत्वेन पादार्थभूतगमननिरूपणं खण्डितं भवतीति तदाशयः। गतिर्नेति तु उच्छास्त्रमिति पूर्वपादान्तेऽस्माभिर्निपुणं निरूपि-तत्वेन तेनेदं खण्डनं खण्डितं भवतीति सुधियो विभावयन्तु ॥ इतिशम् ॥

इति तुर्यस्य तृतीयः पादः।

---

## अथ चतुर्थाध्यायस्य चतुर्थः पादः।

## अथ सम्पद्याधिकरणविचारः (१)

"संपद्याविर्भाय स्वेन शब्दात्" (४-४-१)

(कौ०) अत्रायं निर्गलितोऽर्थः — सायुज्यमुक्तिभाजो देवाः, स्वोत्तमदेवता-ऽनुप्रवेशक्रमेण, भगवद्देहमनुप्रविश्य, ग्रहावेशन्यायेन भगवद्देहेन्द्रियैस्तद्भुक्तानेव भोगान्, कदाचिद्बहिर्निर्गत्याऽऽत्मस्वरूपाभिन्नैश्चिन्मात्रदेहेन्द्रियैः स्वसङ्कल्पोपनतान् भोगान् भुञ्जानाः, आनन्दवल्ल्युक्तक्रमेण स्वरूपानन्दज्ञानैश्वर्यभोगेषु चोत्तरोत्तरंशतगुणोत्कृष्टाः, पूर्ववदेव मुक्तावपि, यथास्वं ब्रह्मेन्द्रवरुणचन्द्रसूर्यादितत्तदाधिकारिकदेवतापदं, तदनु-सारिणमुत्तमाधमभावं पूज्यपूजकभावा (वत्वा) दिव्यवस्थां चाऽनुभवन्तो विहरन्ति।

देवव्यतिरिक्तास्तु—सालोक्यादिमुक्तिभाजो, यथाधिकारं भूरादिषु सप्तसु लोकेषु, भगवल्लोकेषु च, स्थितानि भगवतः स्थानानि प्राप्य, स्वेच्छया गृहीतबाह्यदेहैः, चिन्मात्रदेहैर्वा, स्वसङ्कल्पोपनतान् भोगान् भुञ्जानाः पूर्ववत् वर्णाश्रमादिभेदं तदनुसारिणीं पूज्यपूजकत्वादिव्यवस्थां, ज्ञानानन्दैश्वर्यभोगतारतम्यं च, प्राप्य विहरन्ति ॥

न चैवं मुक्तानां तारतम्यवत्त्वे तद्दर्शनकृतदुःखद्वेषेर्ष्यादिभिर्मुक्तेरपुरुषार्थत्वप्रसङ्गः - निर्दोषाणां तेषां गुरुशिष्यवत्तदप्रसक्तेः । मुक्तानां चाऽन्तःकरणाऽभावाच्च । ईर्ष्यादीनामन्तःकरणधर्मत्वेन तदभावेऽसंभवादिति माध्वमतमिति —

(कु०) अत्रेदं वक्तव्यम् — स्वोत्तमदेवतानुप्रवेशस्तावदसङ्गतः ; इन्द्रं मित्रमित्युपक्रम्य 'एकं सद्विप्रा बहुधा वदन्ती' ति श्रुत्याऽद्वैतस्यैव लाभात् । तस्य समर्थितत्वाच्च । (१) भगवद्देहमित्यप्यसङ्गतम् ; 'अपाणिपाद' (मु-१-७) मित्यादिश्रुतेः । ननु - प्राकृतपाणिपादाद्यभावविषयिणी सा, भगवद्देहस्तु सच्चिदानन्दमात्रम्, पाणिपादादयोऽप्येवम् । उक्तं हि - भारततात्पर्यनिर्णये - 'आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा' इति । अतो नोक्तदोष इति चेत्; मैवम् - लोकवेदाधिकरणविरोधात् । देहशब्दस्य करपादादिशब्दानां च लोकेऽन्यत्रैव शक्तिग्रहात् । (२) अनुप्रविश्येत्यप्यसङ्गतम् ; भगवद्देहतदवयवानां व्यापकतयाऽणूनां जीवानां सर्वदा तत्संबन्धसत्त्वात् । एवंच भगवद्देहेन्द्रियैरित्यप्यसाधु ; चक्षुरादिशब्दानामिन्द्रियशब्दस्य चान्यत्रैव शक्तिग्रहात् । (३) भगवद्भुक्तेत्यपि असाधु ; भोगस्यापि तत्स्वरूपात्मकतया तत्कर्तृकभोगविषयत्वस्य भोग्येषु बाधात् । (४) बहिर्निर्गत्येति तु सुतरामसाधु ; सर्वव्यापकादन्तर्यामिणो बहिर्भाग (व) स्यैव दुर्वचत्वात् । (५) चिन्मात्रदेहेन्द्रियैरित्यपि न ; तृतीयार्थस्य करणत्वस्य बाधात् । (६) स्वसंकल्पेत्यपि न ; मुक्तावन्तःकरणाभावेन तद्धर्मसङ्कल्पाऽयोगात । स्वरूपमात्रस्य चातिप्रसक्तत्वात् । (७) पूर्ववद्वर्णाश्रमादिभेदमित्यपि न ; ब्राह्मणत्वादीनां स्थूलशरीरधर्मत्वात् आश्रमाणामपि 'अष्टवर्षं ब्राह्मणमुपनयीते' त्यादिपर्यालोचनया तथात्वात्, अन्यथा लोकवेदाधिकरणविरोधध्रौव्यात् । (८)

अपिचैवं जीवस्यैव वर्णाश्रमकरचरणादिसकलकर्मज्ञानेन्द्रियसहितदेहरूपत्वं, तेनैव देहेन स्वप्ने मुक्तौ च व्यवहार इति वदतो देहात्मत्वादिमतप्रवेशः । (९)

किंच – 'आदत्ते हरिहस्तेने' त्याद्यपि त्वदुक्तं दुरुपपादम् - स्वगतभेदविरहाऽभ्युपगन्तुस्तव उक्तव्यवस्थानुपपत्तेः । अभेदे हि 'हस्तचक्षुरादिना गच्छति, मुखपादादिनाऽऽदत्ते, करपादादिभिः पश्यति' इत्यादिसङ्करः स्पष्ट एव । (१०)

नन्वेतत्सर्वं विशेषबलेन समाधास्यामीति चेत्, न - विशेषशब्दस्यापि स्वरूपमात्रपरतया करचरणादिशब्दतौल्यात् । (११)

तस्मात् श्रुतिस्मृतिन्यायविरुद्धत्वान्माध्वोक्तं मोक्षरूपफलं दुरुपपादमिति स्थिते तादर्थ्येन समन्वयाऽविरोधसाधनानामपि अविचार्यतया शास्त्राऽनारंभ एव पर्यवस्यति । प्रागुक्तरीत्या त्वदभिमतसमन्वयादयोऽपि दुरुपपादा इति सहृदयैराकलनीयम् ॥

(कौ०) यत्तु – चतुरकमठमाठरेत्यादिसर्वलोकाऽप्रसिद्धवचनानां साक्षितयोपन्यासात् तत्प्रयुक्तां स्वाऽनाप्तत्वशङ्कां परिहर्तुं हनुमद्भीमसेनक्रमेण वायोः स्वयं तृतीयावतार इत्युद्घोष्य, तत्र साक्षितया 'बलित्था, प्रथमो हनुमा' निति श्रुतिस्मृत्युदाहरणं तदनुसारि 'यस्य त्रीणी' ति पद्यनिर्माणं चासङ्गतम् । धातुद्वयादेकः सुच् प्रत्यय इति तच्छ्लोकव्याख्यातारोऽनभियुक्ता इति, श्रुतिस्तु आग्नेयीति चेत्यादि "—

(कु०) अत्रोच्यते – यत्तावदुक्तं 'स्वोत्तमदेवताऽनुप्रवेशोऽयुक्तः, इन्द्रं मित्रमित्यादिश्रुत्याऽद्वैतस्यैव लाभा' दित्यादि प्रथमदूषणं तदयुक्तम्—तया च श्रुत्या सूर्यस्याऽग्नेर्वा 'तत्तद्गुणयोगेन इन्द्राद्यभेदबोधनात्' इति सायणोक्तेः, सिंहो माणवक इत्यादाविवेन्द्राद्याऽऽदित्ययोः इन्द्राद्यग्न्योर्वा गौणाऽभेदस्यैव प्रतीत्या वास्तवाभेदाऽप्रतीतेः, परमात्माऽभेदस्य सुतरामप्रतीतेः ।

न च – इन्द्रादीनामादित्यस्य वा परमात्माभेदात् 'तदभिन्नाऽभिन्नस्तदभिन्न' इति न्यायेन परमात्माऽभेदसिध्यतीति वाच्यम् – सर्वस्य परमात्मत्ववादिनो मत एतन्न्यायस्वीकारस्य अनावश्यकत्वात् । जडविषय एवायं न्यायः प्रवर्तेत, न चेतनविषय इति मञ्जूषादावभिधानाच्च । 'तत्तद्गुणयोगेने' त्यादि सायणोक्तेः इन्द्रादिपदानि यौगिकानि आदित्यविशेषणानि, आदित्यस्य सर्वगुणवत्त्वमनया श्रुत्या बोध्यते, न त्वभेदो देवतान्तरेणादित्यस्येति शक्यं वक्तुम् ॥

किं च – परमात्मवाचकपदाश्रवणात् सर्वस्य भगवदभेदो बोध्यत इति न तरां शक्यं वक्तुम् । न च – 'एकं स' दिति सत्पदश्रवणात् परमात्मलाभ इति वाच्यम् - तस्य 'सन्त' मिति सायणे व्याख्यातत्वेन तस्य आदित्यविशेषणत्व- मेव, न परमात्मपरत्वमिति वक्तव्यत्वात् । अनुक्रमणिकायां 'इन्द्रमित्र' मिति द्वयोः सूर्य ' इत्युक्तेरिन्द्रादिपदानां आदित्यविशेषणत्वमेव न्याय्यं, न तु तत्तद्देवता- परत्वम् । अतो नाऽभेदपरता तच्छ्रुतेः । एतेन अग्निपरत्वेन योजनमपि चिन्त्यमेव । व्याख्यातरि गौरवात अग्निपरत्वमपीति अङ्गीकारे अन्यैरपि श्रुतिवाक्यं यथेच्छं योजयितुं शक्यं यथाप्रमाणम् ॥

किं च–भवताऽत्र विवक्षितोऽभेदः किं विशिष्टानामिन्द्रादीनां शुद्धेन, अथ - शुद्धानां शुद्धेन, नोभयम । विशिष्टशुद्धयोरैक्यायोगात्, अनुपपत्तेरभावाल्लक्षणायो- गाच्च । तत्तद्देवतोद्देश्यकयागाऽसिद्धेश्च । विस्तरस्तु - आकरे, मामके 'श्रीव्यासपाणि- भावनिनिर्णये ' च द्रष्टव्यः । अत्रापि निरूपितं चेतनैक्याऽसाङ्गत्यम् ।

ननु – 'एकैव वा महानात्मा देवता, स सूर्य इत्याचक्षते ' इत्युक्तत्वात् सूर्य एव परदेवता, तदभेदं इन्द्रादीनामाहैषा श्रुतिरिति इन्द्रादीनां परमात्माभेद- स्सिद्ध इति चेत्, उच्यते - स सूर्य इत्यत्र सूर्यपदस्य सूर्यान्तर्यामी नारायण इत्यर्थो न तु प्रसिद्ध आदित्यमण्डलाभिमानी । 'यदादित्यगतं तेजो जगद्भासयतेऽ- खिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् " (गी० १५ - १२) इति सूर्यादिदेवतातेजसो भगवदधीनत्वोक्तेः, 'न तद्भासयते सूर्यः ' (गी० १५ ६) इति सूर्यतेजसा परमात्मनोऽप्रकाश्यत्वोक्तेः, 'भीषोदेति सूर्यः ' (तै० उ० २) इति परमात्मनस्सकाशात् भीत्या सूर्य उदेतीत्युक्तेः, 'य आदित्ये तिष्ठन् .... .... य आदित्यं यमयती ' (बृ० ५ - ) ति सूर्यस्य परमात्मनियम्यत्वोक्तेश्च प्रसिद्धसूर्यस्य महात्मत्वाभावात् .सूर्यपदं तदन्तर्यामिनारायणपरमेवेति नाऽऽदित्यस्य सर्वात्मत्वम् । महात्मत्वाभिधानं समस्तशास्त्राऽविमर्शमूलमाग्रहमूलकं वेति विजानन्तु विबुधाः । एवं च–इन्द्रं मित्रमितिश्रुत्याऽ 'द्वैतस्य लाभात्, तस्य समर्थितत्वाच्चे ' ति - यदुक्तं— तत्तुच्छम् । अद्वैते नेयं श्रुतिः प्रमाणम्, अद्वैतसमर्थनं च निष्प्रमाणमिति निरूपितत्वाच्चाधस्तात् ॥ (१)

'भगवद्देहमित्यसङ्गतम्। अपाणिपादमित्यादिश्रुते' रित्याद्यपि अतितुच्छम् — 'तत्र श्रुतौ विरोधाभासालङ्कारदर्शनात्। प्रस्तुतवस्तुगतसामर्थ्याऽतिशयप्रतिपादिकैव सेति वक्तुं शक्यत्वात्। वर्णयन्ति हि कवितरा राजादौ वर्णनीये गुणाऽतिशयं एवंरूपेणैव। यथा श्रीहर्षः —

'प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक् चारदृगप्यवर्तत'॥ इति।

अत्र — मित्रजिदपि अमित्रजिदिति आपाततो विरोधप्रतीतावपि सूर्याद्यपेक्षया महाप्रतापवान् सर्वशत्रुतापनोऽयं राजेति, चारदृष्टिरपि विगतचारदृष्टिरित्यर्थक-विचारदृक्चारदृगपी' ति आपाततो विरोधप्रतीतावपि चार(दूत)वचनमात्रेण न विषयनिर्णेता भवति राजा, अपितु — सभायां वादिप्रतिवादिवादप्रतिवादं सभ्यैस्सह यथान्यायं विचार्य विषयस्य निर्णेतेति महागुणवानिति प्रतिपाद्यते।

एवं 'तदपाणिपाद' मित्यस्य प्राकृतपाणिपादरहितमित्यर्थः। दिव्यन्तु तदस्तीति तात्पर्यम्। अन्यथा 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति (श्वे० ३-१६) सहस्रशीर्षा, सहस्राक्षः सहस्रपात्, (१४) सर्वाननशिरोग्रीव' (श्वे० ३-११) इत्यादौ पाणिपादाद्युक्तिः कथं सङ्गच्छते। देहोऽपि चिदानन्दमयः प्राकृतेन्द्रियाविषयो भगवतोऽस्तीति वेदितव्यम्॥

'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति (श्वे० ३-१९) श्रुतिर्विरोधोक्त्या प्राकृतेन्द्रियाभावेऽपि चिन्मात्रेन्द्रियवत्त्वमाह। तद्दर्शनं अहिपादवदतिसूक्ष्मत्वात् वयन्तु नाधिकारिणस्तद्द्रष्टुं, योगिनस्तु पश्यन्त्येव चिदानन्दस्वरूपं भगवन्तम्। न चैतानि सविशेषब्रह्मपराणि, 'अपाणिपाद' मित्यादि तु निर्विशेषब्रह्मपरमिति वाच्यम् - ईदृशब्रह्मद्वयं न शास्त्रे क्वापि प्रतिपादितम्। शास्त्रसिद्धं तु ब्रह्मैकमेव सविशेषमिति वेदवादिनः। निरूपितमिदमधस्तात्। इतिहासादौ च प्रत्येकं भगवतः पादाद्यवयवानां विशिष्टरूपस्य च चिन्तनीयत्वोक्तेः। भगवत्पादारविन्दप्राप्तेः—

'स वै महाभागवतः परीक्षित् येनाऽपवर्गाख्यमदभ्रबुद्धिः ।

ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्' (भाग० १-१८-१६)

इत्यादिना मोक्षत्वाऽभिधानाच्च । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।' (मा० ३·४) इति शिरआदिश्रवणाच्च । न चेदं ब्रह्माऽन्यपरमिति वाच्यम् — अन्यस्यापि परमात्मत्वेनाऽदोषात् । वैश्वानरविद्यायां 'मूर्धा त्वेष आत्मन इति होवाच' (छा० ५-११-१) इत्यादिना भगवतो मूर्धाद्यवयवसद्भावावगमाच्च ॥ २ ॥

यच्चोक्तं लोकवेदाधिकरणविरोध इति — तच्च मीमांसकग्रन्थाऽर्थापरिज्ञाननिबन्धनम् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः' इति मीमांसकोक्तरीत्या लोकसिद्धव्युत्पत्तेरेव 'उत्ताना वै देवगवा वहन्ति' इति वैदिकगोशब्दस्याप्यर्थोपस्थापकत्वं, न त्वत्र यत्नान्तरमास्थीयत इति हि तदधिकरणतात्पर्यम् । एवंच — लौकिका ये पदपदार्थास्त एव वैदिका इति सिध्यत्येकस्मिन्वर्णके । प्रकृते भगवत्करचरणादीनां शाश्वत आनन्दमात्रत्वेऽपि करादिपदानां करत्वाद्यवच्छिन्नार्थकत्वमेवेति न लोकवेदाधिकरणविरोधः । लौकिकवैदिकपदजातबोध्यशक्यतावच्छेदकदेहत्वादेः समत्वात् । यथा लोकवेदयोः प्रयुक्तस्य गोशब्दस्य गोत्वं तदवच्छिन्नव्यक्तिः समानम् । तत्र - इयांस्तु विशेषः — लौकिकगवीनामनुत्तानवहनकर्तृत्वम् , वैदिकगवीनां कासांचिदुत्तानवहनकर्तृत्वम्, 'उत्ताना वै देवगवा वहन्ती' ति श्रुतिप्रमितम् । नैतावता लौकिकवैदिकगोशब्दार्थभेदः । उक्तं च वार्तिके (जै० १-३-१०) लोकवेदाधिकरणे —

यथा श्रुतगवादीनां यापि वाच्यान्तरे श्रुतिः ।
अर्थैकत्वाविरोधेन गुणमात्रान्यता परा ॥

यथा हि वामना गावो नराः छिपिटनासिकाः ।
कर्णप्रावरणाश्चान्ये नरार्थत्वाच्च न च्युताः ॥

एवं सत्येव गोत्वादौ धर्मो यदि विलक्षणः ।
नैतावताऽर्थभेदोऽस्ति विशेषाऽनभिधानतः ॥ इति ।

सर्वमिदं 'परमतः' (३-२-१६) कार्याख्यानात्' (३-३ ११) इत्यधिकरणयो-र्भाष्यटीकादौ तर्कताण्डवे ( २ - परि० ) स्पष्टम् ॥

भगवतो देहादिकं तु —

न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा ।
सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ॥

सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ॥ भाग० (१०-३-१३)

इत्यादिपरस्सहस्रवचनैश्चिदानन्दरूपमिति जानीमः । ततश्चात्र देहादिपदजातस्य लोकविरुद्धार्थे न शक्तिः कल्पितेति 'लोकवेदे' ति न्यायविरोधोद्भावनमज्ञानाऽऽ-ग्रहादिमूलकमेव ॥

किंच — न्यायोऽयमसार्वत्रिकः, तथाहि - त्रिवृच्चर्वादिपदस्य लोके त्रैगुण्य-स्थाल्यादिषु प्रयुक्तस्यापि वेदे स्तोत्रीय - नवक - ओदनादिवाचित्वं वाक्यशेषबलात् त्रिवृच्चर्वाऽश्ववालाधिकरणे ( १-३-४ ) निर्णीतमिति व्यभिचारदर्शनात् । स्पष्टं चेदं शास्त्रदीपिकादाविति न तन्न्यायावकाशोऽस्त्यपि शक्यं वक्तुम् ॥

एतेन — 'एवंच भगवद्देहेन्द्रियैरित्यपि असाधु, चक्षुरादिशब्दानामिन्द्रिय-शब्दस्यचाऽन्यत्र शक्तिग्रहात्' इत्युक्तिरपि परास्ता । चक्षुरादिशब्दानां वैदिकाना-मपि चक्षुष्ट्वाद्यवच्छिन्ने इन्द्रियत्वावच्छिन्न एव च शक्त्यङ्गीकारात् । प्राकृतत्वादेः शक्यतावच्छेदककोट्यप्रवेशात् । 'अन्यत्रैव शक्तिग्रहा' दिति — लोकतन्त्रन्याया-ज्ञाननिबन्धनम् ॥ 'भगवद्देहादीनां व्यापकत्वेन अणूनां जीवानां सर्वदा तत्संबन्ध-सत्त्वात् अनुप्रविश्येत्याद्यसङ्गत' मिति यदुक्तम् — तत्तु श्रुत्यन्तार्थाऽपरिचयमूलकम् । तथाहि — भगवत्सृष्टवस्तुसामान्यस्य भगवत्संबन्धो नित्यमस्त्येव । 'तत्सृष्ट्वा तदेवानु-प्राविशत् ( तै० उ० ) विष्टभ्याहमिदं कृत्स्न' मित्यादिगीताद्युक्तेः । अन्यथा तत्सत्तैव दुर्लभा । परंतु न स संबन्धो मौक्तिकसुखानुभवप्रयोजकः, किन्तु शास्त्र-श्रवणाभ्यासजन्यपरोक्षाऽपरोक्षज्ञानहेतुकभगवत्प्रसादाऽऽविर्भूतनिजस्वरूपस्य परमात्मना संबन्ध एव । यथा अद्वैतमते जीवब्रह्माऽभेदस्य सदातनत्वेन नित्यत्वेऽपि तज्ज्ञान

न मोक्षहेतुः, किंतु शास्त्राचार्योपदेशादिना जाताऽपरोक्षस्यात्मैकत्वविज्ञानं मोक्षहेतुः। अन्यथा शास्त्रप्रवृत्तिर्व्यर्था, विफलश्चाचार्याणां प्रयत्नः। यथा वा व्यापस्य ब्रह्मणोऽणुपरिमाणवस्तुनि प्रवेशः 'अणोरणीया' नित्यादिश्रुतिबलादङ्गीक्रियते। तथाऽणोर्जीवस्यानुप्रवेशो व्याप्ते परमात्मनीति यथाशब्दमङ्गीकार्यमागमैकगम्ये इति हि ब्रह्मविदां मर्यादा। अतएव – 'संहृत्य सर्वं निजदेहसंस्थं कृत्वाप्सु शेते जगदन्तरात्मा' इति सृज्यसर्ववस्तुजातस्य प्रलये भगवदुदरप्रवेशनोक्तिः सङ्गच्छते। अत्र ईश्वरीयविचित्रविविधशक्तिरेव कारणं नान्यत् ॥ ३ ॥

'भगवद्भुक्तेत्यादि चासाधु' – इति यदुक्तं - तदयुक्तम् —

विशेषबलेन भोगस्य तत्स्वरूपत्वेपि तद्विषयत्वस्य भोग्येषु निराबाधत्वात्। 'सत्यं ज्ञानमित्यादिश्रुत्या भगवतो ज्ञानस्वरूपत्वे तदीयज्ञानविषयताया ज्ञेयेषु सत्त्वाभ्युपगमात् ॥ ४ ॥

'बहिर्निर्गत्येत्यादिसुतरामसाधु' इति तु मन्दम् – उदरप्रवेशं वदतां मते उदराद्बहिर्निर्गत्येत्यर्थो, न तु परमात्मनो बहिरिति। अतः – 'अन्तर्यामिणो बहिर्भागस्यैव दुर्वचत्वा' दिति हेतुकथनं वाक्यार्थाऽज्ञाननिबन्धनम्। स्वानुवादविरुद्धं चेदम्। तस्मान्मुक्तानां भगवदुदरप्रवेशनिर्गमौ भगवत्संकल्पाधीनसंकल्पनिमित्तकौ युक्तावेव ॥ ५ ॥

यदपि—चिन्मात्रदेहेन्द्रियैरित्यपि न तृतीयार्थस्य करणत्वस्य बाधादित्युक्तम्—

असङ्गतमेतत् – कर्तृत्वकर्मत्वादिवत् तस्यापि संभवात, 'स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादिना मुक्तानां जक्षणादिव्यापारस्य दर्शितत्वेन मुक्तौ च प्रकृतिसंबन्धाभावात्। अप्राकृतकरचरणादीनां सत्तायाः, तेषां च करणत्वस्य चाऽवश्यमभ्युपेयत्वात्। अभ्युपगतं च जक्षणादि मुक्तानामपि शंकराचार्यैः इति 'एवमप्युपन्यासा' (४-४-७) दिति सूत्रभाष्यतोऽवसीयते। मुक्तिभेदादिकल्पनं चाप्रामाणिकमित्यभिहितं पुरस्तात् ॥ ६ ॥

यदपि स्वसंकल्पेत्याद्यपि न मुक्तानन्तःकरणस्याऽभावेन तद्धर्मसंकल्पायोगात् स्वरूपमात्रस्यानतिप्रसक्तत्वादिति —

इदमप्यसङ्गतम् — श्रौतेऽर्थे युक्तिविरोधो न प्रसरतीति तान्त्रिकसमयात् । मनोवत् अप्राकृतान्तःकरणसत्वाभ्युपगमे बाधकाभावात् । 'प्राकृतसङ्कल्पविलक्षणत्वात् मुक्तसङ्कल्पस्ये' ति भवदाचार्यवचनात् प्राकृतान्तःकरणविलक्षणान्तःकरणवत्त्वं मुक्तानां, तदभावेऽपि संकल्पस्तेषामिति वा वक्तुं शक्यत्वाच्च । अतः स्वमतीयभाष्यादिकमनवलोक्यैवोत्सृङ्खलमुन्मत्तवद्यथेच्छं प्रलपति भट्टोजिरिति वेदितव्यम् ॥ ७ ॥

यदपि — पूर्ववद्वर्णाश्रमभेदेत्याद्यपि न, ब्राह्मणत्वादीनां स्थूलशरीरधर्मत्वात् । 'अष्टवर्षं ब्राह्मणमुपनयीते' त्यादीनां पर्यालोचनया तथात्वात् । अन्यथा - लोकवेदाविकरणविरोधध्रौव्यादिति—

तदप्ययुक्तम् — स्वरूपात्मकानां ब्राह्मणत्वादीनां अभ्युपगमात् । मुक्तौ उपनयनादिसंस्कारैः संस्क्रियन्त इति अनुक्तत्वात् । लोकविलक्षणशक्तिग्रहानभ्युपगमेन लोकवेदाधिकरणविरोधस्याऽप्रसक्तेश्च ॥ ८ ॥

यच्चोक्तं मुक्तानामिन्द्रियसहितदेहरूपत्वं, तेन स्वप्ने मुक्तौ च व्यवहार इति वदतो देहात्मवादप्रवेश इति — तदत्यन्तमसमञ्जसम् । देहात्मवादस्य प्राकृतदेहविषयत्वात् । मुक्तानां सर्वेषां विवेकित्वेन तथा व्यवहाराभावान्मुक्तौ ॥ ९ ॥

यत् 'आदत्ते हरिहस्तेने' त्याद्यपि त्वदुक्तं दुरुपपादं इत्यारभ्य हस्तादिना गच्छति पदादिनाऽऽदत्ते, करादिना पश्यतीत्यादिसंकरः स्पष्ट इत्यन्तम् —

इदमप्यत्यन्तमसङ्गतम् — अभेदेपि हस्तेनैवादत्ते, पादेनैव गच्छति, चक्षुषैव पश्यतीत्येव मुक्तौ व्यवहारसत्त्वेन साङ्कर्याऽप्रसङ्गात् । शास्त्राशिक्षितधीः पुरुषो हि तथा वदेत् ॥

'आदत्ते हरिहस्तेन हरिदृष्टयैव पश्यति । गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत्' इत्यादेः परमात्मचिदानन्दकरचरणानुगृहीतस्वांगैस्तद्व्यापारं करोति मुक्त इत्यर्थः । "तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् । कुर्वन्ति भुञ्जते भोगान् तदन्तर्बहिरेव वा । यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः" । इत्यादिभाष्योदाहृतस्मृतेः । भगवत इव तदवयवानामपि चिदानन्दरूपत्वेनाऽनुग्रहशक्तेः

सत्त्वात् । 'हरिहस्तेनेत्यादेः परमात्मानुगृहीतेनेति हस्तादिनेत्यादिरेवार्थः । एवमेव व्याख्यातं सत्तत्वरत्नमालायाम् ॥ १० ॥

यच्च—'नन्वेतत्सर्वं विशेषबलेन समाधास्यामीति चेत्, न—विशेषशब्दस्यापि स्वरूपमात्रपरतया करचरणादिशब्दतौल्यादित्युक्तम्—अत्रोच्यते—शास्त्रेषु निरूपित-तत्स्वरूपसामर्थ्यापरिज्ञानात् आग्रहमूलकोऽयं प्रलाप इति । निरूपितं चाधस्तात् ॥ ११ ॥

यदभिहितं —'तस्माच्छ्रुतिस्मृतिन्यायविरुद्धत्वान्माध्वोक्तं मोक्षरूपं फलं दुरुपपादमिति स्थिते, समन्वयाऽविरोधसाधनानामप्यविचार्यतया शास्त्राऽनारंभ एव पर्यवस्यति । त्वदुक्तरीत्या त्वदभिमतसमन्वयादयोऽपि दुरुपपादा इति सहृदयैरा-कलनीयमिति — एतत्सर्वं द्वितीयाध्यायद्वितीयपादप्रथमाधिकरणखण्डनपरकौस्तुभ-खण्डनेनैव खण्डितमिति ततोऽवसेयम् ॥

तस्मात् श्रीमन्मध्वाचार्योक्तं मोक्षरूपं फलं प्रामाणिकमिति निरूपितत्वेन मध्व-भाष्याद्युक्तं सर्वं श्रुतिस्मृतीतिहासपुराणन्यायादिसिद्धमिति अधस्तान्निपुणं निरूपि-तत्वेन नारायणो जगत्कर्ताऽभिरक्षिता नित्यसुखस्य दाता सर्वप्रकारेणोपासितव्यः, स च सच्चिदानन्दविग्रहः सकलकल्याणगुणाकरः सर्वदोषविधुरः श्रियःपतिरिति श्रीमध्वा-चार्यसिद्धान्तः । एष एव अष्टादशपुराणानां पञ्चमस्य वेदस्य ब्रह्मसूत्राणां प्रणेतुः श्रीबादरायणस्य पराशरसूनोरभिमतः । श्रीकण्ठाचार्यादितरेषामाचार्याणां बहूनां, श्रीशंकराचार्यस्य च श्रीनारायणो जगत्कर्तृत्वादिधर्मा इति संमत इति तत्तद्ग्रन्थो-पन्यासेन आदौ मध्ये च निरूपितं पुरस्तात् । तेनैवात्रोक्तं भट्टोजिना सर्वं भूता-वेशकलुषिताऽन्तःकरणचेतनभाषितमिति अवधार्य, श्रीमध्वाचार्यैः कृतं हरौ समस्त-शास्त्रसमन्वयतदविरोधचिन्ता तदुपजीव्यप्रवृत्तसाधनव्यवस्था तदनुसारिफलनिरूपणं चेति सर्वं समञ्जसं शास्त्रप्रमितमिति निश्चित्य, श्रुतीतिहासपुराणादिपरिशीलनेन परिपक्वभक्त्या परमात्मचरणसरोजनिष्यन्दमकरन्दास्वादनचणमानसैरास्तिकशिखामणिभिः श्रीमध्वाचार्यप्रदर्शितः पन्थाः सन्मार्गो वैदिक इति सुहृद्भावेन परस्परं बोधयद्भिः आत्मानं परमात्मदासम्मन्यैः शिवविरिञ्चादिसेवितचरणद्वन्द्वो भगवान्नारायणो-ऽनुक्षणमाश्रयणीयः शरणभावेन पुरुषधौरेयैः ।

श्रीमद्रामायण आदिकाव्ये प्रारंभे श्रीमहर्षिवाल्मीकिना देवर्षिं नारदं 'प्रति युधिष्ठिरेण श्रीमहाभारते (आनु०) सर्वधर्मविदां वरिष्ठं भीष्मं प्रति—

'कोन्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान्' इत्यादिना—

'किमेकं दैवतं लोके किं वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥'

इत्यादिना सामान्यतः कृतस्य लोकोत्तरगुणगणालङ्कृतसर्वसमाराध्यचरणनलिनद्वन्द्वमहापुरुषविषयकप्रश्नस्य, 'इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः' (रा० १-८) इति, अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्' (भार-अनु० २५४) इत्यादिना विष्णोरवतारभूतो रामः सर्वगुणवान् संप्रति राजते, विष्णुरेव सर्वलोकेश्वरश्चतुर्विधपुरुषार्थकामैः समाराध्यो वेद्यश्च तन्नामसहस्रं च जप्यम्, एष एव परमो धर्म इत्यर्थकश्रीनारादभीष्मकृतसमाधानवाक्यकदम्बकेन विष्णोरेव परदेवतात्वं, जगदादिकर्तृत्वं, ध्येयत्वं च सिध्यतीति विज्ञाय, सुधीजनैः सुजनैर्निष्कम्पं तज्जिज्ञासायां प्रवर्तितव्यम् ॥

अनारभ्याधीतस्य सर्वत्र संबन्धवत् सामान्यतः कृतप्रश्नस्य 'विष्णुरेवे' ति समाधानस्य कारणोपासनापरेषु वाक्येषु सर्वत्र संबन्धोऽवसातव्यः । ततश्च हरेः सर्वशास्त्रविषयता सिध्यतीत्यवधार्यम् ॥

(कौ०) यत्तु कौस्तुभकृतोक्तम्—'चतुरकमठमाठरे' त्यादि सर्वलोकाऽप्रसिद्धवचनानां साक्षितयोपन्यासात्तत्प्रयुक्तां स्वाऽनाप्तत्वशंकां परिहर्तुमात्मनो वायोस्तृतीयावतारत्वमुद्घोष्य 'बलित्था तद्वपुषेति, प्रथमो हनुमान्नामे' ति, श्रुतिस्मृत्युदाहरणं तदनुसारि 'यस्य त्रीणी' ति पद्यनिर्माणमसंगतम् । 'धातुद्वयादेकः सुच्प्रत्यय इति तच्छ्लोकव्याख्यातारोऽनभियुक्ता' इति । श्रुतिस्तु आग्नेयीति चेन्न-

(कु०) हनुमद्भीमयोर्वायुपुत्रता सर्वप्रमाणसिद्धा, श्रीवाल्मीकिव्यासयोः संमता। रामायणोत्तरकाण्डे भारताऽऽदिपर्वादौ वायोस्तदुत्पत्तिकथनात् । अतोऽवतार-

द्वयविषये न कस्यापि विप्रतिपत्तिः । तृतीयेऽवतारे श्रीमध्वाचार्यनाम्नि तव विप्रतिपत्तिः । एषाऽपि परिहृता जिज्ञासादिनयेषु । भवन्मतीयास्तु श्रीशंकराचार्यस्य पुराणेन वा आप्तवाक्येन वा सांबमूर्त्यपरावतारनामाहुः, तद्भवतोऽपि संमतम् । वयमपि पुराणाप्त-वाक्याभ्यां श्रीमुख्यप्राणस्य भगवन्नारायणसचिवस्थानीयस्य अपरावतारः श्रीमध्वाचार्य इति वदामः इत्यादि नापूर्वमेव ।

अज्ञानिनां सर्वमप्रसिद्धमेवेति प्रसिद्ध्यप्रसिद्धिभाषणमप्ययुक्तम् । सर्वलोकाऽ-प्रसिद्धेति तु वचनं सर्वथा न युक्तम् । सर्वलोकपरिज्ञानस्यैवाभावात्तवैवं भाषणे योग्यता-भावात् । श्रीमध्वाचार्यास्तु भगवतो जगत्कर्तुर्नारायणस्य सचिवस्थानीयाऽन्तरङ्गान्तेवासिनः सर्वं जानन्ति भगवदुपदेशेनेति अवोचाम ॥

श्रीमध्वाचार्याणां वायोस्तृतीयावतारत्वं प्रामाणिकमेव । पद्यरचनादिकं साध्वेवेति मन्तव्यम् । तत उद्घोषादि नासंगतमेव । सायणविज्ञानेश्वरादिभिः स्वस्वग्रन्थे विश्वासजननाय आदावन्ते वा स्वस्वग्रन्थे स्वस्वप्रशस्तिकथनं निबद्धम् ॥

किञ्च 'धातुद्वयादेकः सुच्प्रत्यय इति व्याख्यातारोऽनभियुक्ता' इति भाषणं तुच्छम् । 'अनन्ताऽऽवसथेतिहभेषजाञ्ञ्य' (पा० ५-४-२३) इति सूत्रे कौमुद्याम् - इतिहेति निपातसमुदायः इति, मनोरमायाम् — 'उपदेशपारंपर्ये वर्तते, अप्रातिपदिकत्वेपि प्रत्यय' इत्युक्तं, अस्य निपातद्वयात्प्रत्यय इत्याशयः । तद्वत् बहुल-ग्रहणाच्च धातुद्वयादेकः सुजिति व्याख्यानमपि संगतमेव, व्याख्यातारोऽपि अभियुक्ता एवेति विद्धि । उणादिनिष्पन्नेषु अर्थानुगमेन भाव्यमिति न नियमः । अतोऽ-च्छब्द उपपदे भवतेर्डुतच् इति व्याख्याने, धातुद्वयात् डुतजिति व्याख्यानेऽपि न विशेषोऽर्थे । विशिष्टस्याऽऽश्चर्यमित्येवार्थात् । इतिहेत्यत्र 'सुप्सुपे' ति समासे समुदायस्य प्रातिपदिकत्वम्, इतिहेति अखण्डमव्ययमिति त्वन्यत् ॥

'श्रुतिस्तु आग्नेयी' ति चेति यदुक्तम्—

इदमपि न युक्तं श्रुतीनामनेकार्थत्वात् । तत्रापि श्रीमध्वाचार्यैरनतिप्रसक्त्यै व्यवस्थायाः कृतत्वादिति निपुणं निरूपितत्वात् नेदं दूषणं लगतीति सुधीभिराकल-नीयम् ॥ एतेन-अनुक्रमणिकाकारैरनुक्तत्वात् न प्राणो देवताऽस्य सूक्तस्येति परास्तम् ॥

यथा अनुक्रमणिकाकारवचनेनाऽस्य सूक्तस्याग्निर्देवता, तथा 'बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते' इति पाञ्चरात्रमूलकतन्त्रसारवचनेन मुख्यप्राणोऽपि देवता सुवचा। नैतावता मुख्यप्राणस्याग्निसाम्येन प्रतिपाद्यत्वम्; अपितु – संवर्गादिविद्योक्तरीत्या मुख्यप्राणस्यैव प्राधान्येन प्रतिपाद्यत्वम्, अग्नेस्त्वप्राधान्येन प्रतिपाद्यता ॥

अथवा—मुख्यप्राणस्यैवाऽत्र प्रतिपाद्यता, 'मुख्याऽमुख्ययोर्मुख्ये कार्यसंप्रत्यय' इति न्यायात्। अनुक्रमणिकोक्तदेवताया एव तत्तन्मन्त्रप्रतिपाद्यतानियमोऽपि न, 'अग्निर्मूर्धेति मन्त्रस्याऽनुक्रमणिकाऽनुक्ताऽङ्गारकग्रहप्रतिपादकताया अप्यभ्युपगमात्। 'अजामेकां लोहितशुक्लकृष्णा' मित्यादौ अनुक्रमणिकाऽनुक्तवस्तुप्रतिपादकत्वस्यैव दर्शनाच्च। न चात्रानुक्रमणिकाविरोधोऽपि, 'प्राणाग्नय एव एतस्मिन्पुरे जाग्रती' (षट्प्रश्न-४-३.) त्यादौ प्राणेऽपि अग्निशब्ददर्शनेन अनुक्रमणिकास्थाग्निशब्दस्य मुख्यप्राणपरत्वे बाधकाभावात्। सहोजन्यत्वलिङ्गं मुख्यप्राणावतारे हनुमदादौ सावकाशम्। सहश्शब्दस्य बलवाचकत्वेन सायणभाष्यादितोऽवगमेन, बलरूपमुख्यप्राणजन्यत्वस्य हनुमदादौ संभवात्। मुख्यप्राणपरत्वेऽपि निरवधिकबलरूपनारायणजन्यत्वेन तत्र लिङ्गोपपत्तेश्च।

वस्तुतस्तु — महाभारतमोक्षधर्मपठित 'वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभृतः। अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्ट' इति वचनोपबृंहिते 'भूषन्नयोऽधिबभ्रूषु नम्रते वृषेव पत्नी रभ्येति रोरुवत्। ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गादविधावदुर्गृभि' (ऋ० २-२-६) रिति मन्त्रे प्रतीयमानभीमश्रुतिशृङ्गापादानकपतनादिरूपलिङ्गान्येव निरवकाशानीति तद्बलेन बलित्थासूक्तस्य मुख्यप्राणादिपरत्वमेव न्याय्यम्।

न चात्र 'भीमो ने' ति शब्देनोपमानार्थकेन भीमस्याप्राधान्यावगमेन प्राधान्येन मन्त्रजन्यस्तुतिभाक्त्वरूपदेवतात्वं न संभवतीति वाच्यम् – 'निवेशनः संगमनो वसूनां विश्वारूपाभिचष्टे शचीभिः। देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे (पथीनां) वसूना (य० स० ४-२-५) मितिमन्त्रे इन्द्रो नेत्यनेन उपमानत्वेन प्रतीतस्यापीन्द्रस्य उपस्थानेऽस्य मन्त्रस्य विनियोग इति पूर्वमीमांसाभाष्यकारैः ऐन्द्र्याधिकरणे (३-२-२) सिद्धान्तितत्वेन तथेहाप्युपपत्तेः ॥

सूक्तचरमभागे 'अस्ताव्यग्नि' रिति श्रुतिरपि उक्तदिशाऽग्निपदस्य मुख्यप्राणे प्रवृत्तेः सावकाशा । किञ्च – 'साम्राज्याये' तिपदसूचितं साम्राज्यलिङ्गं 'यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्त' इत्यादिवाक्येन मुख्यप्राणादन्यत्र निरवकाशमिति तद्बलेनापि सूक्तमिदं मुख्यप्राणपरमेवेति निर्णेयम् ।

'वाक्यशेषानुक्रमणिकादिविरुद्धार्थस्वीकारे सूक्तस्याऽस्य देवदत्तपरतयापि व्याख्यानं सुकरमित्यतिप्रसङ्गः' त्वयापि परिहार्य एव । द्वासुपर्णेत्यादेरेकवृक्षारूढपक्षिद्वयपरत्वस्य, चन्द्रादिशब्दोपेतानां, शुक्रं ते शुक्रेण क्रीणामि, चन्द्रं चन्द्रेणेत्यादिमन्त्राणां च चन्द्रभट्टादिमनुष्यपरत्वस्य च त्वत्पक्षेऽपि संभवात् ॥

यच्च प्रलपितमन्ततः 'अयं ते योनि' रिति मन्त्रेण नग्न इति पदं छित्वा नग्नः सन्नारोहेति योजनामाश्रित्य मातृगमनकर्तव्यताया अपि त्वया स्वीकर्तव्यतापत्तेरिति–

तदपि उन्मादविजृम्भितम् । तथाहि–स एव हि प्रमाणभूतवेदतात्पर्यविषयः, यः प्रमाणान्तराऽविरुद्धः । त्वदुल्लिखितोऽर्थस्तु –'न परदारान् गच्छेत्, माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा' (नारद) 'मात्रा स्वस्रा दुहित्रा वा नाऽविविक्तासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' (भाग० ९-१९-१७) इत्यादिप्रमाणविरुद्धः, अग्ने इति पदपाठेन, संबोधनसूचकेन सर्वाऽनुदात्तस्वरेण च विरुद्धश्च । नैवं बलित्थासूक्तस्य अस्मदभिमतोऽर्थः प्रमाणान्तरविरुद्धः, प्रत्युत स्कान्दवामनपुराणमहाभारतादिप्रमाणान्तरसंवादी चेति विबुधचूडामणिभिः सभावं विभावनीयम् । निरूपितोऽयमर्थः प्रामाणिक इति अत्रैव ग्रन्थे ॥ इति शम् ॥

**भट्टोजिदीक्षितकृतस्तत्त्वकौस्तुभ एषकः ।**
**मदीयकुलिशाघातद्वयेन शकलीकृतः ॥**

**श्रीमदानन्दतीर्थार्यहृदयाम्बुजवासिनि ।**
**कृष्णेऽर्पिता कृतिरियं शेषशैलविभूषणे ॥**

इति तत्त्वकौस्तुभकुलिशे द्वितीयाघातः ॥

## अथ तृतीयाघातः ।

### तृतीयपरिच्छेददूषणम्

(कौ०) 'शङ्करभगवत्पादकृतं भाष्यमादर्तव्य' मित्यादिः, इति तृतीयः परिच्छेद' इत्यन्तो भागो बहुषु तत्त्वकौस्तुभकोशेषु न दृश्यते । मदनगरैकदेशे अडयार्लैब्ररि इति प्रसिद्धे गरीयसि ग्रन्थभाण्डागारे विद्यमान आन्ध्रलिपिलिखित-तत्त्वकौस्तुभे परं दृश्यते । परमतखण्डनात्परं वर्तमानमेतं भागमवलोकमानाः एषैव प्रक्रिया समीचीनेति भ्राम्येयुः ।

मा भूत्तथा भ्रान्तिः, श्रीमदानन्दतीर्थभगवत्पादैः सप्रमाणं प्रपञ्चिता सर्वाम्नायशिरस्सारार्थश्रीनारायणोत्कर्षसर्वस्वद्वैतप्रक्रियैव श्रीव्यासपराशरप्रमुखसर्वमुनिजनहृद्या वरीयसी प्रेयसी भगवतो हरेरिति पूर्वं प्रतिपादितां शास्त्रसिद्धां सरणिं सारयाति भक्तिमतस्साधुजनान् । यद्यप्यत्र तद्ग्रन्थ्यार्णां शङ्करमताश्रयण आदरजननायाऽद्वैतप्रक्रिया निरूपिता ग्रन्थकृता, न परमतदूषणायेति शक्यं वक्तुं, अथापि—जीवपर-'शङ्करभगवत्पादकृत' मित्यारंभात् भेदसाधक 'जीवो ब्रह्मभिन्नस्तद्वृत्तिधर्मवत्त्वा' दित्याद्यनुमानदूषणदर्शनेन, 'पृथगुपदेशात्, तद्गुणसारत्वादि' ति मध्वाधिकरणभङ्गे प्रपञ्चितत्वा' दित्यादिस्वीयपूर्वग्रन्थानुवाददर्शनेन च अस्ति तात्पर्यं परमतदूषणेऽपीति अवगम्यते । अतस्तत्परिहरामः ।

तथाहि – भेदस्तावन्नोत्पाद्यो घट इव, अपि तु स्वत एव वर्तते जीवपरयोरनादितः । उक्तं च भवदीयैरेव 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥' इति 'ब्रह्मातिरिक्तमज्ञं नास्ती' ति भाष्यव्याख्याने, दृष्टिसृष्टिवादेऽद्वैतसिद्धौ च एतद्भिन्नत्वं विशेषणं देयमिति च । 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपी' ति अस्मदाचार्यैश्च । यतः पदार्था भिन्नधर्माः, अतः भिन्ना एव स्वत इति एतदर्थः । अनुमानं तावद्विद्यमानस्य

भेदस्य ज्ञापकं न तु कारकम्, वह्नेरिव धूमः । ब्रह्मवृत्तिधर्मः सर्वज्ञत्वादिः, तद्वृत्तिधर्मः असर्वज्ञत्वादिः (सर्वज्ञत्वाद्यभावः), स वर्तते जीवे । सर्वज्ञत्वाद्यभावो जीवे नित्यसिद्धः । जगत्कर्तृत्वं जीवस्य सूत्रकृतैव निषिद्धं 'जगद्व्यापारवर्जमि'ति । अतः भेदपरानुमानदूषणमसङ्गतम् ॥

यच्चोक्तं मध्वाधिकरणभङ्गे प्रपञ्चितमिति — एतदपि तत्रैवाधिकरणेऽस्माभिर्निराकृतमिति वेदितव्यम् ॥ इदमत्र बोध्यम् — आम्नायगतसर्वविद्यानामुपक्रमोपसंहारादिपर्यालोचनायां तास्सर्वा विद्या भेदपरा एवेति सिद्धान्तितमाकरे । अत्रापि यथाप्रमाणं निरूपितं तत् द्वितीयाघाते । 'तत्त्वमसी'त्यादिवाक्यं तु न जीवपरयोरैक्यं बोधयति, अपि तु भेदमेवेति असकृदवोचाम । अतोऽत्र परिच्छेदे कौस्तुभकृता निरूपिताऽद्वैतप्रक्रिया निर्मूला । आम्नायाक्षरार्थमर्मवेदिभ्यो न रोचेत । सर्वाद्वैतप्रक्रियाया विजृम्भणहेतुः नित्यशुद्धबुद्धस्वरूपस्य ब्रह्मणो निर्दोषस्याऽविद्यासंबन्धः इति वक्तव्यं भवता । तस्यैव दुर्घटत्वेनाऽसंभवे कथमद्वैतप्रक्रिया विजृम्भेरन् । निर्विशेषनित्यशुद्धब्रह्मणि अविद्यासंबन्धस्य दुर्घटत्वादिकमुपपादितं द्वितीयाघाते । उक्तं हि आकरे — 'अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यती'ति भावरूपाज्ञानेनाऽऽवरकेण यत्किञ्चिदाव्रियते ब्रह्मसंबन्धीति वक्तव्यं, तच्च न संभवति ब्रह्मणो निर्विशेषत्वेन तत्राऽऽव्रियमाणधर्माभावात्, स्वरूपं तु स्वयंप्रकाशत्वेन नित्यसिद्धं, न हि प्रकाशमानमावृतं चेति वक्तुं शक्यं विरुद्धत्वात् । अत एवोक्तं 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवे'दिति । तस्मादीश्वरस्याज्ञानसंबन्धो दुर्वचत्वेनायुक्त इति सर्वाऽद्वैतप्रक्रिया दुर्निरूपैव । किंच ब्रह्म 'निष्क्रियं निष्कल'मिति श्रुत्या निर्व्यापारं, अविद्या तु जडस्वरूपा निष्क्रियेति कथमुभयोः संबन्धः संभवेत् । अतोऽज्ञानाभावो ब्रह्मण इति । न च ब्रह्मणो व्याप्तत्वादविद्यासंबन्धोऽस्तीति वाच्यम् — कदापि शुद्धत्वाभावप्रसङ्गात् । शिष्टमन्यत्र विवृतम् ॥

तस्मात् 'द्वा सुपर्णा सयुजा' (मु० ६-) इत्यादिश्रुतिबलेन, 'नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्चान्य' इत्यादिसूत्रानुगुण्येन च —

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥　(गी० १५-१६)

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥　( „　१७)

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ( „　१८)

यो मामेवासंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥　( „　१९)

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥ ( „　२०)

इत्यादिगीताचार्यवचनबलेन च श्रीमदानन्दतीर्थभगवत्पादश्रीजयार्यवर्यादिभिः तत्त्वनिर्णयमूलटीकादौ सकलसच्छास्त्राणां जीवपरमात्मनोर्भेद एव महातात्पर्यमिति निर्णीतं समीचीनं पन्थानं मा परित्यजथ ॥

ब्रह्मजीवयोर्महदस्ति वैलक्षण्यमिति दहराधिकरणे — 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (१-३-१९) इतिसूत्रेण प्रदर्शयति भगवान् सूत्रकारः । तथाहि — तत्र 'दहर उत्तरेभ्य' इति प्रथमसूत्रेण 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश' (छा० ८-१-१) इति दहरपुण्डरीके श्रूयमाणो दहरः किं भूताकाशः, किं जीवः, उत परमात्मेत्याशंक्य—नाकाशजीवौ, अपितु—परमात्मैव, 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छा० ८-१-५) इत्युत्तरवाक्य आत्मत्वापहतपाप्मत्वादिपरमात्माऽसाधारणधर्मश्रवणादिति सिद्धान्तयित्वा, 'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म' (छा० ८-३-४) इति, 'एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय

परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति' (छा० ८-१२-३) इति प्रजापतिवाक्येन च परमात्मप्राप्तिनिरूपणपूर्वं स्वरूपाभिव्यक्तिरूपमोक्षाभिधानात्, तेन च मुक्तजीवस्य अपहतपाप्मत्वसत्यसङ्कल्पत्वादि संभवतीति जीव एवात्र दहरः स्यादिति प्राप्ते, नेत्याह - आविर्भूत इति" दहराकाशस्थपरमात्मज्ञानोपासनाजनितभगवत्प्रसादादाविर्भूतस्वरूपो मुक्तो जीवोऽपहतपाप्मा सत्यसङ्कल्पस्तत्रोच्यते, स तु नात्र दहरवाक्ये ग्रहीतुं शक्यतेऽमुख्यत्वात् इति। ततश्च - परमात्मा स्वतोऽपहतपाप्मत्वादिमान् मुख्यः, जीवस्तु तत्प्रसादासादिताऽपहतपाप्मत्वादिमानमुख्यः, मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायादिति भावः। अनेन उपास्यः परमात्मा ब्रह्मादिपदवाच्यः स्वमी, उपासको जीवो दासः (भृत्यः), स्वामिदासयोर्भेदस्तु सदाभावी; सर्वासामपि विद्यानां ब्रह्मजीवयोरुपास्योपासकभावबोधकत्वात्, तयोर्भेद एव सूत्राणां तात्पर्यमिति सिद्धम्।

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥ (१८-६५)

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥' (१८-६६)

इति भगवद्भक्त्यादिसाधनसारभगवदनुग्रहप्राप्त्यन्तरङ्गहेतुमुपदिशन्तो जीवपरमात्मनोः नमस्कर्तृत्वनमस्कार्यत्वयाजकत्वेज्यत्वनिबन्धनभेदं निरूपयन्तः श्रीगीताचार्या अपि 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्वे वयमतःपर' (गी० २-१२) मित्युपक्रमे जीवपरमात्मनो र्दार्ष्टान्तिकदृष्टान्तभावनिमित्तकभेदं प्रदर्श्य सर्वश्रुतिस्मृतीतिहासपुराणभारतार्थसंग्रहं गीताशास्त्रमिदं सर्वं च शास्त्रं वस्तुतो जीपरमात्मनोर्भेद एव तात्पर्यवदिति मन्यन्ते इति प्रवदन्ति विपश्चितः॥

अतो वासुदेवः सर्वलोकाधिपतिः सर्वलोकशरण्यः, तदनुचरा वयमिति भावनया भगवन्तं सर्वसुजनसंरक्षणबद्धदीक्षं 'सर्वस्वामी मम स्वामी' इत्युपासीनाः

परमात्मप्रसादभाजनभावं प्राप्ता अनन्तं ब्रह्मसौख्यं प्राप्य इह परत्र च रमन्ते सुखेन ॥ उक्तं हि — दण्डयन्ति हि राजानो राजाऽहमिति वदन्तं, ददति हि सर्वमभिप्रेतं गुणोत्कर्षं वदत इति ॥

तस्मात् द्वैतमेव मतं भगवदभिमतं वरीयः ॥

तदिदं वरिष्ठं भगवदभिमतं मतं समाश्रयन्तः, "आचार्यवान् पुरुषो वेद" इत्याद्युक्तेः, श्रीमदाचार्योपदिष्टविद्यैव परोक्षापरोक्षज्ञानसाधनमिति निश्चिन्वानाः, सत्सम्प्रदायविदः आचार्यादधीतसद्विद्याः, यथासमयमधीतविद्याविचारेण 'भगवान्नारायण एव सर्वस्वामी, स एव सकलाभीष्टप्रद' इति निश्चितधियः, "निरवधिकानन्तानवद्यकल्याणगुणतत्त्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकोऽन्तरायसहस्रेणाप्यप्रतिबद्धो निरन्तरप्रेमप्रवाहो भक्तिः" इत्युक्तया भक्त्या, स्तुत्या नमसा सेवया चानुदिनं श्रियःपतिं वासुदेवं तोषयन्तः, शरण्यं तं शरणं प्रपद्य, तदीय करुणाकटाक्षवीक्षासमासादित – ऐहिकामुष्मिकसकलसाम्राज्यसौख्यमनुभवन्तो भवन्तु ब्रह्मविद इति श्रियःपतिं श्रीनिवासं भृशमनिशं प्रार्थयामहे ॥ इति शुभम् ॥

आघातेन तृतीयेन चूर्णोऽभूत्तत्त्वकौस्तुभः ।
तेन तुष्यन्तु नितरां सर्वाम्नायविदो जनाः ॥

॥ इति तृतीयाघातः ॥



॥ श्रीलक्ष्मीः प्रसन्ना भवतु ॥

श्रीमध्वभाष्यटीकादिसमालोचनयाऽनया ।
प्रीयतामस्मदाचार्यहृदयाब्जे वसन् हरिः ॥ १ ॥

भट्टोजिपण्डितकृततत्त्वकौस्तुभखण्डने ।
श्रीसेतुमाधवाचार्यकृते कुलिशनामनि ॥ २ ॥

तुर्योऽध्यायोऽभवत्पूर्णो येनाचार्यः प्रसीदति ।
अनेन वासुदेवाख्यः परो देवः प्रसीदतु ॥ ३ ॥

श्रीमद्वैष्णवमण्डलमण्डनायमान श्रीमुष्णार्याचार्यवंशमुक्ताफल वैयाकरणचक्रवर्ति
वैयाकरणकेसरि कुलपति महामहोपाध्याय श्रीमुष्णं व्याकरण
सुब्बरायाचार्याणां आत्मजेन ; श्रीपद्पुरीविराजमान
श्रीवेङ्कटेश्वरसंस्कृतमहाविद्याशालाध्यक्षपदात्प्राप्त-
विश्रान्तिकेन विद्यामार्तण्ड श्रीमध्व-
सिद्धान्तभूषण महामहोपाध्याय
श्रीमुष्णं व्याकरण सेतुमाधवाचार्येण
सङ्कलिते कुलिशे भट्टोजीय-
तत्त्वकौस्तुभखण्डने
चतुर्थोऽध्यायः
समाप्तः



॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

॥ श्रीश्रीनिवासो विजयतेतराम् ॥

महामहोपाध्याय - विद्वत्केसरि - वैयाकरणचक्रवर्ति - श्रीमुष्णं

## श्रीसुब्बरायाचार्यमहाशयानां चरितम् ।



श्रीवेङ्कटगिरिनिलयं श्रीविधिभवमुख्यदेवनुतचरणम् ।
श्रीपतिममलमनन्तज्ञानानन्दादिकं भजे शरणम् ॥ १

श्रीमुष्णसुब्बरायाचार्याणां बुधवराभिनन्द्यानाम् ।
विद्वत्केसरिबिरुदप्रकटितमहिमैकदेशविद्यानाम् ॥ २

गुणगणरत्नाकरतः कतिपयरत्नानि तावदादाय ।
सुजनग्रीवाभरणं हारं रचयामि कं च मोदाय ॥ ३

क्षेत्रं श्रीमन्मध्वाचार्याऽऽदृतमस्ति भारते खण्डे ।
श्रीमुष्णसंज्ञमिन्धे मकरीपत्रं यदुच्चभूगण्डे ॥ ४

नित्यसरोवरतीरे मुक्तसुराधीशमृष्टसोपाने ।
भक्तहिताय विराजति यत्र हरिस्सूकरो हृताज्ञाने ॥ ५

आर्यगणनुतगुणार्या चार्यगुरूत्तंसवंशमुक्ताभः ।
नारायणार्यनामा तत्राभूत्पण्डितेड्यशुभचर्यः ॥ ६

तत्तनयाः पञ्चासन् प्राप्तनयाश्शब्दतन्त्रनिष्णाताः ।
आलोडितवेदान्ता हरिचरणसरोजमधुकरस्वान्ताः ॥ ७

पार्थ इव मध्यमोऽभूत् तेषु श्रीसुब्बरायबुधवर्यः ।
सुकृतभरिताम्बुजाम्बागर्भादिव चन्द्रमाः पयोराशेः ॥ ८

पित्रोपनीत एव द्वित्रैरब्दैरवाप सद्विद्याम् ।
तिरुवालूरग्रामे मातुलसदने स्थितोऽध्यगीष्ट ऋचः ॥ ९

जनकाज्ज्येष्ठभ्रातुः काव्यग्रन्थानधीत्य मेधावी ।
यत्र श्रीवार्ष्णेयः सह रुक्मिण्या विराजते देवः ॥ १०

मन्नारुगुडिक्षेत्रे निवसंस्तत्राहतो बुधैस्सर्वैः ।
पण्डितवर्यात्तत्र च गोपालाचार्यनाम्कान्धीरः ॥ ११

शाब्दे तन्त्रे कौस्तुभकौमुद्यावध्यगीष्ट गुरुणाऽथ ।
'शास्त्रेषु भवान्निपुणो भविते' ति कृताशिषं गृहीत्वाऽयम् ॥ १२

कन्यामनवद्याङ्गीमनुकूलामुदवहच्छुभाचाराम् ।
पश्चादुत्तरदेशे सुरपुरनगरं चरन् समासाद्य ॥ १३

एष हयग्रीवार्याद्बुधवर्याच्छेखरादिकान्निपुणम् ।
कतिचिदधीत्य ग्रन्थान् तदनुज्ञातस्तदुत्तरे देशे ॥ १४

यत्र च भीमाकूले विठ्ठलनामा हरिः परो जयति ।
पण्ढ्रापुरनामवरक्षेत्रं भक्त्या ततस्समापेदे ॥ १५

तत्र हि कृष्णाचार्यं विदुषां वर्यं समाश्रयद्धीमान् ।
भाष्यं प्रदीपसहितं भूषणसारौ तथैव मञ्जूषाम् ॥ १६

उद्योतं समधीत्य च शाब्दे तन्त्रेऽभवन्महाप्राज्ञः ।
स तु पश्यन्गुरुवर्यो वैदुष्यं वावदूकतामस्य ॥ १७

"मान्यो भवांस्तु भविता सभासु सर्वासु भूपतिप्रमुखैः" ।
आशिषमेवमवादीत् जग्राहासौ प्रणामपूर्वं ताम् ॥ १८

कोल्हापुरसंस्थानं प्रायाच्छिष्यैरयं च पदचारी ।
यत्र हि लक्ष्मीर्विलसति कामितसकलार्थदा स्वभक्तेभ्यः ॥ १९

नगरे तस्मिन्निवसन्नभ्यास्थन्न्यायशास्त्रमपि सकलम् ।
**श्रीभिक्कुशास्त्रि**वर्यात्पण्डितगणमौलिमण्डनोच्चमणेः ॥ २०

तस्मिन्नेव पुरे **रघुनाथा**भिधतार्किकं जिगायाऽसौ ।
यो न्यायरत्ननाम्नीं व्याख्यामकरोद्धि पञ्चवादानाम् ॥ २१

तत्रत्यानां विदुषां प्रमोदमुदपादयत्परं वाग्मी ।
आगच्छन् स्वं देशं मैसूरुपुरं क्रमादयं प्राप्य ॥ २२

तत्राऽऽस्थाने विदुषो लेभे जित्वोच्चमाननां नृपतेः ।
दक्षिणदेशे राजन्नूतनदुर्गाख्यपुरनरेन्द्रस्य ॥ २३

आस्थानविबुध कुप्पुस्वामिवरादाप पूर्वमीमांसाम् ।
आत्मकुलक्षीराम्बुधिराकाचन्द्रो बुधेन्द्रनुतमेधाः ॥ २४

योऽध्यापयत्सुशिष्यान्छ्रीपूर्णप्रज्ञशास्त्रतत्त्वार्थान् ।
बहुकृत्वः सुगुणनिधी रा[illegible]णाचार्यनामगुरुवर्यः ॥ २५

तस्माद्गुरुवर्यादयमाम्नायान्तं समध्यगीष्ट चिरम् ।
पश्चिमजलधेस्तीरे पुर्यां श्रीरजतपीठसंज्ञायाम् ॥ २६

श्रीपूर्णप्रज्ञमुनिप्रमुखार्चितकृष्णपूजकाऽग्रण्यात् ।
श्रीकृष्णापुरमठपतियतिकुलतिलकादवाप परविद्याम् ॥ २७

विद्याधीशद्युमणेरवशिष्टां शिष्यदीप्तिहततमसः ।
एवं शास्त्रेष्वसदृशमेधाप्रतिभाबलेन देशेषु ॥ २८

विद्वद्वरदिक्करिणः सदाऽवजानन् चचार बुधसिंहः ।
ग्रामवरे क्वचिदेष हि भेजे सममासनं महासदसि ॥ २९

बुधराजशास्त्रिणाथ तु वादे तं चापराञ्जिगाय बुधान् ।
तञ्जापुरे महीपतिसदसि विपश्चित्परीक्षकः कश्चित् ॥ ३०

एनं शास्त्रविचारे निपुणं ज्ञात्वाऽपि नाऽऽद्यकक्ष्यायाम् ।
समजीगणत्तदाऽयं कुपितः पुरतो विभोस्सभामध्ये ॥ ३१

अस्मिन् विद्वत्सदसि प्रभवति को वा परीक्षितुं मां तु ।
दातुं वा प्रतिवचनं मत्प्रश्नानामितीरयाञ्चक्रे ॥ ३२

अथ विद्वान् प्रभुणोक्तः किमेतदिति तं परीक्षको भीतः ।
प्रामादिकोऽपराधो ममायमर्हः सुमानने प्रथमम् ॥ ३३

विचिकित्सा नास्तीति प्राह प्रथमामयं तदा पूजाम् ।
लेभे सकला लोका विस्मयमानन्दमापुरमितमहो ॥ ३४

तत्रैवाथ कदाचित् दक्षिणदेश्या विपश्चितो बहवः ।
सम्मन्त्र्य कुप्पुस्वाम्यय्यङ्गारं महोद्धतं सदसि ॥ ३५

तार्किकराजं जेतुं प्रचोदयामासुरेनमतिधीरम् ।
व्युत्पत्तिवादनाम्नि ग्रन्थे तमयं जिगाय वादेषु ॥ ३६

जयिनमथ सुब्बरायाचार्यं सर्वे महाशयास्तत्र ।
सुरगुरुमपरं मत्वा व्याजह्रुश्चक्रवर्तिनं विदुषाम् ॥ ३७

अमुनैवाऽतिविशुद्धा भुवमिव गङ्गा भगीरथेनादौ ।
दक्षिणककुभमपूर्वा शाब्दी विद्या स्थिरं समानिन्ये ॥ ३८

देशेषु येषु येषु प्रख्याततरा लसन्ति चेदानीम् ।
व्याकरणशास्त्रपारङ्गताः सभाऽऽस्थानपण्डिता जयिनः ॥ ३९

वादेषु सम्यगध्यापनेषु च प्रथितशेमुषीमहिताः ।
दधति च महामहोपाध्यायोपपदं च जार्जिनृपदत्तम् ॥ ४०

शालासु राजकीयास्वन्यासु च पण्डिता विराजन्ते ।
ते सर्वेऽपि बुधेन्द्राः शास्त्रे शिष्यप्रशिष्यतच्छिष्याः ॥ ४१

एवं जैमिनिगौतमतन्त्रेऽप्यन्ये वसन्ति विद्वांसः ।
बहवश्चेत्यस्य महाभाग्यं शक्नोति कोऽनु वर्णयितुम् ॥ ४२

राजमहेन्द्रे नगरे श्रीसत्यध्यानतीर्थगुरुसदसि ।
वैयाकरणमहेभो मत्तस्तत्राऽऽजगाम बुधकरिणः ॥ ४३

दुर्भेदचोद्यदन्तप्रहारतोऽद्रावयद् द्रुतं सकलान्
बुधसिंहं गुरुवर्येणाऽऽहूतमिमं विलोक्य स तु वादी ॥ ४४

भीततमो बुधवर्यं प्रणम्य मध्येसभं च स प्राह ।
"एतैस्तत्रभवद्भिर्वादं कर्तुं क्षमेत को वादी ॥ ४५

एते जगति महान्तः पाणिनिरथवा पतञ्जलिर्ब्राह्मी ।
अत्र सभायामेतैरद्याहं विजित एव बुधवर्यैः " ॥ ४६

एको जिगाय निखिलान् पार्थः संशप्तकानिवाशु सुधीः ।
भीमः क्रोधवशानिव वादीन्द्रानेक एव धीबलतः ॥ ४७

स्वयमन्विष्याहूय प्रथितोद्धतचण्डपण्डितप्रवरान् ।
निश्शङ्कं धीरमतिः स शपथमकरोद्विभिन्नमददंष्ट्रान् ॥ ४८

दुर्वादीन्द्रमहारथयूथे प्रक्षिपति भीषणशतघ्नीम् ।
दुर्भेद्यचोद्यरूपां मुमोच तूर्णं विभीः सहस्रघ्नीम् ॥ ४९

पुनरपि मैसूरुपुरे राजाऽमात्यैरसौ समाहूतः ।
विदुषस्तत्र विजित्य प्राप च दत्तं परीक्षकस्थानम् ॥ ५०

बहुदेशागतविदुषः परीक्ष्य नृपतिं तु तोषयामास ।
नृपसचिवैर्बुधराजो विदुषामग्रे सुपूजितश्चैषः ॥ ५१

सदसि बरोडानृपतेः पण्डितसिंहांस्तदातनान्सर्वान् ।
जित्वाऽखिलशास्त्रेषु प्राथमिकीं प्राप माननां श्रेष्ठाम् ॥ ५२

श्रीपद्मनाभपादाङ्गुष्ठनखद्योतधूतसन्तमसे ।
दक्षिणवारिधितीरगकेरलदेशेषु राजमानेऽसौ ॥ ५३

नगरेऽप्यनन्तशयने राजसभायां विजित्य बुधमल्लान् ।
सौवर्णकटकपूर्वां लेभे सम्भावनां परां प्रथमाम् ॥ ५४

श्रीवेङ्कटगिरिनिकटे राजति पद्मवतीवरक्षेत्रे ।
श्रीपूर्णप्रज्ञमताऽवलम्बिसुजनैः प्रकल्पितायां तु ॥ ५५

सिद्धान्तोत्साहिन्यां सुसभायां प्राज्ञवर्यकलितायाम् ।
प्रथमं परीक्षकपदं परिष्करोति स्म बुधवरव्यूहे ॥ ५६

चित्तूरु कलेक्टरग्र्यः प्रसमीक्ष्य कृतीः प्रमोदतो ह्यस्य ।
सूत्रार्थमञ्जरीमुखशास्त्रग्रन्थांश्चिरादभिननन्द ॥ ५७

स्वाभिप्रायनिवेदनपूर्वं राज्ञे स्वयं निवेद्यास्मै ।
श्रीजार्जिचक्रवर्तिप्रभुतो वर्षाशनेन महिततमम् ॥ ५८

बिरुदं महामहोपाध्यायाख्यातं प्रदापयामास ।
नामेदं दत्तमिति डिल्लीनगरान्निवेदयामास ॥ ५९

नयशब्दशास्त्रपारावाराऽन्तस्तलविहारिमतितिमिराट् ।
लक्ष्मीसरस्वतीभ्यां प्रेम्णा यश्चाश्रितोऽधिकस्पर्धम् ॥ ६०

यत्पुर 'तोऽहं बुध' इति बिभ्यति नामापि वक्तुमखिलाश्च ।
कोच्चीदेशनृपालः कविकथकैः कीर्त्यमानसत्कीर्तिः ॥ ६१

अस्य समीक्ष्य प्रतिभामसमाधेयेषु चोद्यगहनेषु ।
विस्मितमनाः प्रहृष्टः प्रादादस्मै सुवर्णकटकादीन् ॥ ६२

वाराणस्यां पण्डितवादसभायां महाशयास्सर्वे ।
निरुपमपूर्वन्त्वनघं वैदुष्यं शब्दशास्त्रवाराशेः ॥ ६३

जानन्तोऽद्भुतमोदाम्बुधौ निमग्ना वितेरुरन्वर्थम् ।
वैयाकरणनृकेसरिबिरुदं संपूज्य विबुधवरसदसि ॥ ६४

यत्र हरः प्रणतानामार्तिहरोऽस्मीति तादृगभिधानः ।
विलसति शिवया धर्माऽऽसंवर्धिन्याख्यया सह प्रीतः ॥ ६५

श्रीपञ्चनदक्षेत्रे कावेरीतोयवातहृतदुरिते ।
अध्यापयन्नवात्सीच्छिष्यगणं सर्वशास्त्रमनिशमसौ ॥ ६६

अस्य तु विद्वान् तनयः शुभवृत्तः सेतुमाधवाभिख्यः ।
तिरुपतिनाम्नि प्रथिते क्षेत्रवरे श्रीपतेः सुखावासे ॥ ६७

श्रीवेङ्कटेशसंस्कृतविद्यानिलये परं चिराल्लसति ।
पाणिनितन्त्रे मुख्याध्यापकपदवीमवाप मेधावान् ॥ ६८

श्रीवेङ्कटनामगिरेरुपत्यकायां विभासितं पूतम् ।
साकं तिरुपतिनगरं प्रियपुत्रेणाऽध्युवास चैष बुधः ॥ ६९

तत्रायं चिरकालं स्वयमपि शिष्यान् बहूनि शास्त्राणि ।
अध्यापयन्नतोषयदच्युतमतिर्थींश्च पूजयन्सततम् ॥ ७०

सूत्रार्थमणिमयी या मञ्जर्यमुना कृता बुधेन्द्रेण ।
सा मुद्रिता सुतेनाऽऽद्रियते सर्वैश्शिरोभिरपि हृदयैः ॥ ७१

गीताभाष्यव्याख्या शेखरयुगलस्य चोत्तमे व्याख्ये ।
अमुना व्यरचिषतेमास्ताश्च सुतेनाऽद्य मुद्रणे निहिताः ॥ ७२

देशे देशे बहवो वसन्ति शिष्याः प्रशिष्यवर्ग्याश्च ।
तन्नामानि विशिष्य ज्ञातुं वक्तुं न शक्नुमोऽद्य वयम् ॥ ७३

अथ वक्ष्यामस्तेषु च कतिपयविदुषां तु नामधेयानि ।
पञ्चनदे नृपसंस्कृतशालाध्यक्षश्च शब्दनिष्णातः ॥ ७४

महितनदीतीरकुले सञ्जातः शिष्यवर्यनुतसुगुणः ।
**श्रीसेतुमाधवार्य**स्तच्छिष्येषु प्रधानशिष्योऽसौ ॥ ७५

विद्वन्मणिघनपाठी शतावधानी विचित्रकविवर्यः ।
कदलीकन्दान्वयजो गीतोपन्यासिलक्ष्मणाचार्यः ॥ ७६

अस्यैव मुख्यशिष्यः शाब्दे तन्त्रे तथैव वेदान्ते ।
अस्मादधीत्य सर्वं शास्त्रं शाब्दं बभूव मेधावी ॥ ७७

**गोपालशास्त्रि**नामा पाणिनितन्त्रज्ञपण्डितप्रवरः ।
यत्र च वृषाकपाय्योर्नाथौ देवौ वरप्रदौ जयतः ॥ ७८

तत्र तु बहवो विद्याशालाः क्षेत्रे चिदम्बरे सन्ति ।
विद्यालये प्रधाने प्रथमाध्यापकपदे नियुक्तोऽभूत् ॥ ७९

तस्मात्पाणिनितन्त्रे सन्त्याभाष्यन्त्वधीतिनो बहवः ।
तत्रैकश्छात्रवरो विद्वान् **श्रीदण्डपाणियज्वा** यः ॥ ८०

अण्णामलैसर्वकलाशालासंस्कृतबुधाग्रणीर्वसति ।
बिरुदं महामहोपाध्यायाख्यातं चिदम्बरे बिभ्रत् ॥ ८१

सोऽपि बुधः सच्छात्रः प्रशिष्यवर्यो हि कुलपतेरस्य ।
योऽनन्तशयनसंस्कृतशालापदशास्त्रपण्डितप्रवरः ॥ ८२

श्रीरामकृष्णशास्त्री सोऽपि हि शिष्योऽस्य बोधकल्पतरोः ।
अधिवसति कुम्भघोणं योऽभिनवो भट्टबाण इति विदितः ॥ ८३

नगरवरकुम्भघोणे राजन्त्यां राजकीयशालायाम् ।
विद्वान् महामहोपाध्यायोपपदः कवीन्द्रकुलतिलकः ॥ ८४

सोऽपि च वैयाकरणः शिष्यो ह्यस्यैव कृष्णमाचार्यः ।
यः श्रीमहामहोपाध्यायो वी - श्रीनिवासबुधवर्यः ॥ ८५

त्रिशिरःपुरेऽतिरम्ये श्रीरङ्गक्षेत्रपरिसरे देशे ।
जोसफ्कालेजिवरेऽमरभाषाऽध्यापकः प्रशिष्योऽस्य ॥ ८६

यो राजकीयशालासंस्कृतभाषाबुधः पुनानगरे ।
काव्यप्रकाशटीकाकारोऽलङ्कारशाब्दतत्त्वज्ञः ॥ ८७

झलकीकरोपनामा वामनभट्टः स शिष्य एवास्य ।
सोलापुरेऽस्य विद्वान् शिष्यो गोविन्दशास्त्र्यपि प्रज्ञः ॥ ८८

उक्तमिदमुदाहरणं न तु सङ्ख्यानं गुरोश्च शिष्याणाम् ।
व्युत्पत्तिवादमस्मादधिजगिरे तार्किका बुधा बहवः ॥ ८९

अहमपि कश्चन शिष्यस्त्वस्यन्ते त्विति वदामि जिह्रेमि ।
गणनन्तु वेदितव्यं गुरुवरकरुणाऽभिलाषया हि परम् ॥ ९०

निगमान्तागमचर्चाव्यापारेणैव यापयन्समयम् ।
ग्रहवह्निवसुनिशाकरसङ्ख्याते शालिवाहनस्य शके ॥ ९१

श्रीकाल्युक्तिवत्सरकार्तिकासितत्रयोदशीं यावत् ।
अलमयमकरोत्तिरुपतिनगरं पुण्योच्चयोत्थया मूर्त्या ॥ ९२

दुरितप्रशमनमस्य स्मरणं सर्वस्य सर्वभद्राणाम् ।
करणमिति भक्तिनुन्नः किञ्चिदवोचं गुरोश्च महिमानम् ॥ ९३

श्रीवेङ्कटेशविद्याशालायां श्रीपदे पुरे भान्त्याम् ।
त्र्यन्तोपाध्यायः शिष्टतमश्रीनिवासबुधसूनुः ॥ ९४ ॥

कदलीकन्दान्वयजो **गिरिधरनामा** तु साहितीविद्वान् ।
रचयित्वेमां सुकृतिं समर्प्य गुरवे प्रणौमि गुरुवर्यम् ॥ ९५ ॥

पद्मावतीसमेतः करुणावारांनिधी रमेशो मे ।
श्रीवेङ्कटगिरिनिलयः प्रीतो भवतु प्रियं च ददातु शिवम् ॥ ९६ ॥

गगनर्तुवसुनिशाकरसङ्ख्याते शालीवाहनस्य शके ।
बहुधान्यचैत्रपौर्णम्यामेषा स्वार्यगा कृतिर्व्यरचि ॥ ९७ ॥



## श्रीमतां आचार्याणां स्तुतिः

श्रीमान् श्रीपूर्णबोधः पुनरपि जननं प्राप किं वेति मान्यः
शिष्यैरग्र्यैरसङ्ख्यैः गृहिभिरपि तथा ज्ञानिभिः सेविताङ्घ्रिः ।
**आर्याचार्यः** सुचर्यः प्रथितगुरुरभूद्योऽश्रुतग्रन्थवक्ता
वंशे तस्यैव जातः स इति बहुमतं सुब्बरायार्यमीडे ॥ १ ॥

व्याख्याप्रख्यातनाम्नो वरपवनकलाशास्त्रसङ्घस्य नित्यं
रामण्णाचार्यवर्यादधिगतनिगमान्तस्तथा शिक्षितार्थः ।
योगीन्द्रानम्यकृष्णापुरमठयतिभिर्भातविद्यामरीची
रुन्धन् योऽभात्तमोऽन्तर्गुरुमखिलसतां सुब्बरायार्यमीडे ॥ २ ॥

येनैवाकारि यत्नादिह भुवि महतः स्वर्धुनीवामलाग्र्या
विद्या शाब्दी समग्रा विहरणमुदिता सर्वतश्चाप्यपूर्वा ।
पायंपायं बुधेन्द्राः कतिपयपृषतः सर्व एते हि तृप्ताः
यद्विद्यादेवनद्याः गुरुवरमनिशं सुब्बरायार्यमीडे ॥ ३ ॥

शाब्दीविद्याभिधानास्सुरवरतरवस्सन्ति ये यत्र यत्र
यावन्तः पत्रपुष्पोत्तमफलरुचिरास्सर्व एतेऽपि साक्षात् ।
येनैवोप्तैस्सुबीजैस्स्फुटलसदुपदेशाभिधैस्संप्ररूढाः
तज्ज्ञाः केचित्तु तज्ज्ञाः पर इति महितं सुब्बरायार्यमीडे ॥ ४ ॥

राज्ञस्तञ्जापुरे यस्सदसि विरचितं प्राश्निकैकार्हमाद्यं
प्राप्तः पीठं परीक्षासमय इह भवान् स्थातुमर्होऽद्य नेति ।
प्रोक्तः प्राज्ञैस्तदा तानपि बुधकरिणस्सर्वशास्त्रेषु जित्वा
तस्थौ तत्रैव पीठे स्थिरमतुलमतिं सुब्बरायार्यमीडे ॥ ५ ॥

मेधां वादे यदीयां बुधमदशमनीं सर्वशास्त्रप्रवीणः
श्रुत्वा वादाय नागात् क्वचिदथ हठतो निर्जितो मायिराजः ।
येनान्योऽपीत्थमेवाधिकभयविवशः न्यायरङ्गप्रवीणः
नाऽदाद्व्युत्पत्तिवादे प्रतिवचनमहो सुब्बरायार्यमीडे ॥ ६ ॥

जार्जिश्रीचक्रवर्ती निखिलबुधनुतां सर्वदेशप्रसिद्धां
प्रज्ञां कीर्तिं निशम्याधिकमुदितमनाः मानयामास सम्यक् ।
दत्वा भूषां सुवर्णादिकमपि बिरुदं सार्थकं रूप्यकाणां
वर्षे वर्षे शतं श्रीपतिपदनिरतं सुब्बरायार्यमीडे ॥ ७ ॥

**श्रीसत्यज्ञानतीर्थ**व्रतिवरसदसि प्रौढवादीन्द्रभीमे
प्राप्तं दृप्तं विपश्चिद्गजमधिकबलाक्षेपदन्तप्रहारैः ।
प्राज्ञान् दूरे क्षिपन्तं प्रतिवचनमहाकुन्तभग्नं व्यधाद्यः
सद्योविद्योतबोधः प्रतिभटभयदः सुब्बरायार्यमीडे ॥ ८ ॥

बद्धा येनातिशुद्धाऽभिनवबहुतराक्षेपविक्षेपदक्षा
शिक्षायां चोपयुक्ता पटुमतिविदुषां बालकानां च सम्यक् ।
अर्थानां सूत्रभाष्यप्रतिपदलसतां धीमतां कर्णभूषा-
ऽभिख्यां सूत्रार्थरत्नोज्ज्वलतनुरतुलां विन्दते मञ्जरीयम् ॥ ९ ॥

यस्मिन् विद्वन्मृगेन्द्रे विहरति नृपतिप्रौढसंसद्वनान्तः
प्रोचुर्नैकं च शब्दं किल चकिततराश्शाब्दिकाख्या मदेभाः ।
दुस्तर्कक्रूरदंष्ट्रा अपि भयविवशास्तार्किकद्वीपिसङ्घाः
लीनाः कुत्रापि नोच्चैर्ध्वनिमपि ससृजुस्तान्त्रिकव्यालयूथाः ॥ १० ॥

सत्स्वप्यन्येषु कान्तेष्वनुपममनिशं प्रेम यत्रैव चक्रे
वादीन्द्रैर्धार्तराष्ट्रैः कृतविविधमहाभङ्गतो मोचिताऽऽसीत् ।
वीराग्र्येणैव येनानवरतमुदिता मध्वसिद्धान्तविद्या
पाञ्चालीव स्वशास्त्रे स दिशतु सुमतिं सुब्बरायार्यभीमः ॥ ११ ॥

आसीदार्यार्थनीया शुचितमपरिभाषोपनामेन्दुमौलेः
मूर्तिर्या विश्ववद्याभिलषितसकलार्थप्रदा दुर्गमा च ।
ज्ञप्त्यै तस्यास्सुखेनार्थिषु परकृपयाऽनल्पमोदाय तेषां
व्याख्या दिव्याञ्जनाभा व्यरचि किल सुबोधिन्याह्वया येन रम्या ॥ १२ ॥

वादेष्वासेतुहैमाचलमिह न जितो येन नासीद्विपश्चित्
कोऽपि क्वापि प्रभूताग्रहविवशबुधैः दूषणौघे प्रयुक्ते ।
उद्वेगो नैव चिन्ता न मतिकलुषता न प्रमादो न यस्य
प्रोत्था सौरापगेव प्रतिवचनततिः केवलं यन्मुखाद्रेः ॥ १३ ॥

श्रीमच्छेषाचलेशाङ्घ्रिजलजयुगलाऽऽलोकनोत्कण्ठितान् यः
प्रातान् श्रान्तान् द्विजाग्र्यान् सतनयवनितानादरेणान्नदानैः ।
भोगैरभ्यङ्गपूर्वैरसुखयदधिकं श्रीपदाह्वे पुरे स्वे
पुत्रे विद्वद्वरेऽध्यापयति पदकलां सुब्बरायार्यमीडे ॥ १४ ॥

यस्मान्मेरोरिवाद्रेर्वरबहुकृतयो निर्गता देवनद्यः
चेतस्तापान् समस्तान् सकृदपि पठनस्नानतः सज्जनानाम् ।
निघ्नन्त्युन्मूलयन्ति प्रतिकथकमनोरूढगर्वोच्चवृक्षान्
दद्याच्छ्रीसुब्बरायप्रथितगुरुवरस्स स्मृतो मङ्गलं नः ॥ १५ ॥

इत्थं श्रीसुब्बरायोत्तमगुरुचरणाम्भोजसंसक्तचित्तः
मोचाकन्दान्वयोत्थः **गिरिधर**सुकविः श्रीनिवासार्यपुत्रः ।
तस्यापाराद् गुणाब्धेः कतिपयगुणसन्मौक्तिकानि प्रगृह्य
तेने मालां स्वकण्ठे दिशतु गुरुरिमां संवहन् सन्मतिं मे ॥ १६ ॥

श्रीः

श्रीनिवासो विजयते

महामहोपाध्याय, विद्यामार्तण्ड, मध्वसिद्धान्तभूषण श्रीमुष्णं व्याकरणं

# श्रीसेतुमाधवाचार्याणां स्तुतिः



लक्ष्मीलीलाकटाक्षोत्पलसुमनिकराबद्धमुग्धाश्ववक्त्र-
प्रत्यक्षोद्भूतमोदाऽतिशयजलधिसंमग्नशुद्धात्मनां यः ।
वंशे हंसोत्तमैः सद्गृहिभिरपि बुधैस्सेवितानां गुरूणां
आर्याचार्याभिधानां जयति वरजनिः श्रीगुरुर्मौक्तिकाभः ॥ १ ॥

शाब्दी विद्याऽनवद्या प्रतिदिनमुदिता यन्मुखोच्चोदयाद्रेः
शिष्यौघस्वान्तदर्याश्रितमपि तिमिरं लीलयैवाशु भित्त्वा ।
नित्यं विष्णोः पदं चामलमतिविततं भासयन्ती जयन्ती
राजत्यद्याप्यवार्या तरणिघृणिरिव श्रीगुरुं तं समीडे ॥ २ ॥

मह्यां सन्ति बुधाः परश्शतमहो नैवाभिजातास्तु ते
सन्त्यन्येप्यबुधा महाकुलभवा हीत्थं सतां मानसे ।
यद्दुःखं महदद्य यं वरकुलोत्पन्नं बुधाग्रेसरं
दृष्ट्वैवापगतं स मे विजयते सर्वाभिनन्द्यो गुरुः ॥ ३ ॥

सद्वंशप्रभवत्व - शास्त्रविमलप्रज्ञाप्रवक्तृत्व - सद्-
धर्माचार - दयाक्षमाशमदम - श्रीकान्तभक्त्यादयः ।
शोभन्ते सुगुणाः परस्परमहो प्राप्ता महासौहृदं
यस्मिन्नेव गुरुस्स मे गुणनिधिः भूतिं तनोत्वन्वहम् ॥ ४ ॥

पाण्डित्यं किल यत्नतोऽपि बहुलं प्रायो भवेद्धि नृणां
जातानां न कदापि सत्कुलभवत्वं स्याद्धि यत्नोच्चयैः ।
सौवर्णस्य सुमस्य सौरभमिव श्लाघ्यं कुलीनस्य सद्-
विद्येत्युक्तिरियं समुल्लसति यं प्राप्यैव तं सन्नुमः ॥ ५ ॥

श्रीमत्पावनपावनागमततिव्याख्यानधारामृतं
पायंपायमपि प्रमोदभरिताः शिष्याश्चकोरा इव ।
चित्रं नो विरमन्ति यस्य वदनादिन्दोश्च्युतं निर्मलात्
सोऽयं मे गुरुराट् सदागमपरिज्ञानाय भूयात्सदा ॥ ६ ॥

आर्याचार्यमहान्ववायकलशाम्भोराशिराकापतेः
भेर्यारावनिघुष्टसर्वबुधसंमान्याखिलेक्षानिधेः ।
विद्वत्केसरिसुब्बरायसुगुरोः सूनुस्सुधीस्तत्समः
शिष्टाग्र्यो भुवि सेतुमाधवबुधो जेजीयतां सन्ततम् ॥ ७ ॥

श्रीतञ्जानगरान्तिके शुचितमे सह्याद्रिजायास्तटे
क्षेत्रे पञ्चनदाभिधे वसुमतीहारेऽग्रहारे शुभे ।
जातः श्रीविजयोदरादिव मुदे पूर्वाचलाच्चन्द्रमाः
नित्यं चन्द्रिकया सुतर्पितजनो जीयाच्चिरं मे गुरुः ॥ ८ ॥

शास्त्रं सर्वमधीत्य तातचरणात् संमानितः पण्डितैः
आस्ते शिष्यकृपार्णवः पदकलोपाध्यायवर्यश्चिरात् ।
श्रीमच्छ्रीपदपत्तने त्विह लसच्छ्रीवेङ्कटाधीश्वर-
द्रव्यस्थापितसंस्कृतोत्तमकलाशालां समुद्भासयन् ॥ ९ ॥

शाब्दं षट्त्रिंशदब्दानखिलमपि महाभाष्यमुख्यं सुशास्त्रं
निस्सन्देहं रहस्यामितसरसलसत्संप्रदायार्थयोगैः ।
अध्याप्यानेकशिष्यान् प्रति सममकरोद्विश्वविद्यालयेऽसौ
उत्तीर्णान् यः परीक्षास्वयमिह गुरुराड्राजतां सूरिवर्यः ॥ १० ॥

यस्य श्रीतातपादैरभिनवमतुलं दुर्लभं शब्दशास्त्रं
कौशेयं दक्षिणस्या व्यरचि शुभतमाच्छादनं सर्वगात्रे ।
तत्पुत्रेणामुनाऽद्याखिलहरिदबलासुन्दराङ्गाणि चित्रं
तत्तुल्यैरुच्चमूल्यैर्विततबहुपदैरंशुकैर्मण्डितानि ॥ ११ ॥

येनैवेयं हि शाला सुपदकृतमहौन्नत्यमाप्ता विशाला
यस्याकृष्टा गुणौघैर्जरठमपि पतिं यं प्रियं मन्यते स्म ।
यत्संबन्धातुरैवाऽदिशदपि भगिनीं यस्य शिष्याय यूने
सोऽयं श्रेयो विदध्यात् सुगुणमणिखनिः सन्ततं श्रीगुरुर्मे ॥ १२ ॥

शाब्दी भूषणसारसुन्दरतरा सच्छेखरालङ्कृता
सद्भाष्या च मनोरमावृतवपुः श्रीशब्दरत्नोज्ज्वला ।
मञ्जूषार्थयुता च यस्य वदने रङ्गे स्फुरन्ती रसात्
नृत्यन्ती तनुते नटीव मुदितान् विद्यार्थिसामाजिकान् ॥ १३ ॥

पृथ्वीमण्डलवर्तिपण्डितवरप्रज्ञासुवर्णोच्चिता
सन्निर्णायकबुद्धिशाणलसितैः यः श्लाघितः सन्ततम् ।
सत्यध्यानगुरूत्तमैः प्रतिसभं संमानितो मोदतः
तं विद्वद्वरसेतुमाधवगुरुं वन्दामहे श्रेयसे ॥ १४ ॥

सौजन्यं शुचितां दयां नियमने विद्यार्थिनां दक्षतां
कार्याणां च विवेचने निपुणतां ज्ञात्वा यदीयां मुहुः ।
शालाध्यक्षवरश्चकार कुरुते यं स्वीयभारोद्वहं
नैपुण्यं कवितापथे दिशतु मे सोऽयं कवीन्द्रो गुरुः ॥ १५ ॥

यस्संप्रीणयते सुशाब्दवचनैर्विद्यार्थिनस्सादरं
मिष्टान्नैरतिथीन् सदोचितधनैर्दीनान् बुधान् विद्यया ।
भक्त्या पूजनया च वेङ्कटपतिं श्रीमध्वशास्त्रोक्तिभिः
श्रीव्यासं मम सेतुमाधवगुरुः पुष्णातु विद्यां पराम् ॥ १६ ॥

श्रीमुष्णाभिधसंप्रदायवरसद्धर्मव्यवस्थापकः
श्रीमुष्णोपपदः सुधीनुतमतिः श्रीसुब्बरायार्यतः ।
आत्रेयाह्वयगोत्रदुग्धजलधेः जातः कलेशः परात्
अस्मै श्रीगुरवे परश्शतमसावायुर्दिशत्वच्युतः ॥ १७ ॥

इत्थं सर्वजनानुभूतिविषयैस्सञ्चोदितस्सद्गुणैः
नित्यं तद्गुरुभावनो गिरिधरस्तौति प्रियः कौतुकात् ।
अस्मद्देशिकहृन्निवास्यमितधीचित्ताब्जगः श्रीपतिः
सुप्रीतो भवतु श्रियं च पठतामायुर्धियं यच्छतु ॥ १८ ॥

श्रीसेतुमाधवगुरोर्गुणमणिमाला कुतूहलाद्रचिता ।
गिरिधरनाम्ना कविना कदळीकन्दान्ववायजनितेन ॥ १९ ॥
श्रीवेङ्कटेशविद्याशालासाहित्यपण्डितेनैषा ।
श्रीश्रीनिवासबुधवरतनयेन सतां चिराय भवतु शिवम् ॥ २० ॥

इति श्रीपद्पुरी ( तिरुपति ) विराजमान श्रीवेङ्कटेश्वरसंस्कृतमहाकलाशालायां
साहित्यप्रधानाध्यापकेन द्वैतवेदान्तनिष्णातेन कदलीकन्दान्वयजेन
श्रीनिवासाचार्यपुत्रेण गिरिधराचार्येण रचितेयं
गुरोर्गुणमणिमाला ॥

श्रीकृष्णार्पणमस्तु